Digitized by Arya Samaj Foundation Chennai and eGangotri

0
4.2

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३२

# ऐतरेयब्राह्मणम् ।

[ सायणभाष्यसमेतम् ]

तस्य पञ्चम्यादिपञ्चिकाचतुष्टयमितो द्वितीयो भागः ।

तृतीयावृत्तिः, ख्रिस्ताब्दाः १९७७

मूल्यं—पञ्चात्रिंशद्रूप्यकाः।

( रु. ३५-०० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ३२

# ऐतरेयब्राह्मणम् ।

श्रीमत्सायणाचार्यविरचितभाष्यसमेतम् ।

( तत्र पञ्चम्यादिपञ्चिकाचतुष्टयमितो द्वितीयो भागः ) ।

एतत्पुस्तकं वे० शा० काशीनाथशास्त्री आगाशे इत्येतैः संशोधितम् ।

तच्च

एम्. ए. इत्युपपदधारीभिः कार्यकारीविश्वस्तैः

श्रीमान् गणपतराव यादवराव नातू

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।



तृतीयेयमङ्कनावृत्तिः ।

शालिवाहनशकाब्दाः १८९९

खिस्ताब्दाः १९७७

( अस्य सर्वेऽधिकारा राजशासनानुसारेण स्वायत्तीकृताः )

मूल्यं-पञ्चात्रिंशद्रूप्यकाः । ( रु. ३५-०० )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ पञ्चम्याद्यन्तिमपञ्चिकाचतुष्टयान्तर्गत-विषयानुक्रमः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri




CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri




---

त्रिंशोऽध्यायः।





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





---

## एकत्रिंशोऽध्यायः ।



---

## द्वात्रिंशोऽध्यायः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri




---

त्रयस्त्रिंशोऽध्यायः।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





---

सप्तत्रिंशोऽध्यायः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





## अष्टात्रिंशोऽध्यायः ।



## एकोनचत्वारिंशोऽध्यायः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri





परिसमाप्तिमगमदयं विषयानुक्रमः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ पञ्चमपञ्चिकाप्रारम्भः ।

## एकविंशोऽध्यायः ।

भिन्नान्याहुर्देवतास्तोमसामच्छन्दांस्यह्नस्तस्य तस्यापि षण्णाम् ।
विद्वद्वाक्यादुत्तरं स्यात्समानं स्वान्स्वाँल्लोकांस्त्रिस्त्रिकोणेष्वहःसु ॥ १ ॥
सिद्धानि शस्त्राणि षडेव हौत्राण्याज्येन सूक्तं प्रउगे तृचाश्च ।
मरुत्वतीये प्रतिपत्तृचौ च धाय्याः प्रगाथाश्च तथैव सूक्तम् ॥ २ ॥
निष्केवल्ये स्तोत्रियः पृष्ठयोनिर्योनिस्थाने स्वस्वसाम प्रगाथः ।
तार्क्ष्यात्सूक्तात्पूर्वमन्ये तु नित्ये स्वात्स्वात्सूक्ताज्जातवेदस्यमन्यत् ।
छन्दोगानां वैश्वदेवात्पुरस्तादायाहीमावृश्चसूक्तानि चैव ॥ ३ ॥
राथंतरमधुर्यं स्याद्बृहत्सामेतरद्भवेत् ।
वैरूप्या(पा)दि द्वितीयं स्यात्तृतीयादिष्वनुक्रमात् ॥ ४ ॥
अथैन्द्रपूर्वो निहवः प्रगाथो धाय्याश्च तार्क्ष्यं च समानमह्नाम् ।
स्वात्स्वात्तथा जातवेदस्यमग्र्यं छन्दोम आद्यरूपहस्तृतीयः ॥ ५ ॥

अथ द्वादशाहान्तर्गतस्य नवरात्रस्य तृतीयमहर्निरूपयति—

विश्वे वै देवा देवतास्तृतीयमहर्वहन्ति सप्तदशः
स्तोमो वैरूपं साम जगती छन्दः, इति ।

देवतासु मध्ये विश्वे देवाः स्तोमानां मध्ये सप्तदशः साम्नां मध्ये वैरूपं छन्दसां मध्ये जगती तान्येतानि तृतीयस्याह्नो निर्वाहकाणि । यद्यपि पृष्ठ्ये षडहे प्रथमतृतीयपञ्चमान्यहानि राथंतराणि द्वितीयचतुर्थषष्ठान्यहानि बार्हतानि तथाऽपि रथंतरबृहत्सामसंबन्धः साधारणे(णो) वैरूपादिसामसंबन्धे(न्धो) विशेषस्तृतीयेऽहनि । सत्यपि रथंतरपृष्ठे वैरूपं साम द्वितीयत्वेन प्रयुज्यते । अतो वैरूपस्यैतस्मिन्नहन्यसाधारणत्वान्निर्वाहकत्वमुच्यते ।

वेदनं प्रशंसति—

यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं
राध्नोति य एवं वेद, इति ।

उक्तदेवतादीनां वेदितैतान्य[न]तिक्रम्य तत्प्रसादेन समृद्धो भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एतस्याह्नः संबन्धिषु मन्त्रेषु पूर्ववल्लिङ्गानि निरूपयति—

यद्वै समानोदर्कं तत्तृतीयस्याह्नो रूपं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यात्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितो यद्वैरूपं यज्जागतं यत्कृतमेतानि वै तृतीयस्याह्नो रूपाणि, इति।

उदर्कः समाप्तिः। समान उदर्कस्तुल्या समाप्तिर्यस्य मन्त्रभागस्य तत्समानोदर्कम्। तादृशं यदेवास्ति तत्तृतीयस्याह्नो रूपं निरूपकं लिङ्गमित्यर्थः। अश्वशब्दोपेतमश्ववत्। अन्तशब्दोपेतमन्तवत्। पठितस्यैव पुनः पाठः पुनरावृत्तम्। पुनरपि नितरां वृ(नृ)त्तं व(न)र्तनं पुनर्निनृत्तम्। स्वरविशेषेणाक्षराणां पुनः पुनरावर्तनेन वा नर्तनसादृश्यम्। पुनरावृत्तं पठितस्यैव पादस्याऽऽवृत्तिः। अत्र तु स्वराक्षरमात्ररयेति विशेषः। रतवदिति धात्वर्थमात्रमत्र विवक्ष्यते। पर्यस्तवदिति पर्यासशब्दवत्त्रिवदिति त्रिशब्दोपेतम्। अन्तरूपमिति, अन्तशब्दोपेतम्। पूर्वमुक्तस्यैवायमनुवादः। अथवा पुनर्वचनं प्राधान्यप्रतिपादनार्थं तदीयार्थपरिग्रहार्थं वा। उत्तमे पादे देवताया अभिधानं स्वर्गलोकस्य कथनं वैरूपसामसंबन्धित्वं जगतीछन्दःसंबन्धित्वं भूतार्थप्रत्ययोपेतः करोतिधातुर्धातुमात्रं वा। एतानि सर्वाणि तृतीयस्याह्नो रूपाणि।

इदानीमाज्यशस्त्रं विधत्ते—

युक्ष्वा हि देवहूतमाँ अश्वाँ अग्ने रथीरिवेति तृतीयस्याह्न आज्यं भवति, इति।

तदेतच्छस्त्रं प्रशंसितुमाख्यायिकामाह—

देवा वै तृतीयेनाह्ना स्वर्गं लोकमायंस्तानसुरा रक्षांस्यन्ववारयन्त ते विरूपा भवत विरूपा भवतेति भवन्त आयंस्ते यद्विरूपा भवत विरूपा भवतेति भवन्त आयंस्तद्वैरूपं सामाभवत्तद्वैरूपस्य वैरूपत्वम्, इति।

युक्ष्वा हि देवहूतमान्० —८-७५-१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदा देवास्तृतीयमहरनुष्ठाय तेन स्वर्गं लोकं गतास्तदानीमसुरा रक्षांसि च तान्देवाननुगम्य स्वर्गप्रवेशो यथा न भवति तथाऽवारयन्त निवारितवन्तः । ततस्ते देवास्तानसुरान्प्रति विरूपा विरुद्धरूपोपेता भवतेति शपित्वा भवन्तः स्वेन रूपेणैवाऽऽविर्भवन्त आयन्स्वर्गं प्रत्यागच्छन् । विरूपा भवतेति वीप्सा सर्वदेवोक्तिद्योतनार्थाऽसुरशापेऽत्यन्तमादरार्था वा । ते देवा यस्मात्कारणादसुरान्प्रति विरूपत्वशापं दत्तवन्तस्तस्मादसुराणां तद्विरुद्धं रूपं वैरूपाख्यं सामाभवत् । विरूपोक्तिसंबन्धादेव तस्य वैरूपं नाम संपन्नम् ।

उक्तार्थवेदनं प्रशंसति—

विरूपः पाप्मना भूत्वा पाप्मा-
नमपहते य एवं वेद, इति ।

वेदिता पूर्वं केनचित्पाप्मना विरुद्धरूपयुक्तो भूत्वाऽपि पश्चाद्वेदनसामर्थ्याचं पाप्मानमपहते विनाशयति ।

प्रासङ्गिकं वैरूपशब्दनिर्वचनं कृत्वा प्राकृतमेवोपाख्यानशेषमाह—

तान्ह स्मान्वेवाऽऽगच्छन्ति समेव सृज्यन्ते
तानश्वा भूत्वा पद्भिरपाघ्नत यदश्वा भूत्वा
पद्भिरपाघ्नत तदश्वानामश्वत्वम्, इति ।

देवशापात्कुरूपत्वं प्राप्ता असुराः पुनरपि तान्देवाननु पश्चादागच्छन्त्येव नतु परित्यजन्ति । आगत्य च देवैः संसृज्यन्त एव न तु दूरे तिष्ठन्ति । तदानीं देवाः सर्वेऽप्यश्वरूपधारिणो भूत्वा पृष्ठत आगतानसुरान्पद्भिरपाघ्नत स्वकीयपादताडनैर्हतवन्तः । यस्मादेवमश्वा भूत्वा पद्भिर्हतवन्तस्तस्माल्लोकेऽपि पादताडनकुशलानां चतुष्पदामश्वनाम संपन्नम् ।

उक्तार्थवेदनं प्रशंसति—

अश्नुते यद्यत्कामयते य एवं वेद, इति ।

देवैरश्ववेषकृतं व्यापारमिदानींतनेष्वश्वेषु दर्शयति—

तस्मादश्वः पशूनां जविष्ठस्तस्मा-
दश्वः प्रत्यङ् पदा हिनास्ति, इति ।

यस्मादश्वरूपैर्देवैर्वेगेन गमनं पद्भिस्ताडनं चाऽऽचरितं तस्माल्लोकेऽपि

१ क. ख. झ. ट. 'रूपत्वं ना' ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पशूनां मध्येऽश्वोऽत्यन्तं वेगवान् । तस्मादु तस्मादेव कारणाल्लौकिकोऽश्वः प्रत्यङ्पृष्ठतः पादेन पुरुषं हिनस्ति ताडयति ।

उक्तार्थवेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद, इति ।

युक्ष्वा हीति सूक्तं प्रशस्याऽऽज्यविधिं निगमयति—

तस्मादेतदश्ववदाज्यं भवति तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

यस्मादश्वस्येदृशो महिमा तस्मादश्ववदश्वशब्दोपेतं युक्ष्वा हीति सूक्तं तृतीयेऽहन्याज्यशस्त्रं भवति । यदश्ववदिति पूर्वं लक्षणस्योक्तत्वादिदमश्वशब्दोपेतं सूक्तं तृतीयस्याह्नो रूपकम् ।

अथ प्रउगशस्त्रं विधत्ते—

वायवायाहि वीतये वायो याहि शिवा दिव इन्द्रश्च वायवेषां सुतानामा मित्रे वरुणे वयमश्विनावेह गच्छतमा याह्यद्रिभिः सुतं सजूर्विश्वेभिर्देवेभिरुत नः प्रिया प्रियास्वित्यौष्णिहं प्रउगं समानोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

वायवायाहि वीतय इत्येका । वायो याहि शिवा दिव इत्यादिके द्वे ऋचौ मिलित्वा सोऽयमेकस्तृचः । इन्द्रश्च वायवेषां सुतानामित्यादिके द्वे ऋचौ । तृचत्वसंपादनाय तयोरन्यतरा द्विरावर्तनीया । आ मित्रे वरुणे वयमित्यादिकस्तृचोऽश्विनावेह गच्छतमित्यादिकस्तृच आ याह्यद्रिभिः सुतमित्यादिकस्तृचः सजूर्विश्वेभिर्देवेभिरित्यादिकस्तृच उत नः प्रिया प्रियास्वित्यादिकस्तृचस्त एते सप्त तृचा उष्णिक्छन्दस्कास्तत्सर्वमौष्णिहं प्रउगशस्त्रं कुर्यात् । तत्र समानोदर्कत्वं तृतीयस्याह्नो लिङ्गम् । आ मित्रे वरुण इति सूक्ते तिसृष्वप्यृक्षु निवर्हिषीत्यादिकोऽन्तिमः पाद एक एव । अश्विनावेहेति सूक्तेऽपि हंसावि-

वायवायाहि वीतये०—५–५१–५ । वायो याहि शिवा०—८–२६–२३ । इन्द्रश्च वायवेषां०—४–४७–२ । आ मित्रे वरुणे०—५–७२–१ । अश्विनावेह गच्छतं०–५–७८–१ । आ याह्यद्रिभिः सुतं०—५–४०–१ । सजूर्विश्वेभिर्देवेभिः०—५–५१–८ । उत नः प्रिया प्रियासु०—६–६१–१० ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वेत्यादिकोऽन्तिमः पाद एक एव । आ याहीति सूक्तेऽपि वृषन्निन्द्रेत्यन्तिमः पाद एक एव । सजूर्विश्वेभिरिति तृचेऽस्या याह्यग्न इत्यन्तिमः पाद एक एव । एवं कतिपयेषु समानोदर्कत्वं लिङ्गम् ।

अथ मरुत्वतीयशस्त्रस्य तृचद्वयं विधत्ते—

तं तमिद्राधसे महे त्रय इन्द्रस्य सोमा इति मरुत्वतीयस्य प्रतिपदनुचरौ निनृत्तवात्त्रिव-त्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

तं तमित्यादिकस्तृचो मरुत्वतीयशस्त्रस्य प्रतिपत् । तस्योपक्रमे तं तमिद्द्वि-रावृत्तः शब्दो नृत्तगततालानुकरणसदृशोऽन्ते च कृष्टीनां नृतुरिति नर्तनवाची शब्दः श्रूयते । तदिदं निनृत्तवल्लिङ्गम् । त्रय इन्द्रस्येत्ययमनुचरस्तृचः । तस्याऽऽदौ त्रिशब्दश्रवणादिदं त्रिवल्लिङ्गम् ।

अथ प्रगाथद्वयं विधत्ते—

इन्द्र नेदीय एदिहीत्यच्युतः प्रगाथः प्र नूनं ब्रह्मणस्पतिरिति ब्राह्मणस्पत्यो निनृत्तवां-स्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

इन्द्र नेदीय इति प्रगाथस्य पूर्वयोरप्यह्नोर्विहितत्वादच्युतत्वम् । अथ प्रग्र-थनेन तृचत्वं संपादयितुं चतुर्थः पादः षष्ठः पादश्च त्रिस्त्रिरभ्यस्यते । तस्य नृत्तसमानत्वादयं प्रगाथो निनृत्तलिङ्गवान् । एवं ब्राह्मणस्पत्यप्रगाथेऽपि द्रष्टव्यम् । यद्वा यस्मिन्निन्द्रो वरुणो मित्रो अर्यमेत्योकारस्य त्रिरभ्यासो नृत्तसमानः ।

अन्यास्तिस्र ऋचो विधत्ते—

अग्निर्नेता त्वं सोम क्रतुभिः पिन्व-न्त्यप इति धाय्या अच्युताः, इति ।

यद्यप्यच्युतत्वं द्वितीयस्याह्नो लिङ्गं तथाऽप्यत्र वाचनिकः प्रयोगो द्रष्टव्यः ।

---

तं तमिद्राधसे०—८–६८-७ । त्रय इन्द्रस्य सोमाः०—८–२–७ । इन्द्र नेदीय एदिहि०—८-५३-५ । प्र नूनं ब्रह्मणस्पतिः०— १–४०–५ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथान्यं प्रगाथं विधत्ते —

नकिः सुदासो रथं पर्यास न रीरमदिति
मरुत्वतीयः प्रगाथः पर्यस्तवांस्तृतीयेऽहनि
तृतीयस्याह्नो रूपम्, इति ।

त( अ )स्मिन्प्रगाथे यस्य मरुत इति तृतीयपादे श्रवणादयं मरुत्वतीयः । अत्र पर्यासेति श्रुतत्वादयं पर्यस्तलिङ्गवान् ।

सूक्तान्तरं विधत्ते—

त्र्यर्यमा मनुषो देवतातेति सूक्तं त्रिव-
त्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

आदौ त्रिशब्दस्य श्रुतत्वात्त्रिवलिङ्गयुक्तमिदं सूक्तम् ।

अथ निष्केवल्यशस्त्रे स्तोत्रियानुरूपौ प्रगाथौ विधत्ते—

यद्द्याव इन्द्र ते शतं यदिन्द्र यावतस्त्व-
मिति वैरूपं पृष्ठं भवति राथंतरेऽहानि
तृतीयेऽहानि तृतीयस्याह्नो रूपम्, इति ।

वैरूपसाम्ना निष्पाद्यं तृतीयेऽहनि पृष्ठस्तोत्रं तस्य च साम्न आधारभूतो यद्द्याव इति प्रगाथः स्तोत्रियो यदिन्द्रेति प्रगाथोऽनुरूपस्तदुभयं रथंतर॰सामसंबन्धीनि तृतीयेऽहनि युक्त(क्तं) प्रथमतृतीयपञ्चमान्यहानि राथंतराणि रथंतरसाम्ना पृष्ठस्तोत्रस्य गातव्यत्वात् । वैरूपसाम्नाऽप्यत्र पृष्ठस्तोत्रं गातव्यम् । वैरूपशाक्वरयो रथंतरपुत्रत्वेन तदीयेऽहनि युक्तत्वात् । तस्मात्तृतीयेऽहन्येतत्प्रगाथद्वयं शंसनीयम् । वैरूपसामसंबन्धस्य तृतीयदिवसलिङ्गस्य विद्यमानत्वात् ।

ऋगन्तरं विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

सर्वेष्वहःसु(स्व)च्युतत्वं सर्वस्याप्यह्नो लिङ्गं भवतीति तृतीयेऽहन्यपि तद्युक्तम् ।

---

नकिः सुदासो रथं०—७—३२—१० । त्र्यर्यमा मनुषो देव०— ९—२९—१ ।
यद्द्याव इन्द्र ते शतं०—८—७०—९ । यदिन्द्र यावतस्त्वं०—७—३२—१८ ।
यद्वावान पुरुतमं०—१०—७२—६ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपरं प्रगाथद्वयं विधत्ते—

अभि त्वा शूर नोनुम इति रथंतरस्य योनि-
मनु निवर्तयति राथंतरं ह्येतदहरायतनेन, इति ।

अभि त्वा शूरेत्येषा रथंतरसाम्नो योनिस्तां पूर्वोक्ताया धाय्याया अनु पश्चान्निवर्तयति । शंसेदित्यर्थः । एतच्च तृतीयमहरायतनेन स्थानेन राथंतरमयुग्मानामह्नां रथंतरसंबन्धित्वात् ।

अथान्यं प्रगाथं विधत्ते—

इन्द्र त्रिधातु शरणमिति सामप्रगाथस्त्रिवां-
स्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

अत्रत्यस्य वैरूपसाम्नः संबन्धीन्द्र त्रिधात्विति प्रगाथः । स च त्रिशब्दयुक्तत्वात्त्रिवान् । अतो लिङ्गसद्भावात्तृतीयेऽहनि योग्यः ।

सूक्तान्तरं विधत्ते—

त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ १ ॥ इति ।

तार्क्ष्यनाम्नः सूक्तविशेषस्याच्युतत्वं सर्वदिनसंबन्धि लिङ्गम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकविंशाध्याये प्रथमः खण्डः ॥ १ ॥ [ १५४ ] ।

---

अथ निविद्धानीयं सूक्तं विधत्ते—

यो जात एव प्रथमो मनस्वानिति सूक्तं समा-
नोदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

अस्मिन्सूक्ते नृम्णस्य मह्ना स जनास इन्द्र इत्यन्तिमः पादः सर्वास्वृक्षु समानस्तस्मादिदं सूक्तं समानोदर्कलिङ्गोपेतम् ।

एतत्सूक्तं प्रशंसति—

तद्धु सजनीयमेतद्वा इन्द्रस्येन्द्रियं यत्सजनीयमे-
तस्मिन्वै शस्यमान इन्द्रमिन्द्रियमाविशति, इति ।

तद्धु तच्च सूक्तं सजनीयं सजनशब्दोपेतम् । स जनास इन्द्र इति श्रुतत्वात् ।

---

अभि त्वा शूर नोनुमः०—७–३२–२२– । इन्द्र त्रिधातु शरणं०–६–४६–९ । त्यमू षु वाजिनं०–१०—१७८–१ । यो जात एव प्रथमो०—२–१२–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बहुजनयुक्तत्वमेवैकमुत्कर्षकारणम् । किंच यत्सजनीयं सूक्तमस्ति, एतदेवेन्द्रस्येन्द्रियमुच्यते । कथं तदुच्यते । पुरा कदाचिदेतस्मिन्नेव सूक्ते शस्यमाने सतीन्द्रियं चक्षुरादिपाटवमिन्द्रं देवमाविशति । तस्मादिन्द्रियप्रवेशे हेतुत्वादिदं प्रशस्तम् ।

शाखान्तराध्येतृप्रसिद्ध्या प्रशंसति —

तद्धाप्याहुश्छन्दोगास्तृतीयेऽहानि बह्वृचा इन्द्रस्येन्द्रियं शंसन्तीति, इति ।

तद्ध तस्मिन्नेव सजनीयसूक्ते छन्दोगाश्छन्दांसि गायन्तीति सामवेदिनः परस्परमेवमाहुः—पृष्ठ्यस्य षडहस्य तृतीयेऽहनि बह्वृचा ऋग्वेदाध्यायिनो होतार इन्द्रस्य संबन्धीन्द्रियरूपं सजनीयसूक्तं शंसन्तीति । अतोऽस्य सूक्तस्येन्द्रियपदत्वप्रसिद्धिर्महती ।

ऋषिसंबन्धमुपजीव्य प्रशंसति—

तदु गार्त्समदमेतेन वै गृत्समद इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोकमजयत, इति ।

गृत्समदो नाम कश्चिदृषिस्तेन दृष्टत्वादिदं सूक्तं गार्त्समदम् । कथमिति तदुच्यते । एतेनैव सजनीयसूक्तेन गृत्समदाख्यो महर्षिरिन्द्रं तोषयित्वा तस्येन्द्रस्य प्रियं स्थानं प्राप्य ततः स तेनेन्द्रेणानुगृहीत उत्तमं लोकं जितवान् ।

वेदनं प्रशंसति—

उपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद, इति ।

वैश्वदेवशस्त्रस्य तृचद्वयं विधत्ते—

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहानि तृतीयेऽहानि तृतीयस्याह्नो रूपम्, इति ।

[1] तत्सवितुरिति तृचः प्रतिपत्स च रथंतरसामसंबन्धी । अद्या नो देव सवितरित्यनुचरस्तदेतदुभयं रथंतरसंबन्धिन्यस्मिन्योग्यम् ।

---

[1] तत्सवितुर्वृणीमहे०—५–८२–१ । अद्या नो देव सवितः०—५–८२–४ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सवितृदेवताकं सूक्तान्तरं दर्शयति—

तद्देवस्य सवितुर्वार्यं महादिति सावित्रम्, इति ।

तदेकं सावित्रं सवितृदेवताकम् । तत्र हि सवितुर्देवस्य संबन्धि वार्यं वरणीयं महदधिकं तेज इत्ययमर्थः श्रूयते । अतः सवितृसंबन्धश्रवणात्सावित्रम् ।

पूर्वत्र तृचे रथंतरसंबन्धरूपं लिङ्गमुक्तम् । अत्र तु लिङ्गान्तरं दर्शयति—

अन्तो वै महदन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

अत्र प्रथमपादे महच्छब्दोऽस्ति । महच्च वस्तु काम्यमानानां वस्तूनामन्तो भवति । न खलु महतोऽप्यधिकं केनचित्कचित्किंचिदधिकं काम्यते । तादृशस्याभावात् । तस्मान्महद्वस्त्वेवान्तो भवति । इदं च तृतीयमहः प्रथमस्य त्र्यहस्यान्तः । अतोऽन्तत्वसाम्यात्तृतीयेऽहनि तद्देवस्येत्यादिकं योग्यम् । यद्यप्यन्तशब्दोऽत्र नास्ति तथाऽप्युक्तरीत्याऽन्तशब्दार्थस्य सद्भावादन्तवल्लिङ्गमस्ति ।

तृचान्तरं विधत्ते—

घृतेन द्यावापृथिवी अभीवृते इति द्यावापृथिवीयं घृतश्रिया घृतपृचा घृतावृधेति पुनरावृत्तं पुनर्निनृत्तं तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

द्यावापृथिवीदेवताकत्वं विस्पष्टम् । घृतश्रियेत्यादिर्द्वितीयः पादस्तत्र घृतशब्दस्य पुनः पुनरावृत्तिरेकं लिङ्गम् । तया चाऽऽवृत्त्या नृत्तगततालानुकरणप्रतीतेः पुनर्निनृत्तं लिङ्गान्तरम् ।

ऋभुदेवताकं सूक्तान्तरं विधत्ते—

अनश्वो जातो अनभीशुरुक्थ्य इत्यार्भवं रथस्त्रिचक्र इति त्रिवत्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

द्वितीयस्या ऋचश्चतुर्थपाद ऋभवो वेदयामसीति श्रवणादृभुदेवताकत्वम् । प्रथमाया ऋचो द्वितीयपादे रथस्त्रिचक्र इति त्रिशब्दोपेतं लिङ्गम् ।

---

तद्देवस्य सवितुर्वार्यं०—४—५३—१ । घृतेन द्यावापृथिवी ४—६—७०—४ ।
अनश्वो जातो अनभीशुः०—४—३६—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बहुदेवताकं सूक्तान्तरं विधत्ते—

परावतो ये दिधिषन्त आप्यमिति वैश्वदेवमन्तो वै परावतोऽन्तस्तृतीयमहस्तृतीयेऽहानि तृतीयस्याह्नो रूपम्, इति ।

द्वितीयस्या ऋचः पूर्वार्धे एवं पठ्यते—विश्वा हि वो नमस्यानि वन्द्या नामानि देवा उत यज्ञियानि व इति । तत्र देवा इति बहुवचनम् । अत्र प्रथमाया ऋचश्चतुर्थपादे देवा आसत इति बहुवचनम् । तेन वैश्वदेवं बहुदेवताकमिदम् । परावत इत्यनेन शब्देन दूरदेशोऽभिधीयते । स च निवासदेशापेक्षयाऽन्तो भवति । तृतीयमहश्च त्र्यहस्यान्तोऽतः पूर्ववदर्थतोऽन्तवल्लिङ्गमस्ति ।

तदेतद्वैश्वदेवसूक्तं प्रशंसति—

तदु गायमेतेन वै गयः प्लातो विश्वेषां देवानां प्रियं धामोपागच्छत्स परमं लोकमजयत, इति ।

तदु तदेतत्सूक्तं गायं गयेन दृष्टम् । प्लतनामकस्य [ऋषेः] पुत्रो गयनामको महर्षिरेतेन परावत इत्यादिसूक्तेन विश्वेषां देवानां प्रियं स्थानं प्राप्य तैरनुगृहीत उत्तमं लोकं जितवान् ।

वेदनं प्रशंसति—

उप विश्वेषां देवानां प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद, इति ।

शस्त्रान्तरस्य प्रतिपत्सूक्तं विधत्ते—

वैश्वानराय धिषणामृतावृध इत्याग्निमारुतस्य प्रतिपदन्तो वै धिषणाऽन्तस्तृतीयमहस्तृतीयेऽहानि तृतीयस्याह्नो रूपम्, इति ।

अत्र धिषणेत्यन्तःकरणवाचकः श्रूयते । अन्तःकरणं च भूम्यादेरन्तं प्राप्तुं शक्नोति । तथा चान्यत्र श्रूयते—'न वा इमामश्वरथो न वाऽश्वतरीरथः सद्यः पर्याप्तुमर्हति' इति । अतः सहसा भूम्याद्यन्तप्राप्तिहेतुत्वाद्धिषणाशब्दोऽन्तस्योपलक्षकः । अन्तस्तृतीयमित्यादि पूर्ववत् ।

---

परावतो ये दिधि०—१०—६३—१ । वैश्वानराय धिषणा०—३—२—१ ।

---

१ ख. ङ. ट. "ति यद्गु" । २ ख. अन्तः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मरुद्देवताकं सूक्तं विधत्ते—

धारावरा मरुतो धृष्ण्वोजस इति मारुतं बह्वभिव्याहृत्यमन्तो वै बह्वन्तस्तृतीयमहस्तृतीयेऽहनि तृतीयस्याह्नो रूपम्, इति ।

मारुतत्वमत्र विस्पष्टम् । बहुविधमभिव्याहृत्यमभिव्याहरणीयं शंसनीयमृग्जातं यस्मिन्सूक्ते तद्बह्वभिव्याहृत्यम् । अत्र हि पञ्चदशर्चः शंसनीया इति बहुत्वम् । बहूनां देवानामभिव्याहरणीयानां विद्यमानत्वाद्बहुत्वम् । तस्य बहुत्वस्यानेकत्वद्वित्वापेक्षयाऽन्तत्वम् । अतोऽन्तवल्लिङ्गमस्ति ।

ऋगन्तरं विधत्ते—

जातवेदसे सुनवाम सोममिति जातवेदस्याऽच्युता, इति ।

अच्युतत्वं सर्वेषामह्नां साधारणं लिङ्गम् ।

जातवेदोदेवताकं सूक्तं विधत्ते—

त्वमग्ने प्रथमो अङ्गिरा ऋषिरिति जातवेदस्यं पुरस्तादुदर्कं तृतीयेऽहनि तृतीयस्याह्नो रूपं त्वं त्वमित्युत्तरं त्र्यहमभिवदति संतत्यै, इति ।

यद्यपि त्वमग्न इत्यग्निरेव देवता प्रतीयते तथाऽप्यसौ जातवेदःशब्दवाच्यो भवति। जातस्य सर्वस्य जगतो वेदित(तृ)त्वात् । तस्मादेतत्सूक्तं जातवेदस्यम् । तच्च पुरस्तादुदर्कम् । उदर्कशब्दोऽवसानवचनः । अवसानं च विच्छेदः । सोऽपि द्विविधः पुरस्तादुपरिष्टाच्च । उपक्रमात्पूर्वं शंसनीयस्याभावादयं पूर्वकालीनो विच्छेदः पुरस्तादुदर्क इत्युच्यते । शंसनादूर्ध्वकालीनो विच्छेद उपरिष्टादुदर्कः । समानोदकत्वं च तृतीयस्याह्नो लिङ्गं युक्तम् । तत्रोपरिष्टादुदर्कसाम्यं सजातीयादिषूदाहृतम् । अत्र पुरस्तादुदर्कसाम्यं लिङ्गत्वेनोदाह्रियते । तथा ह्यस्मिन्सूक्ते सर्वास्वप्यृक्षु त्वमग्न इति पदद्वयं समाम्नातम् । तदिदं समानोदर्कत्वमेकं लिङ्गम् । असकृदभिधानादेव पुनरावृत्तलिङ्गं च वक्तुं शक्यम् । किंच लोके कंचित्पुरुषं संबोध्याभिमुखीकृत्य त्वमिति वदन्ति । एवमत्रा-

---

धारावरा मरुतो०–२–३४–१ । जातवेदसे सुनवाम०–१–९९–१ । त्वमग्ने प्रथमो अङ्गिरा—१–३१–१ ।

---

१ क. ख. झ. ट. °हृत्याभि° ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्युत्तरत्र्यहमाभिमुखीकृत्यैव प्रत्यृचं त्वं त्वमिति शब्दः प्रयुज्यते । तच्च प्रथमद्वितीययोस्त्र्यहयोश्च संतत्यै विच्छेदराहित्याय भवति ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य

एवं विद्वांसो यन्ति ॥२॥ इति ।

ये पुरुषाः प्रत्यृचं त्वंशब्दैः सूचितत्र्यहयोः सांतत्यं विद्वांसोऽनुतिष्ठन्ति ते पुरुषाः संततैः परस्परं संबन्धैरत एव विच्छेदरहितैस्त्र्यहैरनुतिष्ठन्ति । तेषां विघ्नो न भवतीत्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकविंशाध्याये द्वितीयः खण्डः ॥ २ ॥ [१५५] ।

---

द्वादशाहमध्यवर्तिनो नवरात्रस्य त्रयश्च वा एते त्र्यहा इति यत्पूर्वमुक्तं तत्र प्रथमस्त्र्यहोऽभिहितः । स च पृष्ठ्यषडहस्य पूर्वो भागः । अथ तस्योत्तरो भागो नवरात्रे मध्यमस्त्र्यहो वक्तव्यः । तस्मिंश्च यत्प्रथममहस्तन्नवरात्रे चतुर्थमहर्भवति । तत्र शस्त्रक्लृप्तिमुपरिष्टाद्विधास्यते । आदौ तावन्न्यूङ्खो वक्तव्यस्तदर्थं प्रस्तौति—

आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि तृतीयेऽहन्येतदेव तत उच्छिष्यते वागित्येव तदेतदक्षरं त्र्यक्षरं वागित्येकमक्षरमक्षरमिति त्र्यक्षरम्, इति ।

पूर्वोक्तेषु त्र्यहःसु त्रिवृत्पञ्चदशसप्तदशाख्याः स्तोमा आप्यन्ते समाप्ता इत्यर्थः । तथा गायत्रीत्रिष्टुब्जगतीत्येतानि च्छदांस्याप्यन्ते समाप्तानि । तत ऊर्ध्वमेतदेव वक्ष्यमाणमुच्छिष्यते पूर्वमनुक्तत्वादुत्कर्षेणावशिष्यते । तस्यैवावशिष्टस्य वागिति निर्देशः । एवकारस्तु पूर्वोक्तदेवताव्यावृत्त्यर्थः । अग्निर्वै देवता, इन्द्रो वै देवता, विश्वे वै देवा देवतेत्येवं तस्य तस्याह्नो निर्वाहकं देवतात्रयं पूर्वमुक्तत्वान्नावशिष्टम् । वाग्देवता पूर्वमनुक्ताऽवशिष्टा । तस्य वाचकं वागित्येतच्छब्दरूपं तदेतदक्षरं वकारादिवर्णात्मकं पुनरपि त्र्यक्षरं त्रिभिरक्षरैरुपेतम् । कथमेतदिति तदेतत्स्पष्टी क्रियते । वागित्युक्ते सत्येकाक्षरं भवति । वकारगकारा[२]क्षराभ्यां युक्तस्याऽऽकाराक्षरस्यैकत्वात् । तदेवाक्षरमिति वाग्देव-

१ ख. ट. °स्रिप° । २ क. झ. ढ. °राभ्यां ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्तानात्मोच्चार्यमाणं त्र्यक्षरं भवति। अतो वाग्देवताया नामन्येकरूपत्वं त्रिरूपत्वं च संपन्नम् ।

तत्र रूपत्रयसंपत्तौ प्रयोजनमाह—

स एवैष उत्तरस्त्र्यहो वागेकं गौरेकं द्यौरेकम् , इति ।

वाग्देवताया अक्षरशब्देन व्यवहारे सति योऽयमकारादीनां त्रयाणां समूहः स एष एवोत्तरस्त्र्यहश्चतुर्थपञ्चमषष्ठाहरूपोऽभवत् । उत्तरस्याह्नत्रयस्य निर्वाहकं देवतात्रयस्वरूपं संपन्नमित्यर्थः । तत्र लोकत्रयप्रसिद्धा या वाग्देवता तदेकं स्वरूपम्। या च गौर्देवता तद्द्वितीयं स्वरूपम्। याऽपि द्यौर्देवता तत्तृतीयं स्वरूपम् ।

एवं सति किं फलितमित्याशङ्क्य फलितं दर्शयति—

ततो वै वागेव चतुर्थमहर्वहति, इति ।

यस्माद्देवतात्रयं निष्पन्नं ततो वै तस्मादेव कारणाद्वागेव प्रथमदेवता मध्यमत्र्यहस्य प्रथमं नवरात्रापेक्षया चतुर्थमहर्वहति ।

एतस्मिन्नहनि न्यूङ्खं विधत्ते—

तद्यच्चतुर्थमहर्न्यूङ्खयन्त्येतदेव तदक्षरमभ्यायच्छन्त्येतद्वर्धयन्त्येतत्प्रविभावयिषन्ति चतुर्थस्याह्न उद्यत्यै, इति ।

यस्मात्कारणाद्वागेव चतुर्थस्याह्नो निर्वाहिका तस्मात्कारणाद्यदि चतुर्थमहरु(रु)पेता न्यूङ्खयन्ति, ॐ(ओ)कारस्य सूत्रोक्तप्रकारेणोच्चारणविशेषं कुर्युस्तदानीमेतदेव वागित्येतदक्षरं देवताया वाचकमभिलक्ष्याऽऽयच्छन्ति, उद्यमं कुर्वन्ति । न केवलमुद्यमः किं त्वेतदक्षरं वर्धयन्ति । वृद्धिप्रकार एव प्रविभावयिषन्तीत्यनेन स्पष्टी क्रियते । प्रभुत्वं विभुत्वं वाऽक्षरस्य कर्तुमिच्छन्ति । प्रभुत्वं सामर्थ्यम् । विभुत्वं विशालत्वम्। न्यूङ्खस्वरूपमाश्वलायनेन वर्णितम्—'चतुर्थेऽहनि प्रातरनुवाकप्रतिपद्यर्धर्चाद्योर्न्यूङ्खो द्वितीयं स्वरमोकारं त्रिमात्रमुदात्तं त्रिस्तस्य तस्य चोपरिष्टादपरिमितान्पञ्च वाऽर्धौकाराननुदात्तानुत्तमस्य तु त्रीन्पूर्वमक्षरं निहन्यते न्यूङ्ख्यमाने ' इति । अस्यायमर्थः । चतुर्थेऽहनि प्राप्ते सति प्रातरनुवाकस्य येयमृक्प्रथमाऽस्ति तस्या ऋचो यौ द्वावर्धर्चौ तयोरर्धर्चयोर्यावादी तयोराद्योर्न्यूङ्खः कर्तव्यः । नितरामत्यन्तविषमप्रकारेणोङ्खनमुच्चारणं न्यूङ्खः । कथमिति तदेव स्पष्टी क्रियते । आपो रेवतीः क्षयथेति प्रातरनुवाकस्य प्रतिपत् । तस्याः पूर्वार्धस्याऽऽदौ योऽयं द्वितीयः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्वर ओकारः पकारादूर्ध्वभावी तं त्रिमात्रोपेतमुदात्तस्वरयुक्तं त्रिवारमुच्चारयेत्। व एते त्रय ओकाराः संपद्यन्ते। तत्रैकैकस्यौकारस्योपरि पुनरप्योकारा अर्धस्वरूपा ह्रस्वमात्रा अपरिमिताः पञ्च वोच्चारणीयाः। ते चार्धौकाराः सर्वेऽप्यनुदात्ताः। उत्तमस्य तु त्रिमात्रस्यौकारस्योपरि त्रीनर्धौकारानुच्चारयेत्। तेष्वर्धौकारेषु प्रथममक्षरं निहन्यादत्यन्तं नीचस्वरेणानुदात्तं कुर्यादिति। एवं सत्युदात्तास्त्रिमात्रास्त्रय ओकारा अर्धौकारास्त्रयोदशेत्येवमोकाराः षोडश संपद्यन्ते। प्रथमद्वितीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकाराः। द्वितीयतृतीययोस्त्रिमात्रयोर्मध्ये पञ्चानुदात्ता अर्धौकाराः। तृतीयस्य त्रिमात्रस्योपरिष्टादनुदात्ता अर्धौकारास्त्रयः। सोऽयमुच्चारणविशेषो न्यूङ्ख इत्युच्यते। सोऽयं न्यूङ्खश्चतुर्थस्याह्न उद्यत्यै, उद्यमानाय सर्वस्मादुत्कर्षाय भवति।

तमिमं न्यूङ्खं प्रशंसति—

अन्नं वै न्यूङ्खो यदेल(ळ)वा अभिगे-
ष्णाश्चरन्त्यथान्नाद्यं प्रजायते तद्यच्चतुर्थम-
हर्न्यूङ्खयन्त्यन्नमेव तत्प्रजनयन्त्यन्नाद्यस्य
प्रजात्यै तस्माच्चतुर्थमहर्जातवद्भवति, इति।

योऽयमुक्तो न्यूङ्खोऽस्ति तदेतदन्नं वा अन्नसाधनत्वादन्नस्वरूपमेव। कथमेतदिति तदुच्यते। ईळाशब्दोऽन्नवाची। तद्येषां कर्षकाणामस्ति ते कर्षका ईळवाः। ते च वर्षन्तं पर्जन्यमभिलक्ष्य गेष्णा हर्षेण गायन्तो यदा चरन्ति, अथ तदानीमन्नाद्यं प्रजायते। स्वकालवृष्टिसमृद्धिं च दृष्ट्वा कर्षका हृष्यन्ति। हृष्टाश्च गायन्तीति यदस्ति तत्सदृशमिदं चतुर्थेऽहनि न्यूङ्खरूपमुच्चारणम्। अतोऽनेनोच्चारणेनान्नमुत्पादयन्ति। तदेवमन्नाद्यस्य प्रजात्या उत्पादनार्थं संपद्यते। तस्मादन्नप्रजातियुक्तत्वादेव चतुर्थमहर्जातवद्भवति। जातवत्त्वमेतस्मिन्नहनि मन्त्रवत्त्वेनोपरिष्टाद्वक्ष्यते।

न्यूङ्खस्य मन्त्रमध्ये स्थानविशेषं विधत्ते—

चतुरक्षरेण न्यूङ्खयेदित्याहुश्चतुष्पादा
वै पशवः पशूनामवरुद्ध्यै, इति।

मन्त्रे योऽयमादौ चतुरक्षरो भागस्तेन न्यूङ्खयेच्चत्वार्यक्षराण्युच्चार्य तदन्ते यथोक्तं न्यूङ्खं प्रयुञ्ज्यादिति केचिद्याज्ञिका आहुः। चतुःसंख्यया पादचतुष्टयोपेतानां पशूनां प्राप्तिर्भवतीति तदभिप्रायः।

---

१ क. इळश॰। ख. ट. इळश॰। २ ख. इलवाः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पक्षान्तरं विधत्ते —

त्र्यक्षरेण न्यूङ्खयेदित्याहुस्त्रयो वा इमे त्रिवृतो लोका एषामेव लोकानामभिजित्यै, इति ।

पूर्ववद्व्याख्येयम् ।

पक्षद्वयमुक्त्वा तृतीयपक्षं विधत्ते—

एकाक्षरेण न्यूङ्खयेदिति ह स्माऽऽह लाङ्गलायनो ब्रह्मा मौद्गल्य एकाक्षरा वै वागेष वाव संप्रति न्यूङ्खं न्यूङ्खयति य एकाक्षरेण न्यूङ्खयतीति, इति ।

लाङ्गलाख्यस्य महर्षेः पौत्रो लाङ्गलायनः । मुद्गलाख्यस्य पुत्रो मौद्गल्यः । स च ब्रह्मेत्येतन्नामको ब्राह्मणः । स ह्येकमक्षरमुच्चारयेन्न्यूङ्खयेदिति वक्ति । तत्रेयमुपपत्तिः । येयं वागहर्देवतेति पूर्वमुक्ता सेयमेकाक्षरा । तथा सति यः पुमानेकाक्षरेण न्यूङ्खयत्येष एव संप्रति सम्यङ्न्यूङ्खमनुतिष्ठत्यक्षरसंख्याया देवतानुसारित्वादिति तस्य महर्षेरभिप्रायः ।

तदेतत्पक्षत्रयमङ्गीकृत्य स्वाभिप्रेतपक्षं विधत्ते—

द्व्यक्षरेणैव न्यूङ्खयेत्प्रतिष्ठाया एव द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्माद्द्व्यक्षरेणैव न्यूङ्खयेत्, इति ।

एवकारः पूर्वोक्तपक्षत्रयव्यावृत्त्यर्थः । प्रतिष्ठाया एव यजमानस्य प्रतिष्ठाया एव हि द्विसंख्या । द्वाभ्यां पदाभ्यामवस्थितत्वात्पुरुषो द्विप्रतिष्ठः । स्पष्टमन्यत् ।

प्रातरनुवाके विशेषेण स्थानं विधत्ते—

मुखतः प्रातरनुवाके न्यूङ्खयति मुखतो वै प्रजा अन्नमदन्ति मुखत एव तदन्नाद्यस्य यजमानं दधाति, इति ।

प्रातरनुवाके मुखतोऽर्धर्चस्याऽऽदौ द्वितीयस्मिन्नक्षरे न्यूङ्खयेत् । प्रजानां

---

१ क. ख. झ. ट. °ष्ठामेव ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सर्वासां मुखेनैवान्नादनात्। तथा सति यजमानमन्नाद्यस्य मुखत एव समीप एव स्थापयति।

आज्यशस्त्रे स्थानविशेषं विधत्ते—

मध्यत आज्ये न्यूङ्खयति मध्यतो वै प्रजा अन्नं धिनोति मध्यत एव तदन्नाद्यस्य यजमानं दधाति, इति।

मध्यतस्तृतीयपाद इत्यर्थः। तथा चाऽऽश्वलायन आह—'आऽग्निं न स्ववृक्तिभिरित्याज्यं तस्योत्तमावर्जं तृतीयेषु पादेषु न्यूङ्खः' इति। अन्नं हि मध्यभागे धृतम्। तत्र(च) प्रजां धिनोति प्रीणयति। ततस्तत्पाठेनान्नाद्यस्य मध्यतो धारणे यजमानमवस्थापयति।

माध्यंदिने सवने स्थानविशेषं विधत्ते—

मुखतो मध्यंदिने न्यूङ्खयति मुखतो वै प्रजा अन्नमदन्ति मुखत एव तदन्नाद्यस्य यजमानं दधाति, इति।

मुखतोऽर्धर्चादौ। तथा चाऽऽश्वलायनो मरुत्वतीयं निष्केवल्यं च निरूप्य पश्चादिदमाह—श्रुधीहवीयस्य तु तृच आद्येऽर्धर्चादिषु न्यूङ्ख इति।

सवनद्वयगतं न्यूङ्खं प्रशंसति—

तदुभयतो न्यूङ्खं परिगृह्णाति सवनाभ्यामन्नाद्यस्य परिगृहीत्यै ॥ ३ ॥ इति।

उभयतः प्रातःसवने माध्यंदिनसवने च ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकविंशाध्याये तृतीयः खण्डः ॥३॥ [१५६]।

---

चतुर्थमहर्विधत्ते—

वाग्वै देवता चतुर्थमहर्वहत्येकविंशः स्तोमो वैराजं सामानुष्टुप्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद, इति।

पूर्ववद्व्याख्येयम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चतुर्थस्याह्नो गमकानि मन्त्रगतानि लिङ्गानि दर्शयति—

यद्वा एति च प्रेति च तच्चतुर्थस्याह्नो रूपं यद्ध्येव प्रथममहस्तदेतत्पुनर्यच्चतुर्थं युक्तवद्रथवद्यदाशुमद्यात्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितो यज्जातवद्यद्धववद्यच्छुक्रवद्यद्वाचो रूपं यद्वैमदं यद्विरिफितं यद्विच्छन्दा यदूनातिरिक्तं यद्वैराजं यदानुष्टुभं यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै चतुर्थस्याह्नो रूपाणि, इति ।

आकारः प्रशब्दश्चेति यदेवं पूर्वत्र प्रथमस्याह्नो निरूपकमुक्तं तदत्र चतुर्थस्याह्नो निरूपकम् । प्रथमत्र्यहापेक्षया प्रथममहःपूर्वं यदुक्तं तदेतत्पुनरपि मध्यमत्र्यहापेक्षया प्रथममहरुच्यते । अतो नवरात्रापेक्षया चतुर्थम् । तस्य त्र्यहापेक्षया प्रथमत्वात्प्रथमस्याह्नो लिङ्गान्यत्र योग्यानि । तत एव युक्तवदित्यारभ्यायं लोकोऽभ्युदित इत्यन्तानि पूर्वोक्तान्येवाभिहितानि । जातवज्जनिधातुयुक्तम् । हववदिति ह्वयतिधातुयुक्तम् । शुक्रवच्छुक्रशब्दयुक्तम् । वाचो रूपं वाक्प्रतिपादकशब्दयुक्तम् । वैमदं विमदाख्येन महर्षिणा युक्तम् । रिफि(फ)तिधातुः क्लेशार्थे वर्तते । विशेषक्लेशेन न्यूङ्खेनोच्चारितं विरिफितम् । विच्छन्दा विविधच्छन्दसा युक्तम् । तदूनं चातिरिक्तं चोनातिरिक्तम् । अक्षरह्रासवृद्धी इत्यर्थः । वैराजाख्यसामसंबद्धं वैराजम् । अनुष्टुप्छन्दःसंबद्धमानुष्टुभम् । जातवदित्यादीन्यत्र विशेषलिङ्गानि । भविष्यदर्थवाचिप्रत्ययोपेतं धातुरूपं करिष्यदित्युच्यते । अत्र यन्नूतनं यच्च पूर्वोक्तं प्रथमस्याह्नो रूपमस्ति तानि सर्वाण्यपि चतुर्थस्याह्नो निरूपकाणि ।

इदानीमाज्यशस्त्रं विधत्ते—

आऽग्निं न स्ववृक्तिभिरिति चतुर्थस्याह्न आज्यं भवति वैमदं विरिफितं विरिफितस्य ऋषेश्चतुर्थेऽहानि चतुर्थस्याह्नो रूपम्, इति ।

---

आऽग्निं न स्ववृक्तिभिः०–१०–२१–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आऽग्निमित्यादिकं सूक्तं वैमदं विमदाख्येन महर्षिणा दृष्टम्। विरिफितं न्यूङ्खरूपेण विशेषक्लेशेनोच्चारितम्। अत एव विरिफितस्य विशेषक्लेशरूपतया युक्तस्य विमदाख्यस्य महर्षेः संबन्धि। अतो विमदेन दृष्टत्वं विरिफितत्वं चेति लिङ्गद्वयसद्भावाच्चतुर्थेऽहन्येतत्सूक्तं योग्यम्। तस्माच्चतुर्थस्याह्नो निरूपकम्।

ऋक्संख्यां छन्दश्चोपजीव्यं( व्य ) सूक्तं प्रशंसति—

अष्टर्चं पाङ्क्तं पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशूनामवरुद्ध्यै, इति।

ऋक्संख्योत्तरत्रोपयुज्यते। पङ्क्तिच्छन्दोयोगात्पाङ्क्तम्। पूर्वोक्तहविष्पङ्क्त्यादिभिर्यज्ञस्य पाङ्क्तत्वम्। चतुर्भिः पादैर्मुखेन च पञ्चावयवैः पशवः पाङ्क्ताः। तस्मादेतच्छंसनं पशुप्राप्त्यै भवति।

जगतीद्वारा पुनः प्रशंसति—

ता उ दश जगत्यो जगत्प्रातःसवन एष. ऽयह-स्तेन चतुर्थस्याह्नो रूपम्, इति।

ता उ तास्तु सूक्तगता अष्टावृचो दश जगत्यः संपद्यन्ते। कथं संपत्तिरिति तदुच्यते। सूक्तस्याऽऽद्यन्तयोर्ऋचोस्त्रिरावृत्त्या द्वादश पङ्क्तयो भवन्ति। पङ्क्तिश्चैकचत्वारिंशदक्षरा। ततो मिलित्वाऽशीत्यधिकचतुःशताक्षराणि संपद्यन्ते। अष्टाचत्वारिंशदक्षराणां जगतीनां दशसंख्याकानां तावन्त्येवाक्षराणि। एवं जगतीसंपत्तिः। जगतीछन्दोयुक्तं प्रातःसवनं यस्य मध्यमस्य ऽयहस्य सोऽयं जगत्प्रातःसवनः। पूर्वमेव च्छन्दसां विवादो( दे ) जगत्याः प्रातः-सवनस्थानमुक्तम्। अतः प्रातःसवनजगतीसंबन्धश्चतुर्थस्याह्नो निरूपकः।

अनुष्टुप्संबन्धेन प्रशंसति—

ता उ पञ्चदशानुष्टुभ आनुष्टुभं ह्येतदहस्तेन चतुर्थ-स्याह्नो रूपम्, इति।

तास्तु दश जगत्यः पञ्चदशानुष्टुभः संपद्यन्ते। तथा हि—अष्टाचत्वारिंशदक्षरा जगती। द्वात्रिंशदक्षराऽनुष्टुप्। तथा सत्येकैका जगती सार्धानुष्टुब्भवति। अहश्चैतदनुष्टुभः संबन्ध्यनुष्टुभो निर्वाहकत्वस्योक्तत्वात्। तेनेदं सूक्तमनुष्टुब्द्वारा चतुर्थस्याह्नो निरूपकम्।

---

१ ख. °यं जागतः प्रात° । २ क. झ. ट. °गतः प्रातः° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



गायत्रीद्वारा प्रशंसति—

ता उ विंशतिर्गायत्र्यः पुनः प्रायणीयं ह्येतदहस्तेन चतुर्थस्याह्नो रूपम्, इति ।

तास्तु दश जगत्यः पुनरपि प्रत्येकं द्वेधा विभज्यमानाश्चतुर्विंशत्यक्षरा गायत्र्यो विंशतिर्भवन्ति । गायत्रीसंबन्धं चान्यत्र प्रायणीयं प्रथममहः, गायत्रो वा ऐन्द्रवायवो गायत्रं प्रायणीयमहरिति श्रुत्यन्तरात् । इ(ऐ)न्द्रं चाहर्मध्यमे त्र्यहे प्रथमत्वात्प्रायणीयम् । अतो गायत्रीद्वारा संबन्धस्य वक्तुं शक्यत्वादेतत्सूक्तं चतुर्थस्याह्नो निरूपकम् ।

सारयुक्तत्वेन पुनः प्रशंसति—

तदेतदस्तुतमशस्तमयातयामसूक्तं यज्ञ एव साक्षात्तद्यदेतचतुर्थस्याह्न आज्यं भवति यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयन्ति संतत्यै, इति ।

तदेतदाऽग्निमित्यादिसूक्तमुद्गातृभिः पूर्वमस्तुतं होतृभिरप्यशस्तम् । तस्मादयातयामं गतसारं न भवति साक्षाद्यज्ञ एव यज्ञमध्ये सारत्वात् । तथा सति यद्येतत्सूक्तमत्राऽऽज्यं भवेत्तदानीं यज्ञरूपादेव सूक्ताद्यज्ञरूपमहस्तन्वते विस्तारयन्ति । किंचाहर्देवतां वाचमेव तेन सारयुक्तेन पुनः प्राप्नुवन्ति । तत्र(च) मध्यमस्य त्र्यहस्य संतत्यै विच्छेदराहित्याय भवति ।

वेदनपूर्वमनुष्ठानं प्रशंसति—

संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

अथ प्रउगशस्त्रं विधत्ते—

वायो शुक्रो अयामि ते विहि होत्रा अवीता वायो शतं हरीणामिन्द्रश्च वायवेषां सोमानामाचिकिता-

वायो शुक्रो अयामि ते०—४—४७—१ । विहि होत्रा अवीता०—४—४८—१ । वायो शतं हरीणां०—४—४८—५ । इन्द्रश्च वायवेषां०—५—५१—६ ।

१ ड. °र्वेकम° ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न सुक्रतू आ नो विश्वाभिरूतिभिस्त्यमु वो अप्रह-
णमपत्यं वृजिनं रिपुमाम्बितमे नदीतम इत्यानुष्टुभं
प्रउगमेति च प्रेति च शुक्रवच्च चतुर्थेऽहनि चतुर्थ-
स्याह्नो रूपम्, इति ।

वायो शुक्र इत्याद्यं प्रतीकं विहि होत्रा इति द्वितीयं वायो शतमिति तृतीयमिन्द्रश्चेति चतुर्थमाचिकितानेति पञ्चममा नो विश्वाभिरिति षष्ठं त्यमु व इति सप्तममपत्यमित्यष्टममम्बितम इति नवमम् । अत्राऽऽद्यैस्त्रिभिः प्रतीकैरेकस्तृच इतरैः षट्प्रतीकैः षट्तृचाः । एतत्सर्वमनुष्टुप्छन्दस्कं प्रउगशस्त्रं कार्यम् । अत्राऽऽकारः प्रशब्दः शुक्रशब्दश्चेति लिङ्गानि द्रष्टव्यानि । वायो इत्यत्र शुक्रवल्लिङ्गम् । विहि होत्रेत्यस्यामृचि वायवा चन्द्रेणेत्याकारः । वायो शतमित्यत्र रथ आ यात्वित्याकारः । इन्द्रश्चेत्यत्र द्वितीयस्यामृच्यायातमित्याकारः । आचिकितानेत्यत्राऽऽनो विश्वाभिरित्यत्र चाऽऽकारो स्पष्टौ । त्यमु वो अप्रहणमित्यत्र प्रशब्दः । अपत्यं वृजिनमित्यत्र तृतीयस्यामृच्या सुगमित्याकारः। अम्बितम इत्यत्र प्रशस्तिमम्बेति प्रशब्दः । अतो लिङ्गसद्भावेन चतुर्थेऽहनि योग्यत्वादिदं सर्वं चतुर्थस्याह्नो निरूपकम् ।

मरुत्वतीयशस्त्रस्य प्रतिपदं विधत्ते—

तं त्वा यज्ञेभिरीमह इति मरुत्वतीयस्य
प्रतिपदीमह इत्यभ्यायाम्यमिवैतदहस्तेन
चतुर्थस्याह्नो रूपम्, इति ।

अत्र यदेतदीमह इति पदमस्ति तद्याचामह इत्यस्मिन्नर्थे वर्तते । याच्ञा च दीर्घकालेन फलप्रदा । तस्मादेतदहरभ्यायाम्यमिवाभितो दीर्घं कर्तव्यमिव प्रयोगबाहुल्येन दृश्यते । तेन याच्ञार्थवाचिधातुद्वारेण दीर्घत्वेन साम्यप्रतीतेरिदं मन्त्रवाक्यं चतुर्थस्याह्नो निरूपकम् ।

मन्त्रान्तराणि विधत्ते—

---

आचिकितान सुक्रतू०—५–६६–१ । आ नो विश्वाभिरूतिभिः०—७–२४–४ । ८–८–१ । त्यमु वो अप्रहणं०—६–४४–४ । अपत्यं वृजिनं०—६–५१–१३ । अम्बितमे नदीतमे०—२–४१–१६ । तं त्वा यज्ञेभिरीमहे०—८–६८–१० ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदं वसो सुतमन्ध इन्द्र नेदीय एदिहि प्रैतु ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्राय बृहत इति प्रथमेनाह्ना समान आतानश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

आतानः शस्त्रक्लृप्तिः । सा चेदं वसो सुतमित्यादिकाऽस्मिंश्चतुर्थेऽहनि पूर्वोक्तेन प्रथमेनाह्ना समाना । तत्साम्यं चैकं लिङ्गम् ।

सूक्तान्तरं विधत्ते—

श्रुधी हवमिन्द्र मा रिषण्य इति सूक्तं हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

हवशब्दोपेतमेतस्याह्नो विशेषलिङ्गमिति पूर्वमुक्तम् ।

अन्यस्मिन्नपि सूक्ते तल्लिङ्गं दर्शयति—

मरुत्वाँ इन्द्र वृषभो रणायेति सूक्तमुग्रं सहोदामिह तं हुवेमेति हववच्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

मरुत्वानित्यस्य सूक्तस्योग्रमित्यादिरन्तिमः पादस्तत्र हुवेमेति हवशब्दार्थवाची धातुर्दृश्यते । अतो लिङ्गसद्भावादह्नो निरूपकम् ।

एतत्सूक्तं प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

तदु तत्तु सूक्तं त्रिष्टुप्छन्दस्कम् । प्रतिष्ठितानि पदानि प्रतिनियताक्षरसंख्यायुक्ताः पादा यस्मिन्सूक्ते तत्प्रतिष्ठितपदम् । तादृशेन तेन सूक्तेन सवनं माध्यंदिनसवनगतं मरुत्वतीयशस्त्रं दाधार धारितवान्भवति । एतेन सूक्तेन स्वयमायतनात्स्वकीयगृहात्कदाचिदपि न प्रच्यवते ।

---

इदं वसो सुतमन्धः०—८-२-१ । इन्द्र नेदीय एदिहि०—८-९३-९ । प्रैतु ब्रह्मणस्पतिः०—१-४०-३ । अग्निर्नेता भगः०—३-२०-४ । त्वं सोम क्रतुभिः०—१-९१-२ । पिन्वन्त्यपो मरुतः०—१-६४-६ । प्र व इन्द्राय बृहते०—८-८९-३ । श्रुधी हवमिन्द्र मा रिषण्यः०—२-११-२ । मरुत्वाँ इन्द्र वृषभो०—३-४७-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्त्यं तृचं विधत्ते —

इमं नु मायिनं हुव इति पर्यासो हववांश्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

इमं न्वित्यादितृचविशेषः परितः पूर्वोक्तानामन्ते प्रक्षेपणीयः । तत्र हुव इति हवशब्दार्थे धातुरस्त्यतश्चतुर्थस्याह्नो निरूपकस्तृचः ।

तदेतत्प्रशंसति—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति, इति ।

ता उ ताः सूक्तगता ऋचो गायत्रीछन्दस्का गायत्र्यश्चैतस्य मध्यमस्य त्र्यहस्य माध्यंदिनं सवनं वहन्ति ।

पूर्वोक्तनिर्वाहक्रमेण जगत्याः प्रातःसवनवाहित्वं गायत्र्या माध्यंदिनसवनवाहित्वं च दर्शितम् । अस्मिंस्तृचे निविद्धानं विधत्ते—

तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति, इति ।

यस्मिंश्छन्दसि निवित्पदसमूहः प्रक्षिप्यते तदेतच्छन्दो वहति सवनस्य निर्वाहकं भवति । तस्मान्निर्वाहणाय तासु गायत्रीषु निविदं दध्यात् ।

अथ वैराजसामसंबद्धं तृचद्वयं विधत्ते—

पिबा सोममिन्द्र मन्दतु त्वा श्रुधी हवं विपिपानस्याद्रेरिति वैराजं पृष्ठं भवति बार्हतेऽहनि चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

पृष्ठस्तोत्रसाधनस्य वैराजसाम्न आधारः पिबा सोममित्यादिः स्तोत्रियस्तृचः श्रुधी हवमित्याद्यनुरूपोऽतो वैराजसामसंबन्धो लिङ्गम् । किंच बृहत्साम्नोऽपत्यं वैराजसाम । इदं चाहर्युग्मरूपत्वाद्बृहत्सामसंबन्धि । अतोऽपि कारणादस्मिन्नहन्येतत्तृचद्वयं युक्तम् ।

ऋगन्तरं विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

---

इमं नु मायिनं हुवे०—८–७६–१ । पिबा सोममिन्द्र मन्दतु०—७–२२–१ । श्रुधी हवं विपिपानस्याद्रेः०—७–२२–४ । यद्वावान पुरुतमं०—१०–७४–६ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अच्युतत्वं सर्वसंबन्धिलिङ्गमित्युक्तम् । तस्मात्तृ( स्या ऋ )च ऊर्ध्वमन्यं प्रगाथं विधत्ते—

त्वामिद्धि हवामह इति बृहतो योनिमनुनि-
वर्तयति बार्हतं ह्येतदहरायतनेन, इति ।

त्वामिद्धीत्यस्यामृचि बृहत्सामोत्पन्नं तस्मादेतं योनिभूतं प्रगाथं पूर्वोक्तधाय्यामनु पश्चाच्छंसेत् । एतच्चाहरायतनेन युग्माहस्वरूपस्थानेन बार्हतं बृहत्सामसंबन्धं लिङ्गमित्युक्तम् ।

वैराजसाम्नः संबन्धिनं प्रगाथं विधत्ते—

त्वामिन्द्र प्रतूर्तिष्विति सामप्रगाथः, इति ।

तत्र लिङ्गं दर्शयति—

अशस्तिहा जनितेति जातवांश्चतु-
र्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

उक्ते प्रगाथे तृतीयपादोऽयमत्राशस्तिहा जनितेति ततोऽयं जातवान् । जनिधातुयुक्तं जातवत्त्वं चैतस्याह्नो लिङ्गम् ।

त्यमू ष्विति सूक्तविशेषस्याच्युतत्वं लिङ्गं दर्शयति—

त्यमू षु वाजिनं देवजूतमिति
तार्क्ष्योऽच्युतः ॥४॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकविंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ [ १५७ ] ।

---

विमदेन महर्षिणा दृष्टं न्यूङ्खसहितं सूक्तं विधत्ते—

कुह श्रुत इन्द्रः कस्मिन्नद्येति सूक्तं
वैमदं विरिफितं विरिफितस्य ऋषेश्च-
तुर्थेऽहानि चतुर्थस्याह्नो रूपम्, इति ।

पूर्ववद्व्याख्येयम् ।

---

त्वामिद्धि हवामहे०—६–४६–१ । त्वमिन्द्र प्रतूर्तिषु०— ८–९९–५ । त्यमू षु वाजिनं देवजूतं०–१०–१७८–१ । कुह श्रुत इन्द्रः०—१०–२२–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सूक्तान्तरं विधत्ते—

युध्मस्य ते वृषभस्य स्वराज इति सूक्त-
मुरुं गभीरं जनुषाऽभ्युग्रमिति जातव-
च्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

युध्मस्येति सूक्त उरुं गभीरमिति यः पादस्तत्र जनुषेति श्रवणाज्जातवच्च-निधातुयुक्तं लिङ्गमस्ति ।

सूक्तगतं छन्दोऽवलम्ब्य प्रशंसति—

तद्धु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं
दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

पूर्ववद्व्याख्येयम् ।

तृतीयं तृचं विधत्ते—

त्यमुवः सत्रासाहमिति पर्यासो विश्वासु गीर्ष्वायतमि-
त्यभ्यायाम्यमिवैतदहस्तेन चतुर्थस्याह्नो रूपम्, इति ।

परितः प्रक्षेपणीयः पर्यासोऽन्तिमस्तृचस्तस्मिन्विश्वास्विति यः पादस्तत्राऽऽयतमिति शब्दो दीर्घत्ववाचकः श्रूयते । अहश्चैतदभ्यायाम्यमिव प्रयोगाधिक्यादतिदीर्घमिवातोऽत्र दीर्घत्वं लिङ्गम् ।

छन्दोद्वारा प्रशंसति—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य माध्यं
दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते
तस्माद्गायत्रीषु निविदं दधाति, इति ।

पूर्ववद्व्याख्येयम् ।

शस्त्रान्तरं विधत्ते—

विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्प-
तिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहनि च-
तुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

---

युध्मस्य ते वृषभस्य०—३-४६-१ । त्यमुवः सत्रासाहं०—८-९२-७ । विश्वो देवस्य नेतुः०—५-५०-१ । तत्सवितुर्वरेण्यं०—३-६२-१० । आ विश्वदेवं सत्पतिं०—५-८२-७ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विश्वो देवस्येत्यृगेका । तत्सवितुरिति द्वे ऋचौ । एष तृचो बृहत्सामसंबन्धी वैश्वदेवस्य प्रतिपत् । आ विश्वदेवमिति तृचोऽनुचरः । अह्नो युग्मत्वाद्वार्हतत्वम् । बृहत्सामसंबन्ध एव मन्त्रलिङ्गम् ।

सवितृदेवताकं सूक्तं विधत्ते—

आ देवो यातु सविता सुरत्न इति सावित्रमेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

आकारोऽत्र लिङ्गम् ।

प्रशब्दलिङ्गोपेतं सूक्तं विधत्ते—

प्र द्यावा यज्ञैः पृथिवी नमोभिरिति द्यावापृथिवीयं प्रेति चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

प्रशब्दो वाक्संबन्धश्चेति लिङ्गद्वयोपेतं सूक्तं विधत्ते—

प्र ऋभुभ्यो दूतमिव वाचमिष्य इत्यार्भवं प्रेति च वाचमिष्य इति च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

ऋभुदेवताकत्वं स्पष्टम् । प्रशब्दो वाक्संबन्धश्च प्रेति चेत्यादिना प्रदर्श्यते ।

प्रशब्देन शुक्रशब्देन चोपेतं सूक्तान्तरं विधत्ते—

प्र शुक्रैतु देवी मनीषेति वैश्वदेवं प्रेति च शुक्रवच्च चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

बहुदेताकत्वाद्वैश्वदेवत्वम् ।

नानाविधच्छन्दोयुक्तत्वरूपं लिङ्गान्तरं दर्शयति—

ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्, इति ।

ता उ तास्तु सूक्तगता ऋचो विच्छन्दसो विविधच्छन्दोयुक्ताः । तत्रैकविंशतिर्द्विपदाः सन्ति । अवशिष्टाश्चतुष्पदाः सन्ति । तेन विच्छन्दस्त्वेनाह्नो निरूपकम् ।

---

आ देवो यातु सविता०—७-४५-१ । प्र द्यावा यज्ञैः पृथिवी नमोभिः०—७-५४-१ । प्र ऋभुभ्यो दूतमिव०—४-३३-१ । प्र शुक्रैतु देवी मनीषा०—७-३४-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शस्त्रान्तरस्थं प्रतिपत्सूक्तं विधत्ते—

वैश्वानरस्य सुमतौ स्यामेत्याग्निमा-
रुतस्य प्रतिपदितो जात इति जातव-
च्चतुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

तस्य सूक्तस्य प्रथमाया ऋचस्तृतीयपाद इतो जात इति श्रवणाज्जातवच्छब्दोपेतं लिङ्गमस्ति ।

मरुद्देवताकं सूक्तं विधत्ते—

क ईं व्यक्ता नरः सनीळा इति मारुतं
नकिर्ह्येषां जनूंषि वेदेति जातवच्चतु-
र्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

अस्मिन्सूक्ते तृतीयस्यामृचि मरुद्भिरस्त्विति श्रवणान्मारुत[त्व]म् । नकिर्ह्येत्यादिकः प्रथमाया ऋचस्तृतीयः पादस्तत्र जनूंषीति जनिधातुयुक्तत्वं लिङ्ग॰

विविधच्छन्दस्त्वं लिङ्गान्तरं दर्शयति—

ता उ विच्छन्दसः सन्ति द्विपदाः सन्ति
चतुष्पदास्तेन चतुर्थस्याह्नो रूपम्, इति ।

अस्मिन्सूक्त एकादश द्विपदा इतराश्चतुष्पदाः ।

अच्युतत्वलिङ्गोपेतामृचं विधत्ते—

जातवेदसे सुनवाम सोम-
मिति जातवेदस्याऽच्युता, इति ।

जातवेदोदेवताकमन्यत्सूक्तं विधत्ते—

अग्निं नरो दीधितिभिररण्योरिति जात-
वेदस्यं हस्तच्युती जनयन्तेति जातवच्च-
तुर्थेऽहनि चतुर्थस्याह्नो रूपम्, इति ।

जातस्य जगतो वेदितत्वादग्निरेव जातवेदाः । हस्तच्युतीत्यादिर्द्वितीयः पादस्तत्र जनयन्तेति श्रवणाज्जनिधातुयुक्तं लिङ्गम् ।

---

वैश्वानरस्य सुमतौ० १-९८-१ । क ईं व्यक्ता नरः०--७-५६-१ । अग्निं नरो दीधितिभिः०—७-१-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विविधच्छन्दोरूपं लिङ्गान्तरं दर्शयति—

ता उ विच्छन्दसः सन्ति विराजः सन्ति त्रिष्टुभ-
स्तेन चतुर्थस्याह्नो रूपमह्नो रूपम् ॥ ५ ॥ इति ।

अत्राष्टादश विराज इतरास्त्रिष्टुभः । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकविंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ [१५८] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्य
एकविंशोऽध्यायः ॥ २१ ॥

---

अथ द्वाविंशोऽध्यायः ।

---

अथ नवरात्रापेक्षया पञ्चमं मध्यमत्र्यहापेक्षया द्वितीयमहर्विधत्ते—

गौर्वै देवता पञ्चममहर्वहति त्रिणवः स्तोमः शाक्करं साम पङ्क्तिश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद, इति ।

पूर्वत्र वागेकं गौरेकं द्यौरेकमिति देवताया रूपत्रयमुक्तम् । तत्र वागात्मकं रूपं चतुर्थेऽहन्युक्तम् । पञ्चमस्याह्नो गौरेव देवता निर्वाहिका । स्तोमानां मध्ये त्रिणवो निर्वाहकः । तस्य त्रिणवस्य स्तोमस्य स्वरूपं छन्दोगैरेवमाम्नातम्—‘नवभ्यो हिं करोति स तिसृभिः स पञ्चभिः स एकया । नवभ्यो हिं करोति स एकया स तिसृभिः स पञ्चभिः । नवभ्यो हिं करोति स पञ्चभिः स एकया स तिसृभिः । वज्रो वै त्रिणवः’ इति । अस्यायमर्थः । एकस्तृचस्त्रिभिः पर्यायैरावर्तनीयः । तत्र प्रथमायास्त्रिः पाठो द्वितीयायाः पञ्चकृत्वः पाठस्तृतीयस्याः सकृदेव पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठो द्वितीयस्यास्त्रिः पाठस्तृतीयस्याः पञ्चकृत्वः पाठः । तृतीयपर्याये प्रथमायाः पञ्चकृत्वः पाठो द्वितीयस्याः सकृत्पाठस्तृतीयस्यास्त्रिः पाठः । एवमावृत्ताभिः सप्तविंशतिसंख्याकाभिर्ऋग्भिस्त्रिणवः स्तोमो भवति । अन्यत्पूर्ववद्व्याख्येयम् ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पञ्चमस्याह्नो मन्त्रलिङ्गानि दर्शयति—

यद्वै नेति न प्रेति यत्स्थितं तत्पञ्चमस्याह्नो रूपम्, इति ।

आकारः प्रशब्दश्च नात्र लिङ्गमिति नकारद्वयेन प्रतिषिध्यते । यत्तु स्थितं तिष्ठतिधात्वर्थरूपमप्रचलितं तत्पञ्चमस्याह्नो निरूपकम् ।

द्वितीयेऽहन्युक्तं लिङ्गजातं पञ्चमेऽहन्यतिदिशति—

यद्धेव द्वितीयमहस्तदेतत्पुनर्यत्पञ्चमम्, इति ।

नवरात्रापेक्षया यत्पञ्चममहर्विद्यते तत्पृथङ्न भवति । किंतु यदेव द्वितीयमहस्तदेव पञ्चमत्वेन पुनः क्रियते । तत्रत्यं लिङ्गजातमत्रानुसंधेयमित्यर्थः ।

तानि लिङ्गानि दर्शयति—

यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितम्, इति ।

पूर्ववद्व्याख्येयम् ।

अथ विशेषलिङ्गानि दर्शयति—

यद्दुग्धवद्यदूधवद्यद्धेनुमद्यत्पृश्निमद्यन्मद्वद्यत्पशुरूपं यदध्यासवद्विक्षुद्रा इव हि पशवो यज्जागतं जागता हि पशवो यद्बार्हतं बार्हता हि पशवो यत्पाङ्क्तं पाङ्क्ता हि पशवो यद्वामं वामं हि पशवो यद्धविष्मद्धविर्हि पशवो यद्वपुष्मद्वपुर्हि पशवो यच्छाक्वरं यत्पाङ्क्तं यत्कुर्वद्यद्द्वितीयस्याह्नो रूपमेतानि वै पञ्चमस्याह्नो रूपाणि, इति ।

दुग्धोधधेनुपृश्निमच्छब्दै रुपेतं यद्यदस्ति तत्सर्वं लिङ्गम् । तथाविधं च पशुरूपं यदस्ति तदपि लिङ्गम् । पशुरूपस्य बहुविधत्वमेव यदध्यासवदित्यादिना प्रपञ्च्यते । अधिकपादस्य प्रक्षेपोऽध्यासः । प्रकृतौ यावदस्ति तावतोऽप्यधिकपादोपेतमध्यासवत् । पशूनामपि चतुर्भ्यः पादेभ्योऽधिकं मुखमेकं परिगण्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतोऽध्यासवत्पशुरूपं भवति। तदेव विक्षुद्रा इत्यनेन स्पष्टी क्रियते। विविधाः क्षुद्रा विक्षुद्राः। एकस्मादन्यो न्यूनस्तस्मादप्यन्यो न्यूनः। गजापेक्षयाऽश्वः क्षुद्रस्तदपेक्षया महिषः क्षुद्रस्ततो गौस्ततोऽजेत्येवं पशुषु क्षुद्रत्वं द्रष्टव्यम्। जागतं जगतीसंबद्धं यदस्ति तदपि पशुरूपम्। सोमाहरणप्रसङ्गे जगत्या पशूनामानीतत्वाज्जागतत्वम्। तथा बार्हतं बृहतीसंबन्धं पशुरूपम्। पशुविषये छन्दसामाजिधावने बृहत्या विजयेन पशूनां बार्हतत्वम्। पङ्क्तिच्छन्दःसंबद्धमपि पशुरूपम्। पङ्क्तिमुखेन पञ्चावयवैरुपेताः पशवः पाङ्क्ताः। यद्वामं रमणीयं सूक्तं स्वरवर्णादिभिः श्राव्यं भवति तदपि पशुरूपम्। लोकेऽपि गवाश्वादिपशव इति यदस्ति यद्वामं रमणीयं दृश्यते। हविष्मद्धविःसंज्ञोपेतं यदस्ति तदपि पशुस्वरूपम्। पशवो हि देवतासंबद्धहविःस्वरूपेण हूयन्ते। वपुःसंज्ञोपेतं यदस्ति तदपि पशुस्वरूपम्। पशवो हि वपुःपुष्टाङ्गभूता दृश्यन्ते। विदा मघवन्नित्यादिषु महानाम्नीषूत्पन्नं शाक्वरं साम तत्संबद्धमेकं लिङ्गम्। पाङ्क्तमिति यत्पुनर्वचनं तत्पञ्चसंख्यायुक्तं पूर्वत्र पङ्क्तिच्छन्दःसंबद्धमिति विशेषः। कुर्वदिति वर्तमानार्थवाचिप्रत्ययोपेतं धातुमात्रं विवक्षितम्। एतच्च द्वितीयस्याह्नो रूपमिति पूर्वमुक्तम्। एवं च सति यानि द्वितीयेऽहन्युक्तानि लिङ्गानि यानि चात्र नूतनान्येतानि सर्वाण्यपि पञ्चमस्याह्नो निरूपकाणि द्रष्टव्यानि।

आज्यशस्त्रं विधत्ते—

इममू षु वो अतिथिमुषर्बुधमिति पञ्चमस्याह्न आज्यं भवति जागतमध्यासवत्पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।

इममू ष्वित्यादिसूक्ते जगतीछन्दोयुक्ता आद्या नवर्चः शंसनीयास्तत्र तृतीयस्यामृचि जगतीछन्दस्केभ्यश्चतुर्थ(भ्यः?)पादेभ्योऽधिकः पादो भरद्वाजाय सप्रथ इत्येष समाम्नायते। अतोऽधिकपादयुक्तत्वादिदमध्यासवल्लिङ्गम्। तत्र (च?) पशुस्वरूपं पशोरपि पादचतुष्टयादधिकस्य मुखस्य विद्यमानत्वात्। तदेतल्लिङ्गयुक्तं पञ्चमेऽहनि विनियोक्तुं युक्तं योग्यम्। तस्मादेतत्पञ्चमस्याह्नो निरूपकम्।

अथ प्रउगशस्त्रं विधत्ते—

---

इममू षु वो अतिथिमुषः०—६—१५—१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आ नो यज्ञं दिविस्पृशमा नो वायो महेतन रथेन पृथुपाजसा वहवः सूरचक्षस इमा उ वां दिविष्टयः पिबा सुतस्य रसिनो देवं देवं वो वसे देवं देवं बृहदुगायिषे वच इति बार्हतं प्रउगं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

आ नो यज्ञमिति द्वे ऋचौ । आ नो वायो, इत्येका । सोऽयं प्रथमस्तृचो रथेनेत्यादिर्द्वितीयो वहव इत्यादिस्तृतीय इमा उ वामित्यादिश्चतुर्थः पिबा सुतस्येत्यादिः पञ्चमो देवं देवमिति षष्ठो बृहदिति सप्तमः । तदेतत्सप्तमं बृहतीछन्दोयोगाद्बार्हतम् । अतो लिङ्गसद्भावात्पञ्चमेऽहनि योग्यतया तस्य निरूपकम् ।

अथ शस्त्रान्तरस्य प्रतिपदं विधत्ते—

यत्पाञ्चजन्यया विशेति मरुत्वतीयस्य प्रतिपत्पाञ्चजन्ययेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

अस्मिंस्तृचे प्रथमायामृचि पाञ्चजन्ययेति पदे पञ्चशब्दयोगो लिङ्गम् ।

अथ द्वितीयेनाह्ना समानत्वलिङ्गयुक्तशस्त्रक्लृप्तिं विधत्ते—

इन्द्र इत्सोमपा एक इन्द्र नेदीय एदिहुत्तिष्ठ ब्रह्मणस्पतेऽग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृहदिन्द्राय गायतेति द्वितीयेनाह्ना समान आतानः पञ्चमेऽहनि पञ्चम-

आ नो यज्ञं दिविस्पृश०—८–११–९ । आ नो वायो महेतने०—८–४६–२९ । रथेन पृथुपाजसा०—४–४६–५ । वहवः सूरचक्षसः०—७–६६–१० । इमा उ वां दिविष्टयः०—७–७४–१ । पिबा सुतस्य रसिनः०—८–३–१ । देवं देवं वो वसे०—८–१२–१९ । बृहदु गायिषे वचः०—७–९६–१ । यत्पाञ्चजन्यया विशा०— ८–६३–७ । इन्द्र इत्सोमपा एकः०—८–२–४ । इन्द्र नेदीय एदिहि०—८–५३–५ । उत्तिष्ठ ब्रह्मणस्पते०—१–४०–१ । अग्निर्नेता भग इव०—३–२०–४ । त्वं सोम क्रतुभिः०—१–९१–२ । पिन्वन्त्यपो मरुतः०—१–६४–६ । बृहदिन्द्राय गायते०—८–८९–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्याह्नो रूपम्, इति ।

अतानः शस्त्रक्लृप्तिः ।

अथ मदशब्देन पञ्चपादोपेतपाङ्क्तत्वलिङ्गेन चोपेतं सूक्तं विधत्ते—

अविताऽसि सुन्वतो वृक्तबर्हिष
इति सूक्तं मद्वत्पाङ्क्तं पञ्चपदं पञ्च-
मेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

अत्र द्वितीयपादे पिबा सोमं मदायेति श्रवणादिदं सूक्तं मद्वद्भवति । पञ्च पादा विस्पष्टाः ।

तादृशमेवान्यत्सूक्तं विधत्ते—

इत्था हि सोम इन्मद इति सूक्तं मद्वत्पाङ्क्तं
पञ्चपदं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

पुनरपि मदशब्दलिङ्गोपेतं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते—

इन्द्र पिब तुभ्यं सुतो मदायेति सूक्तं
मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधा-
राऽऽयतनादेवैतेन न प्रच्यवते, इति ।

पूर्ववद्व्याख्येयम् ।

आकारप्रशब्दवर्जितत्वमरुत्वतीयशस्त्रस्यान्ते प्रक्षेपणीयं तृचं विधत्ते—

मरुत्वाँ इन्द्र मीढ्व इति पर्यासो नेति न
प्रेति पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

परितोऽन्ते प्रक्षेपणीयः पर्यासः ।

तस्मिंस्तृचे निविद्धानं विधत्ते—

ता उ गायत्र्यो गायत्र्यो वा एतस्य
त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो
वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु
निविदं दधाति ॥ ६ ॥ इति ।

---

अविताऽसि सुन्वतो०—८—३६—१ । इत्था हि सोम इन्मदे०—१—८०—१ ।
इन्द्र पिब तुभ्यं सुतो०—६—४०—१ । मरुत्वाँ इन्द्र मीढ्वः०—८—७६—६ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये प्रथमः खण्डः ॥ १ ॥ (६)[१५९]।

———

अथ शाक्करसामसंबन्धेन लिङ्गेन युक्ता ऋचो विधत्ते—

महानाम्नीष्वत्र स्तुवते शाक्करेण साम्ना राथंतरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

विदा मघवन्नित्यादयो नवर्चो महानाम्नीसंज्ञकास्तासूद्गातारः शाक्कराख्येन साम्ना स्तुवते । अहश्चेदमयुग्मत्वाद्राथंतरं शाक्करं च साम । रथंतररूपजन्यत्वाद्राथंतरमतोऽत्र ता ऋचो योग्याः ।

महानाम्नीशब्दं निर्वक्ति—

इन्द्रो वा एताभिर्महानात्मानं निरमिमीत तस्मान्महानाम्न्योऽथो इमे वै लोका महानाम्न्य इमे महान्तः, इति ।

पुरा कदाचिदिन्द्रः स्वयमेवैश्वर्यादिगुणैर्महान्भविष्यामीति विचार्य विदा मघवन्नित्यादिभिर्ऋग्भिः स्वात्मानं गुणैर्महान्तं निर्मितवान् । तस्मान्महत्त्वनिर्माणसाधनत्वान्महानाम्नीशब्दवाच्याः संपन्नाः । अपि च महानाम्न्यो भूरादिलोकत्रयस्वरूपा लोकाश्च महान्तस्तस्मादप्यासां महानाम्नीत्वम् ।

ननु शक्करीषूत्पन्नं साम शाक्करमिति वक्तव्यम् । शक्करी च सप्तपादोपेता । न चैता ऋचस्तथाविधाः । किंतु पादचतुष्टयोपेता अनुष्टुभस्तत्कथमासां शक्करीत्वमित्याशङ्क्य शक्तिमदत्वाच्छक्करीत्वमिति निर्वचनं दर्शयति—

इमान्वै लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच यदिमाँल्लोकान्प्रजापतिः सृष्ट्वेदं सर्वमशक्नोद्यदिदं किंच तच्छक्कर्योऽभवंस्तच्छक्करीणां शक्करीत्वम्, इति ।

पुरा प्रजापतिर्विदा मघवन्नित्यादिका महानाम्नीरनुसंधाय तदात्मकाँल्लोकान्प्रजापतिः सृ(कान्सृ)ष्ट्वा ताभिर्महानाम्नीभिरनुगृहीतं(तः) पश्चादेषु लोकेषु यत्किंचित्स्थावरं जङ्गमं प्राणिजातं स्रष्टव्यमस्ति तत्सर्वं स्रष्टुमशक्नोच्छक्तिमानभूत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्मादेवं प्रजापतिरकरोत्तस्माच्छक्तिहेतुत्वादेता ऋचः शक्करीनामिका अभवन् । अनेन प्रकारेण तासां शक्करीत्वं संपन्नम् ।

प्रकारान्तरेण महानाम्नीः प्रशंसति—

ता ऊर्ध्वाः सीम्नोऽभ्यसृजत यदूर्ध्वाः सीम्नोऽभ्यसृजत तत्सिमा अभवंस्तत्सिमानां सिमात्वम् , इति ।

या एता महानाम्न्यः सन्ति ताः सीम्न ऊर्ध्वा अभ्यसृजत । अग्निमीळ इत्यारभ्य यथा वः सुसहासतीत्यन्तां दाशतयीनां सीमा तस्याः सीम्न ऊर्ध्वभाविनीः कृत्वा प्रजापतिरभितः सृष्टवान् । अत एवैताः संहिताः संहितायां नाऽऽम्नायन्ते । किंत्वारण्यकाण्ड आम्नायन्ते । अथवा नवैता ऋचास्त्रिवेदेभ्य उपरिस्थितत्वेन प्रयुज्यन्ते । तथा चाऽऽश्वलायन आह– 'शाक्करं चेत्पृष्ठं महानाम्न्यः स्तोत्रिय इति ता अध्यर्धकारं नव प्रकृत्या तिस्रो भवन्ति' इति । अस्यायमर्थः । यदा शाक्करसाम्ना पृष्ठस्तोत्रं निष्पाद्यते तदानीं महानाम्न्य ऋचः स्तोत्रियस्तृचो भवति । तास्तु प्रकृत्या स्वभावेन नवसंख्याकास्तथाऽपि तिस्रः कर्तव्या अध्यर्धकारामिति तत्रोपाय उच्यते । अधिकेनार्धेन युक्तामेकामृचमेकमर्धर्चं कृत्वेत्युक्तं भवति । ततस्त्रयाणामर्धर्चानामेकार्धत्वे सति तिस्र ऋचो भवन्तीति । सोऽयं सीम्न उल्लङ्घनप्रकारः । यस्मात्सीम्न ऊर्ध्वाः सतीः प्रजापतिरसृजत तस्मात्सिमा इत्येतन्नामिका अभवन् । महानाम्नीनामेतेन प्रकारेण सिमानामकत्वं विज्ञेयम् ।

स्तोत्रियमुक्त्वाऽनुरूपं तृचं विधत्ते—

स्वादोरित्था विषूवत उप नो हरिभिः सुतमिन्द्रं विश्वा अवीवृधन्नित्यनुरूपो वृषण्वान्पृश्निमान्मद्वान्वृधन्वान्पञ्चमेऽहानि पञ्चमस्याह्नो रूपम्, इति ।

स्वादोरित्यादिरध्ययनप्रकारेणैकस्तृच उप न इत्यादिर्द्वितीय इन्द्रं विश्वा इति तृतीयः । एतत्त्रयं मिलित्वा पूर्वोक्तस्तोत्रियसादृश्यादनुरूपस्तृचो भवति । तत्र स्वादोरित्येतास्मिन्वृष्णा मदन्तीति वृषण्वत्त्वं मद्वत्त्वं च दृश्यते । सोमं श्रीणन्ति पृश्नय इति पृश्निमत्त्वम् । इन्द्रं विश्वा अवीवृधन्निति वृधन्वत्त्वम् । तान्येतानि पञ्चमेऽहनि योग्यत्वात्पञ्चमस्यं गमकानि ।

---

स्वादोरित्था विषूवतः०—१–८४–१ । उप नो हरिभिः०—८–७२–३१ । इन्द्रं विश्वा अवीवृधन्०—१–११–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अच्युतत्वलिङ्गेन धाय्यां विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

तां धाय्यामनु रथंतरसामयोनेः शंसनं विधत्ते—

अभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेन, इति ।

अयुग्मत्वादह्नो रथंतरायतनत्वमेतदेव तल्लिङ्गम् ।

शाक्वरसामसंबन्धिसामप्रगाथं विधत्ते—

मो षु त्वा वाघतश्चनेति सामप्रगाथोऽध्यासवान्पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

ऋग्द्वयमेव सर्वत्र प्रगाथस्य स्वरूपम् । अत्र तु रायस्काम इत्येषा द्विपदाऽधिकत्वेन प्रक्षिप्ता तस्मादयं प्रगाथोऽध्यासवान् । तच्च पशुरूपत्वात्पञ्चमेऽहनि योग्यम् ।

अच्युतत्वलिङ्गेन सूक्तविशेषं विधत्ते—

त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ ७ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये द्वितीयः खण्डः ॥ २ ॥ ( ७ )[ १६० ] ।

पञ्चपादोपेततया पाङ्क्तत्वलिङ्गयुक्तं सूक्तं विधत्ते—

प्रेदं ब्रह्म वृत्रतूर्येष्वाविथेति सूक्तं पाङ्क्तं पञ्चपदं पञ्चमेऽहानि पञ्चमस्याह्नो रूपम्, इति ।

मदशब्देन पाङ्क्तत्वेन च लिङ्गद्वयेनोपेतं सूक्तं विधत्ते—

इन्द्रो मदाय वावृध इति सूक्तं मद्वत्पाङ्क्तं पञ्चपदं पञ्चमेऽहानि पञ्चमस्याह्नो रूपम्, इति ।

---

यद्वावान पुरुतम०—१०–७४–६८ । अभि त्वा शूर नोनुमः०—७–३२–२२ । मो षु त्वा वाघतश्चन०—७–३२–१ । त्यमू षु वाजिनं०–१०–१७८–१ । प्रेदं ब्रह्म वृत्रतूर्ये०—८–३७–१ । इन्द्रो मदाय वावृधे०—१–८१–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मदिधातुलिङ्गकं त्रिष्टुप्छन्दस्कं सूक्तं विधत्ते—

सत्रा मदासस्तव विश्वजन्या इति सूक्तं मद्वत्त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

शस्त्रान्ते प्रक्षेपणीयं तृचं विधत्ते—

तमिन्द्रं वाजयामसीति पर्यासः स वृषा वृषभो भुवदिति पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

स वृषेत्यादिस्तृतीयः पादस्तत्र वृषभशब्दश्रवणात्पशुरूपत्वम् ।

तस्मिंस्तृचे निविद्धानं विधत्ते—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति, इति ।

वैश्वदेवशस्त्रस्य तृचद्वयं विधत्ते—

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

तत्सवितुरिति तृचः प्रतिपत् । अद्या इति तृचोऽनुचरः । तावुभौ रथंतरसंबन्धिनौ । अहश्चायुग्मत्वाद्राथंतरमेवं लिङ्गं संपादनीयम् ।

रमणीयत्ववाचकेन वामशब्दलिङ्गेन युक्तं तृचं विधत्ते—

उदु ष्य देवः सविता दमूना इति सावित्रमा दाशुषे सुवति भूरि वाममिति वामं पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति ।

सावित्रत्वं स्पष्टम् । आ दाशुष इति चतुर्थः पादस्तत्र भूरि वाममिति वामशब्दरूपं लिङ्गं पशुरूपमस्ति ।

---

सत्रा मदासस्तव०—६–३६–१ । तमिन्द्रं वाजयामसि०—८–९३–७ । तत्सवितुर्वृणीमहे०—५–८२–१ । अद्या नो देव सवितः०—५–८२–४ । उदु ष्य देवः सविता दमूना०—६–७१–४ ।

७।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पशुवाचकेनोक्षशब्दरूपेण लिङ्गेन युक्तं चतुर्ऋचं विधत्ते—

**मही द्यावापृथिवी इह ज्येष्ठे इति द्यावापृथिवीयं रुवद्धोक्षेति पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।**

रुवदित्यादिश्चतुर्थः पादस्तत्रोक्षेति पुंगवाभिधायकः शब्दोऽस्ति।

ऋभुदेवताकं सूक्तं विधत्ते—

**ऋभुर्विभ्वा वाज इन्द्रो नो अच्छेत्यार्भवं वाजो वै पशवः पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।**

पशोर्हविष्ट्वेन देवतान्नत्वादन्नवाची वाजशब्दः पशुरूपं लिङ्गम्।

अध्यासलिङ्गकं सूक्तं विधत्ते—

**स्तुषे जनं सुव्रतं नव्यसीभिरिति वैश्वदेवमध्यासवत्पशुरूपं पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।**

त्रिष्टुप्छन्दस्के सूक्ते विश आ देवीरित्येकः पादोऽधिकः प्रक्षिप्यते। सोऽयमध्यासो लिङ्गम्।

शस्त्रान्तरस्य प्रतिपदं सूक्तं विधत्ते—

**हविष्पान्तमजरं स्वर्विदीत्याग्निमारुतस्य प्रतिपद्धविष्मत्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।**

हविःशब्दोपेतत्वमत्र लिङ्गम्।

वपुःशब्दोपेतं मरुद्देवताकं सूक्तं विधत्ते—

**वपुर्नु तच्चिकितुषे चिदस्त्वित्ति मारुतं वपुष्मत्पञ्चमेऽहनि पञ्चमस्याह्नो रूपम्, इति।**

मरुतो वावृधन्त इति श्रवणात्तत्सूक्तं मारुतम्। वपुःशब्दलिङ्गं तु स्पष्टम्।

---

मही द्यावापृथिवी० ४-५६-१। ऋभुर्विभ्वा वाज इन्द्रो०-४-३४-१। स्तुषे जनं सुव्रतं नव्य०—६-४९-१। हविष्पान्तमजरं०-१०-८८-१। वपुर्नु तच्चिकितुषे०-६-६६-१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

जातवेदसे सुनवाम सोममिति
जातवेदस्याऽच्युता, इति ।

अध्यासलिङ्गेन युक्तं जातवेदोदेवताकं तृचं विधत्ते—

अग्निर्होता गृहपतिः स राजेति जात-
वेदस्यमध्यासवत्पशुरूपं पञ्चमेऽहनि
पञ्चमस्याह्नो रूपम् ॥ ८ ॥ इति ।

त्रिष्टुप्छन्दस्कस्य तृचस्यावसाने तातरेमेत्यधिकः पादोऽध्यासः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (८) [ १६१ ] ।

---

अथ षष्ठमहरारभ्यते—

देवक्षेत्रं वा एतद्यत्षष्ठमहर्देवक्षेत्रं वा एत
आगच्छन्ति ये षष्ठमहरागच्छन्ति, इति ।

द्वादशाहमध्ये नवरात्रान्तर्गते पृष्ठ्यषडहे यत्षष्ठमहरस्ति तदेतद्देवक्षेत्रं वै देवानां निवासस्थानमेव । एवं सति ये यजमानाः षष्ठमहरनुतिष्ठन्ति, एते देवानां निवासस्थानमागच्छन्ति ।

अथास्मिन्षष्ठेऽहनि ऋतुप्रैषेषु ऋतुयाज्यासूक्ते कंचिद्विशेषं विधातुं प्रस्तौति—

न वै देवा अन्योन्यस्य गृहे वसन्ति
नर्तुर्ऋतोर्गृहे वसतीत्याहुस्तद्यथायथमृत्विज
ऋतुयाजान्यजन्त्यसंप्रदायं तद्यथर्त्वृतून्क-
ल्पयन्ति यथायथं जनताः, इति ।

देवाः सर्वेऽप्यन्योन्यस्य गृहे वासं नैव कुर्वन्ति किंतु स्वे स्व एव गृहे । एवं च सत्यृतुरप्यृतोरन्यस्य स्थाने न वसति किंतु सर्वोऽपि वसन्ताद्यृतुः स्वे स्व एव स्थाने निवसति । तस्मात्कारणाद्यथायथं स्वस्वस्थानमनतिक्रम्य सर्वेऽप्यृत्विज

---

जातवेदसे सुनवाम०—१-९९-१ । अग्निर्होता गृहपतिः०—६-१५-१३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऋतुयाजान्यजयुरसंप्रदायमन्यस्मा अदत्त्वा । अयमर्थः । ऋतुग्रहाणां प्रचारो यदा वर्तते तदानीं मैत्रावरुणः प्रैषसूक्तगतेन मन्त्रेण होत्रादीन्प्रेष्यति । ते च याज्यया वषट्कुर्वन्ति । अध्वर्युयजमानौ तु प्रेषितौ स्वस्वयाज्यां होत्रे प्रयच्छतः । तदिदं प्रकृतावनुष्ठानम् । अत्र तु तौ होत्रे न प्रयच्छतः किंतु स्वयमेव याज्यां पठत इति । तथा सति यथर्तु तं तमृतुमनतिक्रम्य सर्वानृतूनृत्विजः कल्पयन्ति स्वस्वप्रयोजनसमर्थान्कुर्वन्ति । ऋतूनां तथा कल्पने सति जनता जनसमूहा यथायथं स्वं स्वं स्थानमतिक्रम्य व्यवस्थिताः सुखिनो भवन्ति । एवमृतुयाजा अत्र प्रस्तुतास्तत्रैतच्चिन्त्यते–किमृतुयाजेषु प्रैषवषट्कारौ प्रकृतिवन्न कर्तव्यावुत कर्तव्यावाहोस्वित्प्रकारान्तरेण कर्तव्याविति ।

तत्र तावदकरणपक्षमुपन्यस्यति—

तदाहुर्नर्तुप्रैषैः प्रेषितव्यं नर्तुप्रैषैर्वषट्कृत्यं वाग्वा ऋतुप्रैषा आप्यते वै वाक्षष्ठेऽहनीति, इति ।

ऋतुयाजार्थं मैत्रावरुणेन पठितव्या मन्त्रा ऋतुप्रैषाः । तैः प्रैषमन्त्रैर्होत्रादीन्प्रति च न प्रेषितव्यम् । होता यक्षदिन्द्रमित्यादिभिः प्रैषणं न कर्तव्यम् । होत्रादिभिश्चर्तुप्रैषमन्त्रैर्न वषट्कर्तव्यम् । याज्यात्वेन न पठितव्या इत्यर्थः । तत्रेयमुपपत्तिः । य ऋतुप्रैषास्ते सर्वेऽपि वाग्वै वाग्रूपा एव । वाक्च षष्ठेऽहन्याप्यायते समाप्याय( प्य )ते । न हि समाप्तायां वाचि मन्त्रप्रयोगो युज्यत इति निषेधवादिनामभिप्रायः ।

तेषामेव मतमाश्रित्य विधिवादिनां पक्षे दोषं दर्शयति—

यदृतुप्रैषैः प्रेष्येयुर्यदृतुप्रैषैर्वषट्कुर्युर्वाचमेव तदाप्तां श्रान्तामृक्णवहीं वहराविणीमृच्छेयुः, इति ।

य ऋ( ॠ )तुप्रैषास्तत्पूर्वको वषट्कारश्चानुष्ठीयेरंस्तदानीमाप्तां वाचमेव ऋच्छेयुः । कीदृशीं वाचमृक्णवहीं वहो बलीवर्दस्य लाङ्गलादिवहनप्रदेशः । वृ(ऋ)क्णो भग्नः । वृ(रु)जो भङ्ग इति धातुः । वृ(ऋ)क्णो भग्नो वहो वहनप्रदेशो यस्या वाचः सा, * ऋक्णवही । श्रान्तत्वाद्यज्ञभारं वोढुमशक्तेत्यर्थः । वहराविणीमशक्यवहननिमित्तो रावो रोदनरूपो ध्वनिर्यस्याः सा वहराविणी । तादृशीमुपद्रवद्वययुक्तां कृत्वा वाचं विनाशयेयुः ।

---

* छान्दसं संप्रसारणम् ।

---

१ क. ख. झ. ट. अन्ते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एवमनुष्ठानपक्षे दोषमुक्त्वा निषेधपक्षे व्यवस्थिते सति विधिवादी स्वाभिप्रेतमनुष्ठानं हृदि निधाय निषेधपक्षे बाधमुपन्यस्यति—

यदेभिर्न प्रेष्येयुर्यदेभिर्न वषट्कुर्युरच्युताद्यज्ञस्य च्यवेरन्यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा ईयुः, इति ।

यदु यदि वा एभिर्मन्त्रैर्न प्रेष्येयुर्यदि वा एभिर्याज्यामन्त्रैर्न वषट्कुर्युस्तदानीमृत्विजो यज्ञस्याच्युतादविनष्टात्प्रयोगाच्च्यवेरन्विनश्येयुर्यज्ञप्रयोगः साङ्गो न भवेदित्यर्थः । किंचैतस्माद्यज्ञात्स्वकीयप्राणात्प्रजापतेः स्वकीययजमानाद्गवादिपशुभ्यश्च जिह्मा ईयुर्ऋत्विजः सर्वेऽपि कुटिला भूत्वा गच्छेयुर्यज्ञप्राणयजमानपशुभ्यो भ्रष्टा भवेयुरित्यर्थः ।

इत्थं विधिनिषेधपक्षयोरुभयोरपि बाधमुक्त्वा प्रकारान्तरेणानुष्ठानं सिद्धान्तयति—

तस्मादृग्मेभ्य एवाधि प्रेषितव्यमृग्मेभ्योऽधि वषट्कृत्यं तन्न वाचमाप्तां श्रान्तामृकणवहीं वहराविणीमृच्छन्ति नाच्युताद्यज्ञस्य च्यवन्ते न यज्ञात्प्राणात्प्रजापतेः पशुभ्यो जिह्मा यन्ति ॥ ९ ॥ इति ।

यस्मादनुष्ठानपक्षे श्रान्तामित्याद्युक्तदोषः परित्यागपक्षे त्वच्युतादित्याद्युक्तदोषस्तस्माद्दोषद्वयपरिहाराय प्रकारान्तरेणानुष्ठेयम् । प्रकृतौ हि मैत्रावरुणस्तं तं प्रैषमन्त्रं पठित्वा होतर्यजेत्यादिना प्रेष्यति । होत्रादयश्च तत ऊर्ध्वं याज्यां प्रैषरूपामेव पठित्वा तदन्ते वौषडिति वषट्कुर्वन्ति । अत्र तु न तथा कर्तव्यम् । किं तर्हि ऋग्मेभ्य एवाधि ऋक्शिरस्केभ्यो होत्रादिविषयप्रैषेभ्य एवोर्ध्वं मैत्रावरुणो होतर्यजेत्यादिना प्रेष्येत् । होत्रादयश्च तथैव ऋग्मेभ्योऽधि वषट्कृत्य तुभ्यं हिन्वान इत्याद्यृक्शिरस्कैः प्रैषैर्यजेयुः । तथा सति प्रकृतिवदनुष्ठानाभावाद्वाचमाप्तामित्यादिरनुष्ठानपक्षे प्रोक्तो दोषो न भवति । अनुष्ठानपरित्यागस्याप्यभावात्प्रतिषेधपक्षे प्रोक्तोऽच्युतादित्यादिदोषोऽपि न भविष्यति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( ९ ) [ १६२ ] ।

---

१ ट. भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ सवनद्वये कांश्चिदृग्विशेषान्विधत्ते—

पारुच्छेपीरुपदधाति पूर्वयोः सवनयोः पुरस्तात्प्रस्थितयाज्यानां रोहितं वै नामैतच्छन्दो यत्पारुच्छेपमेतेन वा इन्द्रः सप्त स्वर्गाँल्लोकानरोहत्, इति।

प्रातःसवने माध्यंदिनसवने च याः प्रस्थितयाज्याश्चोदकेन प्रकृतितः प्राप्ता-स्तासां पुरस्तात्पारुच्छेपीः परुच्छेपाख्येन महर्षिणा दृष्टा ऋच उपदध्युः। एकैकां पारुच्छेपीमृचमुक्त्वा पश्चादेकैकां प्रस्थितयाज्यां पठेत्। वृषान्निन्द्र वृषपाणास इन्दव इत्याद्याः पिबा सोममिन्द्र सुवानमद्रिभिरित्याद्याश्च पारुच्छेप्य ऋचः सूत्रकारेण विस्पष्टमुदाहृताः। पारुच्छेपीष्वृक्षु यच्छन्दोऽस्ति तदिदं रोहितनामकम्। कथमिति तदुच्यते। एतेन पारुच्छेपीयेन च्छन्दसा पुरा कदाचिदिन्द्रः सप्त स्वर्गाँल्लोकानरोहत्। उत्तमाधमभोगावस्थानविशेषाः सप्तसंख्याकाः स्वर्गाः। रोहत्यनेन च्छन्दसेति रोहितनाम संपन्नम्।

वेदनं प्रशंसति—

रोहति सप्त स्वर्गाँल्लोकान्य एवं वेद, इति।

तस्मिंश्छन्दसि चोद्यमुद्भावयति—

तदाहुर्यत्पञ्चपदा एव पञ्चमस्याह्नो रूपं षट्पदाः षष्ठस्याथ कस्मात्सप्तपदाः षष्ठेऽहञ्छस्यन्त इति, इति।

संख्यासाम्यात्पञ्चपदोपेता ऋचः पञ्चमेऽहनि युक्ताः षट्पदोपेताः षष्ठेऽहनि। पारुच्छेप्यस्तु सप्तपदोपेता अतः षष्ठेऽहनि तच्छंसनमयुक्तमिति चोद्यवादिनामभिप्रायः।

तत्रोत्तरमाह—

षड्भिरेव पदैः षष्ठमहराप्नुवन्त्यपच्छिद्य(यै)वैतदहर्यत्सप्तमं तदेव सप्तमेन पदेनाभ्यारभ्य वसन्ति वाचमेव तत्पुनरुपयन्ति संतत्यै, इति।

एकैकस्यामृचि य एते प्रथमभाविनः षट् पादास्तैः सर्वैर्यदा षष्ठमहराप्नुवन्ति

१ क. ख. झ. ट. °ते। तए°। २ ख. षट्पदा°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तदानीमुपरितनं यत्सप्तममहस्तदपच्छिद्यैव पृथक्त्वेन तस्य विच्छेदं कृत्वैव प्राप्नोति। तस्माद्विच्छिन्नं सप्तममहस्तेन सप्तमेन पा(प)देनाऽभिमुख्येनोपक्रम्य वसन्ति। तथा सति विच्छिन्नां वाचमेव पुनरपि प्राप्नुवन्ति। तच्च मध्यमयोरुपहयोः संतत्यै संपद्यते।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

संततैस्त्र्यहैरव्यवच्छिन्नैर्यन्ति य
एवं विद्वांसो यन्ति ॥ १० ॥ इति।

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये पञ्चमः खण्डः ॥५॥ (१०) [१६३]।

---

पारुच्छेपीयं छन्द उपाख्यानेन प्रशंसति—

देवासुरा वा एषु लोकेषु समयतन्त ते वै देवाः षष्ठेनैवाह्नैभ्यो लोकेभ्योऽसुरान्प्राणुदन्त तेषां यान्यन्तर्हस्तीनानि वसून्यासंस्तान्यादाय समुद्रं प्रौप्यन्त त एतेनैव च्छन्दसाऽनुहायान्तर्हस्तीनानि वसून्याददत तद्यदेतत्पदं पुनः-पदं स एवाङ्कुश आसञ्जनाय, इति।

देवाश्चासुराश्च लोकविषये यदा समयतन्त संग्राममकुर्वत तदानीं ते देवाः षष्ठमहरनुष्ठाय तत्सामर्थ्येनासुराँल्लोकेभ्यो निःसारितवन्तः। तदानीं तेषामसुराणां संबन्धीनि वसूनि धनानि बहून्यासन्। कीदृशान्यन्तर्हस्तीनानि हस्तिनां गजानामुपरि भारवहनाय स्थापितानि। यद्वा स्वकीयस्य हस्तस्यान्तर्मध्ये गोप्यत्वेन स्थापितान्यन्तर्हस्तीनानि। तानि सर्वाण्यादायासुराः समुद्रं प्रौप्यन्त। समुद्रं गतवद्भिरसुरैस्तस्मिन्समुद्रे तानि धनानि प्रक्षिप्तानि। ततो देवा एतत्पारुच्छेपीयं छन्दोऽनुष्ठाय तस्मात्सामर्थ्यादनुहाय पृष्ठतो गत्वा हस्तिनामुपरि स्थितानि तदीयहस्तेऽवस्थितानि वा सर्वाणि धनान्याददत स्वीकृतवन्तः। समुद्रमध्यस्थितानां धनानामाकर्षणे किं साधनमिति तदुच्यते। तत्र पारुच्छेपीयास्वृक्षु यदेतत्पदं पाठोऽस्ति. कीदृशं पुनःपदं षट्सु पादेषु

Digitized by Arya Samaj Foundation Chennai and eGangotri



सम्प्रक्षेपु पुनः पश्चादुच्चार्यमाणः सुमृळीको न आगहीत्येवंविधः सप्तमः पादः। स एव धनानामासञ्जनायाऽऽसक्तानि कृत्वा समाकर्षणायाङ्कुशोऽभूत्। यथा लोकेऽङ्कुशेनाऽऽकृष्यते तद्वत्सप्तमेन पादेनासुरधनान्याकृष्टानि।

वेदनं प्रशंसति--

आ द्विषतो वसु दत्ते निरेनमेभ्यः सर्वेभ्यो लोकेभ्यो नुदते य एवं वेद ॥ ११ ॥ इति।

वेदिता द्विषतः शत्रोः संबन्धि वसु धनं सर्वमादत्ते। एवं (नं) च द्विषन्तं शत्रुं लोकेभ्यो निर्णुदते निःसारयति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये षष्ठः खण्डः ॥ ६ ॥ (११) [१६४]।

---

इदानीं षष्ठमहर्विधत्ते--

द्यौर्वै देवता षष्ठमहर्वहति त्रयस्त्रिंशः स्तोमो रैवतं सामातिच्छन्दाश्छन्दो यथादेवतमेनेन यथास्तोमं यथासाम यथाछन्दसं राध्नोति य एवं वेद, इति।

पूर्वत्र वागेकं गौरेकं द्यौरेकमिति यत्तृतीयं देवतास्वरूपमुक्तं सेयं देवता षष्ठमहर्निर्वहति। तथा स्तोमानां मध्ये त्रयस्त्रिंशः स्तोमो निर्वाहकः। तस्य स्तोमस्य रूपं छन्दोगैरेवमाम्नायते--'एकादशभ्यो हिं करोति स तिसृभिः स सप्तभिः स एकया। एकादशभ्यो हिं करोति स एकया स तिसृभिः स सप्तभिरेकादशभ्यो हिं करोति स सप्तभिः स एकया स तिसृभिरन्तो वै त्रयस्त्रिंशः' इति। अस्यायमर्थः। एक एव तृचस्त्रिभिः पर्यायैरावर्तनीयः। तत्र प्रथमे पर्याये प्रथमायास्त्रिरभ्यासो मध्यमायाः सप्तकृत्वोऽभ्यास उत्तमायाः सकृत्पाठः। द्वितीयपर्याये प्रथमायाः सकृत्पाठो मध्यमायास्त्रिरभ्यास उत्तमायाः सप्तकृत्वोऽभ्यासः। तृतीयपर्याये प्रथमायाः सप्तकृत्वोऽभ्यासो मध्यमायाः सकृत्पाठ उत्तमायास्त्रिरभ्यासः। एवं त्रयस्त्रिंशस्तोमनिष्पत्तिरिति। रेवतीर्नः सधमादे, इत्यस्यामृच्युत्पन्नं साम रैवतम्। गायत्र्यादिभ्यश्छन्दोभ्योऽक्षरैरतिक्रान्तत्वादतिच्छन्दा इति कस्यचिच्छन्दसो नामधेयम्। अन्यत्पूर्ववद्व्याख्येयम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत्र शस्त्रगतमन्त्रलिङ्गानि दर्शयति—

यद्वै समानोदर्कं तत्षष्ठस्याह्नो रूपं यद्ध्येव तृतीयमहस्तदेतत्पुनर्यत्षष्ठं यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्यत्पर्यस्तवद्यत्त्रिवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितः, इति ।

समानोदर्कं तुल्यसमाप्तिकं यदस्ति तत्षष्ठस्याह्नो रूपम् । यद्ध्येव यदप्यन्यत्पूर्वत्र प्रथमे त्र्यहे तृतीयमहरस्ति तदेतत्पुनरत्रानुसंधेयम् । यदिदानीं षष्ठमहः प्रस्तूयते तदेव भवति । पूर्वस्मिंस्तृतीयेऽहनि यद्यल्लिङ्गमुक्तं तत्षष्ठेऽपि द्रष्टव्यमित्यर्थः । यदश्ववदित्यादिना यदसौ लोकोऽभ्युदित इत्यन्तेन तान्येव लिङ्गानि दर्शितानि ।

अथ विशेषलिङ्गानि दर्शयति—

यत्पारुच्छेपं यत्सप्तपदं यन्नाराशंसं यन्नाभानेदिष्ठं यद्रैवतं यदतिच्छन्दा यत्कृतं यत्तृतीयस्याह्नो रूपमेतानि वै षष्ठस्याह्नो रूपाणि, इति ।

परुच्छेपेन दृष्टं पारुच्छेपम् । सप्तभिः पादैरुपेतं सप्तपदम् । नराशंसाख्यमन्त्रसंबन्धि नाराशंसम् । नाभानेदिष्ठेन दृष्टं नाभानेदिष्ठम् । रैवतसामसंबन्धि रैवतम् । सप्तभ्यश्छन्दोभ्योऽधिकाक्षरत्वादतिच्छन्दाः । भूतार्थवाचिप्रत्यययुक्तं धातुमात्रं(त्र)कृतं तदप्युक्तमनुक्तं वा तृतीयस्याह्नो निरूपकम् । एतानि सर्वाणि षष्ठस्याह्नो निरूपकाणि वेदितव्यानि ।

अथाऽऽज्यशस्त्रं विधत्ते—

अयं जायत मनुषो धरीमणीति षष्ठस्याह्न आज्यं भवति पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

परुच्छेपेन दृष्टत्वमेकं लिङ्गम् । अतिच्छन्दस्त्वं द्वितीयम् । सप्तपादोपेतत्वं तृतीयम् । एते(तल्लि)न लिङ्गत्रये(यं)ण षष्ठस्याह्नो निरूपकम् ।

---

अयं जायत मनुषो धरीमणि०—१–१२८–१ ।

---

१ क. ख. ट. प्रसूयते ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ प्रउगशस्त्रं विधत्ते—

स्तीर्णं बर्हिरुप नो याहि वीतय आ वां रथो नियुत्वान्वक्षदवसे सुषुमायातमद्रिभिर्युवां स्तोमेभिर्देवयन्तो अश्विनाऽवर्मह इन्द्र वृषन्निन्द्रास्तु श्रौषळोषूणो अग्ने शृणुहि त्वमीळितो ये देवासो दिव्येकादशस्थेयमददाद्रभसमृणच्युतमिति प्रउगं पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽहानि षष्ठस्याह्नो रूपम्, इति ।

स्तीर्णं बर्हिरित्याद्यस्तृच आवां रथ इति द्वितीयः सुषुमायातमिति तृतीयो युवां स्तोमेभिरिति चतुर्थोऽवर्मह इति द्वे ऋचौ वृषन्निन्द्रेत्येकोभाभ्यां पञ्चमस्तृचः । अस्तु श्रौषळित्येका । ओषूण इत्येका । ये देवास इत्येका । एतत्त्रितयं षष्ठः । इयमददादिति सप्तमः । इत्येतत्सर्वं प्रउगशस्त्रं कुर्यात् । लिङ्गानि पूर्ववत् ।

शस्त्रान्तरस्य प्रतिपदं तृचं विधत्ते—

स पूर्व्यो महानामिति मरुत्वतीयस्य
प्रतिपदन्तो वै महदन्तः षष्ठमहः
षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अत्र महानामिति महच्छन्दः पादस्यान्ते दृश्यते । षष्ठं चाहः पृष्ठ्याख्यस्य षडहस्यान्तो भवति । तस्मादन्तत्वलिङ्गेन षष्ठेऽहनि योग्यम् । यद्वा महतोऽप्यधिकस्यान्यस्याभावान्महदन्त इत्यन्तवत्त्वं व्याख्येयम् ।

---

स्तीर्णं बर्हिरुप नो याहि०—१—१३५—१ । आवां रथो नियुत्वा०—१—१३५—४ । सुषुमायातमद्रिभि०—१—१३७—१ । युवां स्तोमेभिर्देवयन्तो०—१—१३९—३ । अवर्मह इन्द्र०—१—१३३—६ । वृषन्निन्द्र वृषणा०—१—१३९—६ । अस्तु श्रौषट्पुरो अग्निं०—१—१३९—१ । ओषूणो अग्ने०—१—१३९—७ । ये देवासो दिव्येकादशस्थ०—१—१३९—११ । इयमददाद्रभसं०—६—६१—१ । स पूर्व्यो महानां०—८—६३—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तृतीयेनाह्ना सह समानशस्त्रक्लृप्तियुक्तं मन्त्रजातं दर्शयति—

त्रय इन्द्रस्य सोमा इन्द्र नेदीय एदिहि प्र नूनं ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो नकिः सुदासो रथमिति तृतीयेनाह्ना समान आतानः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

परुच्छेपेन दृष्टं सूक्तं दर्शयति—

यं त्वं रथमिन्द्र मेधसातय इति सूक्तं पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

तुल्यावसानत्वलिङ्गोपेतं सूक्तं दर्शयति—

स यो वृषा वृष्ण्येभिः समोका इति सूक्तं समानोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

मरुत्वान्नो भवत्वित्यस्य चतुर्थपादस्य सर्वास्वृक्षु विद्यमानत्वात्समानोदर्कत्वम् ।

तृचात्मकं सूक्तान्तरं विधत्ते—

इन्द्र मरुत्व इह पाहि सोममिति सूक्तं तेभिः साकं पिबतु वृत्रखाद इत्यन्तो वै खादोऽन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अस्मिन्सूक्ते तेभिः साकमित्यादिस्तृतीयस्यामृचि तृतीयः पादः । तत्र वृत्रं खादति भक्षयतीति वृत्रखादस्तेन भक्षणेन वृत्रस्यावसानं मरणं संपद्यते । तस्मात्खादो वृत्रस्यान्तः । षष्ठस्यान्तत्वं पूर्वमेवोक्तमतोऽन्तवत्त्वलिङ्गम् । यद्यपीदं सूक्तं न भवति तथाऽपि सूक्तस्थानापन्नत्वात्सूक्तमित्युक्तम् ।

---

त्रय इन्द्रस्य सोमाः०—८—२—७ । इन्द्र नेदीय एदिहि०—८—५३—५ । प्र नूनं ब्रह्मणस्पतिः०—१—४०—५ । अग्निर्नेता भग इव०—३—२०—४ । त्वं सोम क्रतुभिः०१—९१—२ । पिन्वन्त्यपो मरुतः०—१—६४—६ । नाकिः सुदासो रथं०—७—३२—१ । यं त्वं रथमिन्द्र मेधसातये०—१—१२९—१ । स यो वृषा वृष्ण्येभिः०—१—१००—१ । इन्द्र मरुत्व इह पाहि०—३—५१—७ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सूक्तगतं छन्दः प्रशंसति—

तद्ु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

पूर्ववद्व्याख्येयम् ।

शस्त्रस्यान्तिमं तृचं विधत्ते—

अयं ह येन वा इदमिति पर्यासः स्वर्मरुत्वता जितमित्यन्तो वै जितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

स्वर्मरुत्वता जितमिति द्वितीयः पादस्तत्र भूतार्थवाचिक्तप्रत्ययान्तो यज-(जय)तिधातुरेकं लिङ्गम् । किंच जयस्य युद्धावसानत्वाज्जितमिति शब्दोऽन्तप्रतिपादकस्तदेतदन्तवत्त्वमपरं लिङ्गम् ।

तत्रावस्थितच्छन्दःप्रशंसाद्वारा निविद्धानं विधत्ते—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति, इति ।

पूर्ववद्व्याख्येयम् ।

रैवतसामसाध्यपृष्ठस्तोत्रस्याऽऽधारभूतं स्तोत्रियं तृचमनुरूपं तृचं च विधत्ते—

रेवतीर्नः सधमादे रेवाँ इद्रेवतः स्तोतेति रैवतं पृष्ठं भवति बार्हतेऽहनि षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

रेवतीर्नः सधमाद इति स्तोत्रियस्तृचो रेवानित्यनुरूपः । रैवतं साम बृहत्साम्न उत्पन्नमहश्च युग्मत्वाद्बार्हतम् । सोऽयं बृहत्संबन्धो भवति लिङ्गम् ।

---

अयं ह येन वा इदं०—८-७६-४ । रेवतीर्नः सधमादे०—१-३०-१३ । रेवाँ इद्रेवतः स्तोता०—८-२-१३ ।

---

१ क. ख. झ. ट. °स्थितं छन्दः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अच्युतत्वलिङ्गोपेतामृचं विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

तां धाय्यामनु बृहत्साम्नो योनिभूतं प्रगाथं विधत्ते—

त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति
बार्हतं ह्येतदहरायतनेन, इति ।

अह्नो बार्हतत्वं पूर्वमेवोक्तं तदेवात्र बृहत्सामसंबन्धरूपं लिङ्गम् ।

रैवतसामसंबन्धिनं सामप्रगाथं विधत्ते—

इन्द्रमिद्देवतातय इति सामप्रगाथो निनृत्तवा-
न्षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अस्य प्रगाथस्य सर्वेष्वपि पादेष्विन्द्रशब्दावृत्तेस्तालध्वनिसदृशत्वाभिनृ-
त्तवल्लिङ्गम् ।

अच्युतत्वलिङ्गकं सूक्तविशेषं विधत्ते—

त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ १२ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-
भाष्ये द्वाविंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (१२) [ १६५ ]।

---

पारुच्छेपत्वादिलिङ्गत्रयोपेतं सूक्तं विधत्ते—

एन्द्र याह्युप नः परावत इति सूक्तं
पारुच्छेपमतिच्छन्दाः सप्तपदं षष्ठेऽ-
हनि षष्ठस्याह्नो रूपम्, इति ।

तुल्यसमाप्तिकत्वलिङ्गोपेतं सूक्तं विधत्ते—

प्र घा न्वस्य महतो महानीति सूक्तं समा-
नोदर्कं षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

---

यद्वावान पुरुतमं०—१०—७४—६ । त्वामिद्धि हवामहे०—६—४६—१ । इन्द्रमिद्देवतातये०—८—३—५ । त्यमू षु वाजिनं०—१०—१७८—१ । एन्द्र याह्युप नः परावतः०—१—१३०—१ । प्र घा न्वस्य महतो महानि०—२—१५—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सोमस्य ता मद इन्द्रश्चकारेत्यस्य चतुर्थपादस्य बहुष्वृक्षु विद्यमानत्वात्स-मानोदर्कत्वम् ।

तिष्ठतिधातुरूपलिङ्गयुक्तं सूक्तं विधत्ते—

अभूरेको रयिपते रयीणामिति सूक्तं रथमा तिष्ठ तुविनृम्ण भीममित्यन्तो वै स्थितमन्तः षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अभूरेक इत्यस्य सूक्तस्य पञ्चम्यामृचि रथमा तिष्ठेति द्वितीयः पादस्तत्र स्थितशब्दार्थवाची तिष्ठतिधातुर्विद्यते । स च गतिनिवृत्तिरूपत्वादन्तो भवति। षष्ठस्याह्नोऽन्तत्वं पूर्वमुक्तम् । अतोऽन्तवत्त्वं लिङ्गम् ।

तत्रत्यं छन्दः प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

पूर्ववद्व्याख्येयम् ।

निष्केवल्यस्य शस्त्रस्यान्तिमं तृचं विधत्ते—

उप नो हरिभिः सुतमिति पर्यासः समानोदर्कः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

तिसृष्वप्यृक्षूप नो हरिभिरिति पादस्यैकत्वात्समानोदर्कत्वम् ।

तत्र निविद्धानं विधत्ते—

ता उ गायत्र्यो गायत्र्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माद्गायत्रीषु निविदं दधाति, इति ।

पूर्ववद्व्याख्येयम् ।

शस्त्रान्तरस्य प्रतिपदेकामृचं विधत्ते—

अभि त्यं देवं सवितारमोण्योरिति वैश्वदेवस्य

---

अभूरेको रयिपते०—६—३१-१ । उप नो हरिभिः सु[1]०—८—७३-१ ।

---

1 क. ख. झ. ञ. 'कं वि' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिपदतिच्छन्दाः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अतिच्छन्दस्त्वमत्र लिङ्गम् ।

प्रतिपच्छेषमृग्द्वयमनुचरस्तृचं च विधत्ते—

तत्सवितुर्वरेण्यं दोषो आगादित्यनुचरोऽन्तो वै गतः

मन्तः षष्ठमहः षष्ठेऽहानि षष्ठस्याह्नो रूपम्, इति ।

तत्सवितुरिति द्वे ऋचौ प्रतिपच्छेषभूते । दोषो आगादित्येष सूत्रे पठितस्तृचोऽनुचरः । अत्र भूतार्थवाची गमिधातुर्योऽस्ति तस्यार्थ आगादिति शब्देनोच्यते । भूतार्थवाचित्वाद्गतं गमनसमाप्तिरन्तो भवति । तदेतदन्तवत्त्वं लिङ्गम् । यस्मादत्र सूत्रकारोऽभि त्यमित्येकामृचं तत्सवितुरिति द्वे ऋचौ मिलित्वा प्रतिपत्तृचत्वेनोक्त्वा दोषो आगादित्यादिकस्तृचोऽनुचर इत्युक्तवांस्तस्मादस्माभिस्तत्सवितुरिति वाक्यं पूर्वशेषत्वेन विच्छेदनीयम् ।

सवितृदेवताकं सूक्तं विधत्ते—

उदुष्य देवः सविता सवायेति सावित्रं शश्वत्तमं तदुपा वह्निरस्थादित्यन्तो वै स्थितमन्तः षष्ठमहः षष्ठेहऽनि षष्ठस्याह्नो रूपम्, इति ।

शश्वत्तममित्यादिर्द्वितीयः पादस्तास्मिन्नस्थादिति भूतार्थवाचिप्रत्ययान्तास्तिष्ठतिधातुः श्रुतः । तच्च स्थितत्वं गमनस्यान्तस्तदिदमन्तवत्त्वं लिङ्गम् ।

तुल्यसमाप्तिलिङ्गकं सूक्तं विधत्ते—

कतरा पूर्वा कतराऽपराऽयोरिति द्यावापृथिवीयं समानोदर्कं षष्ठेऽहानि षष्ठस्याह्नो रूपम्, इति ।

द्वितीयस्या ऋचश्चतुर्थे पादे द्यावा रक्षतं पृथिवी इत्युक्तत्वादिदं सूक्तं द्यावापृथिवीयम् । तत्र द्यावा रक्षतमिति पादस्य बहुषु ऋक्षु विद्यमानत्वात्समानोदर्कत्वम् ।

ऋभुदेवताकं सूक्तद्वयं विधत्ते—

किमु श्रेष्ठः किं यविष्ठो न आजगन्नुप नो वाजा

---

तत्सवितुर्वरेण्यं०—३–६२–१० । उदुष्यं देवः सविता सवाय०—२–३८–१ । कतरा पूर्वा कतराऽपराऽयोः०—१–१८५–१ । किमु श्रेष्ठः किं यविष्ठो०—१–१६१–२ । उप नो वाजा अध्वरं०—४–३७–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अध्वरमृभुक्षा इत्यार्भवं नाराशंसं त्रिवत्षष्ठेऽहानि षष्ठस्याह्नो रूपम्, इति ।

किमु श्रेष्ठ इत्यस्मिन्सूक्ते त्रयोदशर्चः शंसनीयाः । तत्र चतुर्थ्या ऋचः प्रथमपादे चकृवांस ऋभव इति श्रुतत्वादिदमार्भवम् । उप न इति सूक्ते चतस्रः । तत्र प्रथमपाद ऋभुक्षा इति श्रुतत्वात्तदप्यार्भवम् । ऋभवो हि नरा मनुष्याः । अत एव मनुष्यानन्तःप्रवेशयितुमसहमाना अग्निवस्वादयः सोमपानवेलायामृभून्निःसारितवन्तः । एतच्चाऽऽर्भवं शंसन्त्यृभवो वै देवेष्वित्यादावुपाख्याने तुल्यमवगम्यते । ते च नरा ऋभवः शस्यन्ते कथ्यन्ते यस्मिन्सूक्ते तन्नाराशंसं तदेकं लिङ्गम् । तथैवोप नो वाजा इति सूक्तस्य तृतीयायामृचि त्र्युदयमिति त्रिशब्दः श्रुतस्तदेतत्त्रित्वं द्वितीयं लिङ्गम् ।

अथ बहुदेवताकं सूक्तं विधत्ते—

इदमित्था रौद्रं गूर्तवचा ये यज्ञेन दक्षिणया समक्ता इति वैश्वदेवम् ॥ १३ ॥ इति ।

इदमित्थेत्येकं सूक्तम् । ये यज्ञेनेत्यपरम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ ( १३ ) [१६६] ।

---

पूर्वोक्ते सूक्तद्वये लिङ्गं दर्शयति—

नाभानेदिष्ठं शंसति, इति ।

नाभानेदिष्ठाख्यः कश्चिन्महर्षिस्तेन दृष्टं पूर्वोक्तं सूक्तद्वयं नाभानेदिष्ठं तच्छंसेत् । अयं महर्षिसंबन्ध एवात्र लिङ्गम् ।

तदेतत्सूक्तद्वयं प्रशंसितुमुपाख्यानमाह—

नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसन्तं भ्रातरो निरभजन्सोऽब्रवीदेत्य किं मह्यमभाक्तेत्येतमेव निष्ठावमववदितारमित्यब्रुवंस्तस्माद्धाप्येतर्हि पितरं पुत्रा निष्ठावोऽववदितेत्येवाऽऽचक्षते, इति ।

---

इदमित्था रौद्रं०—१०–६१–१ । ये यज्ञेन दक्षिणया०—१०–६२–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मनोः पुत्रो नाभानेदिष्ठो नाम बालको गुरुगृहे ब्रह्मचर्यं वसत्युपनीतः सन्वेदमध्येतुं तत्र तिष्ठति । तदानीं तस्य ज्येष्ठभ्रातरो मनोः पितुर्धनं स्वार्थं विभजन्तस्तं बालकं निरभजन्भागरहितमकुर्वन् । बालोऽयं ब्रह्मचारी वेदमेवाभ्यस्यतु किं तस्य धनेनेति मत्वा भागं न दत्तवन्तः । तदानीं स नाभानेदिष्ठ एत्य वेदाभ्यासं कृत्वा समागत्य भ्रातॄनिदमब्रवीत् । हे भ्रातरो मह्यं किमभाक्त किंनाम वस्तु भागत्वेन यूयं पृथक्त्वेन कृतवन्त इति । ते च भ्रातर एतमेव मनुं पितरं हस्तेन प्रदर्श्य हे नाभानेदिष्ठ वयं नो जानीमस्तमेव पृच्छेत्यब्रुवन् । कीदृशं मनुम् । निष्ठावम् । धनविभागादेर्धर्मरहस्यं(स्यस्य) निःशेषेण स्थितिर्निर्णयो निष्ठा सा यस्मिन्नस्ति स निष्ठावः । तादृशं धर्मरहस्यनिर्णेतारमित्यर्थः । अववदितारम् । ज्येष्ठपुत्रस्यैतावत्, द्वितीयस्यैतावत्, अन्यस्यैतावत्, इत्यवच्छिद्य वे(व)दितुं समर्थोऽववदिता तादृशम् । अयमर्थः । अयं मनुर्धर्मशास्त्रकर्तृत्वाद्धर्मरहस्यनिर्णयवान्पितृत्वेन तवैतावदित्यवच्छिद्य वक्तुं समर्थश्च । तस्मान्मदीयो भागः क इति मनुमेव पृच्छेत्यब्रुवन् । यस्मादस्य भ्रातर एवमुक्तवन्तस्तस्मादिदानीमपि पितरं पुत्रा इत्यनेन प्रकारेणाऽऽचक्षते । केन प्रकारेणेति सोऽभिधीयते । अयं पिता निष्ठावो निर्णयवानस्यैतावदित्यवच्छिद्य वदिता चेति ।

तत ऊर्ध्वं नाभानेदिष्ठस्य कृत्यं दर्शयति—

स पितरमेत्याब्रवीत्त्वां ह वाव मह्यं त(ता)ताभाक्षुरिति तं पिताऽब्रवीन्मा पुत्रक तदादृथा अङ्गिरसो वा इमें स्वर्गाय लोकाय सत्रमासते ते षष्ठं षष्ठमेवाहरागत्य मुह्यन्ति तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्रपरिवेषणं तत्ते स्वर्यन्तो दास्यन्तीति तथेति, इति ।

स नाभानेदिष्ठो भ्रातृभिस्तथोक्तः सन्पितरं प्रत्यागत्येदमब्रवीत् । हे पितर्मह्यं त्वा(त्वां) ह वाव त्वामेव भ्रातरः सर्वेऽप्यभाक्षुर्भागमकार्षुरतो मदीयो भागस्त्वय्यस्ति तं मे देहीत्यभिप्रायः । ततस्तं नाभानेदिष्ठं पिता मनुरेवमब्रवीत् । हे पुत्रक बालक भ्रातॄणां वचनं माऽऽदृथास्तास्मिन्वचन आदरं मा कार्षीः । नास्त्येव मद्धस्ते त्वदीयो भागः । सर्वमपि धनं त्वद्भ्रातृभिर्गृहीतम् । तव तु धनप्राप्त्यर्थमेकमुपायं कथयिष्यामि । अङ्गिरोनामका महर्षय इमे

७५

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



समीपदेशवर्तिनः स्वर्गार्थं सत्रमनुतिष्ठन्ति। ते पुनः पुनः सत्रमुपक्रम्य तदा तदा प्राप्तं तत्तत्षष्ठमेवाहरागत्य तत्र तत्र मन्त्रबाहुल्ये मुह्यन्ति भ्रान्ताः सन्तः सत्रसमाप्तिमप्राप्य सर्वदा क्लिश्यन्ति। तान्महर्षीन्षष्ठेऽहनि त्वं गत्वेदमित्थेति ये यज्ञेनेति चैते उभे सूक्ते शंसय। ततस्तेषामृषीणां यत्सहस्रसंख्याकं धनं सत्रपरिवेषणं सत्रार्थं परितः संपादितमस्ति तत्सर्वमनुष्ठानादूर्ध्वमवशिष्टं धनं ते तुभ्यमङ्गिरसो महर्षयः स्वर्गं प्राप्नुवन्तो दास्यन्तीति। तथाऽस्त्विति तत्पितृवचनं नाभानेदिष्ठोऽङ्गी चकार।

अङ्गीकारादूर्ध्वं किं कृतवानित्याशङ्क्य तद्वृत्तान्तं दर्शयति—

तानुपैत्प्रतिगृभ्णीत मानवं सुमेधस इति तमब्रुवन्किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयानीत्यब्रवीदथ यद्व एतत्सहस्रं सत्रपरिवेषणं तन्मे स्वर्यन्तो दत्तेति तथेति तानेते सूक्ते षष्ठेऽहन्यशंसयत्ततो वै ते प्र यज्ञमजानन्प्र स्वर्गं लोकम्, इति।

तानङ्गिरसो महर्षीनुपैत्, नाभानेदिष्ठः समीपं प्राप्तवान्। प्राप्य च प्रतिगृभ्णीतेत्यादिमन्त्रपादेनैव महर्षीणामग्रे किंचिद्वचनमुक्तवान्। तस्य पादस्यायमर्थः। हे सुमेधसः शोभनमेधायुक्ता आङ्गिरसो मानवं मनोः पुत्रं नाभानेदिष्ठाख्यं मां प्रतिगृभ्णीत यूयं स्वी कुरुतेति। तथा वदन्तं नाभानेदिष्ठं प्रति मुनय इदमब्रुवन्। हे नाभानेदिष्ठ किंकामः कीदृगपेक्षायुक्तः सन्नस्मान्प्रत्येवं वदसीति। ततः स नाभानेदिष्ठोऽब्रवीत्। हे महर्षयो वो युष्माकमिदमेव षष्ठमहः प्रज्ञापयानि प्रकर्षेण बोधयामीति। अथ बोधनानन्तरं सत्रपरिवेषणं भवद्भिः सत्रार्थं संपादितमनुष्ठानादूर्ध्वमवशिष्टं यदेतत्सहस्रसंख्याकं धनमस्ति तत्सर्वं यूयं मे मह्यं स्वर्गं प्रति गच्छन्तो दत्तेति। तथेति मुनिभिरङ्गीकृते सति तान्मुनीनेते उभे सूक्ते षष्ठेऽहन्यशंसयत्। तत एव ते मुनयो यज्ञं प्रकर्षेणाजानञ्ज्ञातवन्तः। तदनुष्ठानेन स्वर्गं लोकमपि प्राजानन्।

सूक्तद्वयं प्रशस्य तद्विधिं निगमयति—

तद्यदेते सूक्ते षष्ठेऽहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्य लोकस्यानुख्यात्यै, इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्मात्सूक्तद्वयशंसनेनाङ्गिरोभिर्यज्ञः स्वर्गश्च प्रज्ञातस्तस्माद्धोता तदुभयं शंसेत् । तच्च यज्ञस्वर्गयोरवगमाय भवति ।

पुनरपि सूक्तयोर्महिमानं दर्शयितुमुपाख्यानमेवाऽऽह—

तं स्वर्यन्तोऽब्रुवन्नेतत्ते ब्राह्मण सहस्रमिति तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरत उपोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमिति सोऽब्रवीन्मह्यं वा इदमदुरिति तमब्रवीत्तद्वै नौ तवैव पितरि प्रश्न इति स पितरमैत्तं पिताऽब्रवीन्ननु ते पुत्रकादू३रित्यदुरेव म इत्यब्रवीत्तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादितेति तं पिताऽब्रवीत्तस्यैव पुत्रक तत्तु स तुभ्यं दास्यतीति स पुनरेत्याब्रवीत्तव ह वाव किल भगव इदमिति मे पिताऽऽहेति सोऽब्रवीत्तदहं तुभ्यमेव ददामि य एव सत्यमवादीरिति, इति ।

तं नाभानेदिष्ठं स्वर्यन्तः स्वर्गं प्राप्नुवन्तोऽङ्गिरसोऽब्रुवन् । हे ब्राह्मण नाभानेदिष्ठैतद्गोसहस्रं यज्ञभूमाववशिष्टं ते तुभ्यं दत्तमिति शेषः । अत्र शाखान्तरानुसारेण गोसहस्रमित्यर्थो लभ्यते । शाखान्तरे चैवमाम्नायते—'ते सुवर्गं लोकं यन्तो य एषां पशव आसंस्तानस्मा अददुः' इति । तद्गोसहस्रं समाकुर्वाणं सम्यगात्मसात्कुर्वन्तमेनं नाभानेदिष्ठं कश्चित्पुरुषो यज्ञभूमेरुत्तरत उपोत्थाय समीप एवोत्थितो भूत्वेदमब्रवीत् । कीदृशः पुरुषः । कृष्णशवासी, अतिशयेनं कृष्णं मलिनं वस्त्रं कृष्णशं तद्वस्त आच्छादयतीति कृष्णशवासी । अत्रायं मलिनवस्त्रः पुरुषः पशुस्वामी रुद्र इत्यवगन्तव्यम् । तथा च शाखान्तरे पठ्यते—'तं पशुभिश्चरन्तं यज्ञवास्तौ रुद्र आगच्छत्' इति । स रुद्रः किमब्रवीदिति तदभिधीयते । हे नाभानेदिष्ठेदं पशुसहस्रं ममैव स्वम् । तत्रेयमुपपत्तिः । वास्तुहं वास्तु(स्तौ) यज्ञभूमौ हीनं कर्मान्ते परित्यक्तं वास्तुहं तादृशं सर्वं ममैव स्वमिति सर्वत्र संप्रतिपन्नमिति । एवं पुरुषेणोक्तः स नाभानेदिष्ठः पुनरेनमब्रवीत् । हे रुद्र मह्यमेवेदं सहस्रमङ्गिरसो दत्तवन्त इति । तं तथा वदन्तं नाभानेदिष्ठं पुनः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरुषोऽब्रवीत् । हे नाभानेदिष्ठ तद्गै तस्मिन्नेव त्वदीयं मदीयमिति संदेहे सति नावावयोरुभयोरपि तवैव पितरि मनौ निर्णयार्थं प्रश्नोऽस्त्विति । ततः स नाभानेदिष्ठः पितरं प्रष्टुमैत्, आगतवान् । स पिता तेन पृष्टस्तमब्रवीत् । हे पुत्रक बालक तुभ्यमङ्गिरसो महर्षयोऽदुर्ननु दत्तवन्तः किम् । प्लुतिः प्रश्नार्था । एवं पित्रा पृष्टः स नाभानेदिष्ठो मे मह्यमदुरेव दत्तवन्त एवेत्यब्रवीत् । तर्हि कस्तव विचार इत्याशङ्किते स नाभानेदिष्ठ एवमुवाच । ते महर्षयो दत्तवन्त एव किं तु तद्गोसहस्रं कश्चित्पुरुषो मलिनवस्त्रः सन्यज्ञभूमेरुत्तरत उत्थायेदं गोसहस्रं ममैव स्वं यज्ञवास्तौ हीनत्वादित्यभिधायाऽऽदिताऽऽदानं कृतवानप- हृतवानित्यर्थः । तथा ब्रुवन्तं पुत्रं प्रति पिताऽब्रवीत् । हे पुत्रक शिशो तद्यज्ञ- वास्तौ हीनं गोसहस्रं तस्यैव रुद्रस्य स्वम् । पशुपतित्वाद्यज्ञावशिष्टस्वामित्वाच्च । किं तु तथा सत्यपि तव हानिर्नास्ति । स रुद्रस्तद्गोसहस्रं तुभ्यं दास्यतीति । यज्ञकाले तत्सर्वमङ्गिरसां धनं भवति । समाप्ते तु यज्ञे यदवशिष्टं तस्य रुद्र एव स्वामीति नाङ्गिरसां दातुमधिकारोऽस्तीत्यभिप्रायः । तथा रुद्रवचनं शाखा- न्तर एवमाम्नायते—'न वै तस्य तदीशत इत्यब्रवीद्यज्ञवास्तौ हीयते मम वै तत्' इति । ततो दास्यतीति वचनं श्रुत्वा स नाभानेदिष्ठः पुनरपि रुद्रस्य समीपमेत्येदमब्रवीत् । हे भगवन्पूज्य रुद्र तव ह वाव किल तवैव सर्वमिदं स्वमिति मदीयः पिता प्राहेति । ततः स रुद्रोऽब्रवीत् । हे नाभानेदिष्ठ तत्सर्वं तुभ्यमेव ददामि यस्त्वं सत्यमेवावादीर्न त्वनृतमुक्तवानसि तस्मात्परितोषात्स- त्यवादिने तुभ्यमेव ददामीति ।

इत्थमुपाख्यानं परिसमाप्य प्रसङ्गात्पुरुषार्थत्वेन सत्यवदनं विधत्ते—

तस्मादेवं विदुषा सत्यमेव वदितव्यम्, इति ।

एवं विदुषा सत्यस्य श्रेयोहेतुत्वं जानता ।

उपाख्यानस्य सर्वस्य तात्पर्यं दर्शयति—

स एष सहस्रसनिर्मन्त्रो यन्नाभानेदिष्ठः, इति ।

नाभानेदिष्ठेन महर्षिणा दृष्टो यो मन्त्रसमूहः स एष सहस्रसनिः । सहस्रसं- ख्याकस्य वस्तुनः सनिर्लाभो यस्मिन्मन्त्रे सोऽयं सहस्रसनिः ।

वेदनं प्रशंसति—

उपैनं सहस्रं नमति प्र षष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद ॥१४॥ इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एनं वेदिवारं सहस्रसंख्याकं धनमुपनमति प्राप्नोति । स च कालान्तरे षष्ठमहरनुष्ठाय तेन स्वर्गं लोकं प्रजानाति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये नवमः खण्डः ॥ ९ ॥ (१४) [१६७]।

---

अथ नाभानेदिष्ठीयेन सूक्तद्वयेन सह पठितव्यानि मन्त्रान्तराणि विधत्ते—

तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वालखिल्या वृषाकपिमेवयामरुतं तानि सहैव शंसेत्, इति ।

तान्येतानि वक्ष्यमाणानि चतुर्विधमन्त्रजातानि सहचराणि प्रयोगकाले सहैव वर्तन्त इत्येवं याज्ञिका आचक्षते । तत्र नाभानेदिष्ठं सूक्तद्वयं यदस्ति, वालखिल्यैर्महर्षिभिर्दृष्टा अभि प्र वः सुराधसमित्याद्या वालखिल्यनामका मन्त्रा ये सन्ति, वृषाकपिना महर्षिणा दृष्टं विहि सोतोरसृक्षतेति सूक्तं यदस्ति, एवयामरुन्नाम्ना महर्षिणा दृष्टं प्र वो महे मतयो यन्तु विष्णव इति सूक्तं यदस्ति, तानि चत्वारि सहैव शंसेत् ।

सहशंसनाभावे बाधं दर्शयति—

यदेषामन्तरियात्तद्यजमानस्यान्तरियात्, इति ।

यदि कथंचिदेषां चतुर्णां मध्य एकमप्यन्तरियादन्तरितं लुप्तं कुर्यात्तदानीं यजमानस्य संबन्धि श्रेयोऽन्तरियाद्विनाशयेत् ।

सामान्याकारेण बाधमुक्त्वा पुनर्विशेषाकारेण बाधं दर्शयति—

यदि नाभानेदिष्ठं रेतोऽस्यान्तरियाद्यदि वालखिल्याः प्राणानस्यान्तरियाद्यदि वृषाकपिमात्मानमस्यान्तरियाद्यद्येवयामरुतं प्रतिष्ठाया एनं च्यावयेद्दैव्यै च मानुष्यै च, इति ।

यद्ययं होता नाभानेदिष्ठमन्त्रान्विलोपयेत्तदानीमस्य यजमानस्य पुत्राद्युत्पादकं रेतो विलोपयेत् । वालखिल्यानामन्तराये यजमानस्य प्राणविच्छेदः ।

---

अभि प्र वः सुराधसं०—८-४९-१ । विहि सोतोरसृक्षत०—१०-८६-१ । प्र वो महे मतयो यन्तु०—५-८७-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वृषाकपिसूक्तस्यान्तराये यजमानस्याऽऽत्मानं मध्यदेहं विच्छिन्द्यात् । एवया मरुतस्यान्तराये यजमानं दैव्या मानुष्याश्च प्रतिष्ठायाः प्रच्यावयेत् । अविघ्नेन कर्मसमाप्तिर्दैवी प्रतिष्ठा । तत्साधनभूतधनादिसंपत्तिर्मानुषी प्रतिष्ठा ।

अन्तराये बाधमुक्त्वा तदनुष्ठाने लाभं दर्शयति—

नाभानेदिष्ठेनैव रेतोऽसिञ्चत्तद्वालखिल्याभिर्व्यकरोत्सुकीर्तिना काक्षीवतेन योनिं व्यहापयदुरौ यथा तव शर्मन्मदेमेति तस्माज्ज्यायान्सन्गर्भः कनीयांसं सन्तं योनिं न हिनस्ति ब्रह्मणा हि स क्लृप्त एवयामरुतैतवै करोति तेनेदं सर्वमेतवै कृतमेति यदिदं किंच, इति ।

अत्र मन्त्रसमूहाद्यजमानस्य नूतनं जन्म वर्ण्यते । यद्वा पुत्रोत्पादनं वर्ण्यते । यन्नाभानेदिष्ठं सूक्तद्वयमस्ति तेनैव होता रेतः सिक्तवान्भवति । यास्तु वालखिल्या ऋचस्ताभिस्तद्रेतो व्यकरोत्, विकृतं गर्भाकारमकरोत् । कक्षीवानित्यभिहितः कश्चिदृषिस्तस्य पुत्रः सुकीर्तिनामकस्तेन दृष्टमप प्राच इन्द्रेति सूक्तमपि तन्नामकम् । तच्च वृषाकपिसूक्तात्प्रागेव समीपे शंसनीयम् । तेन सुकीर्तिना होता योनिं व्यहापयत्, गर्भनिर्गमाय विवृतमकरोत् । अत एव तस्या ऋचश्चतुर्थपाद उरौ यथेत्यादिराम्नायते । तस्यायमर्थः । हे इन्द्र यथा जन उरौ विस्तीर्णे शर्मञ्शर्मणि सुखहेतौ गृहे विस्रम्भेण तिष्ठति तथा तव प्रसादाद्वयं विस्तीर्णे योनिप्रदेशे मदेम संकोचाभावेन हृष्टाः स्मः । इत्येष पादो योनिविवृतेर्गमकः । यस्मादनेन विवृतिः कृता तस्माल्लोके जायमानो गर्भो ज्यायान्सन्योनिद्वारापेक्षयाऽत्यन्तं प्रौढः सन्नपि स्वापेक्षया कनीयांसमत्यल्पं सन्तं योनिं न हिनस्ति न विनाशयति । यस्माद्ब्रह्मणा सुकीर्तिनामकेन मन्त्रेण स योनिः क्लृप्तो निर्मितस्तस्मादविनाशो युक्तः । एवयामरुन्नामकेन सूक्तेन यजमानमेतवै सर्वत्र गन्तुं समर्थं करोति । यदिदं किंच जगदस्ति तदिदं सर्वं तेन सूक्तेनैतवै कर्तुं गन्तुं समर्थं कृतं सत्पश्चादेति गच्छति । तस्मादिदमेव सूक्तं यजमानस्यापि गमनसामर्थ्यं प्रयच्छति ।

आग्निमारुतशस्त्रस्य प्रतिपत्सूक्तं विधत्ते—

अहश्च कृष्णमहरर्जुनं चेत्याग्निमारुतस्य

---

अहश्च कृष्णमहरर्जुनं०-६-९-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिपदह्नश्चाह्नश्चेति पुनरावृत्तं पुनर्नि-
नृत्तं षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अहःशब्दोऽत्र पुनः पुनः पठ्यमानत्वात्पुनरावृत्तमित्युच्यते । तालध्वनिसमानत्वाच्च पुनर्निनृत्तमिति लिङ्गद्वयम् ।

मरुद्देवताकं सूक्तं विधत्ते—

मध्वो वो नाम मारुतं यजत्रा इति
मारुतं बह्वभिव्याहृत्यमन्तो वै बह्वन्तः
षष्ठमहः षष्ठेऽहनि षष्ठस्याह्नो रूपम्, इति ।

अस्मिन्सूक्ते मरुद्विषयमभिव्याहरणीयमर्थजातं बह्वस्ति । बहुत्वं चैकत्वद्वित्वापेक्षया । संख्यायामवसानत्वादन्तो भवति । तदेतदन्तवत्त्वं लिङ्गम् ।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते––

जातवेदसे सुनवाम सोम-
मिति जातवेदस्याऽच्युता, इति ।

जातवेदोदेवताकं सूक्तं विधत्ते—

स प्रत्नथा सहसा जायमान इति जातवेदस्यं
समानोदर्कं षष्ठेऽहानि षष्ठस्याह्नो रूपम्, इति ।

देवा अग्निमित्यस्य चतुर्थपादस्य सर्वास्वप्यृक्षु पठितत्वात्समानोदर्कत्वम् । धारयन्नित्येतस्य पुनः पुनः पठितस्यानुवादेन तदभिप्रायं सदृष्टान्तं दर्शयति––

धारयन्धारयान्निति शंसति प्रस्रंसाद्वा अन्तस्य
विभाय तद्यथा पुनराग्रन्थं पुनर्निग्रन्थमन्तं
बध्नीयान्मयूखं वाऽन्ततो धारणाय निहन्याचा-
दृक्तद्धारयन्धारयान्निति शंसति संतत्यै, इति ।

होताऽस्मिन्सूक्ते चतुर्थेषु पादेषु धारयन्धारयान्निति पुनः पुनः पठित्वा शंसति । तस्य कोऽभिप्राय इति सोऽभिधीयते । अन्तः शस्त्रस्यावसानप्रदेशा-

---

मध्वो वो नाम मारुतं०—१–५७–१ । जातवेदसे सुनवाम सोमं०–१–९९–१ । स प्रत्नथा सहसा जायमानः०—१–९६–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्त( शस्त )स्य प्रशं( स्रं )साम( त्म )कर्षेण स्रंसनाच्छैथिल्यादयं होता बिभाय भीतिं प्राप्तवान् । स्रंसनपरिहारार्थे दृष्टान्तोऽभिधीयते । तद्यथा। लोके रज्जुं निर्मिमाणः पुरुषः पुनराग्रन्थं पुनः पुनराग्रथ्याऽऽग्रथ्य पुनर्निग्रन्थं पुनः पुनर्निग्रथ्य निग्रथ्य तस्या रज्जोरन्तं बध्नीयात् । दीर्घरज्ज्वा अग्रं सूक्ष्मं पुनः पृष्ठतः प्रत्याकृष्य वेष्टनं कृत्वा ग्रथनं नाम तस्य दृढीभावो निर्ग्रन्थनामको दृष्टान्तः । अन्योऽप्याभिधीयते । यथा वा लोके चर्मकार आर्द्रस्य चर्मणः संकोचनिवारणाय भूमौ तत्प्रसार्य दृढमाकृष्य चर्मणोऽन्ते मयूखं शङ्कुं चर्मणो धारणाय भूमौ निहन्यात् । दृढं भूमिप्रविष्टं कुर्यात् । होतुः पुनर्धारयाम्रीति शंसनं यदस्ति तदेतत्तादृशं पूर्वोक्तदृष्टान्तसमानं द्रष्टव्यम् । तदेच्छंसनं यज्ञस्य संतत्यै भवति ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

संतते स्त्र्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति यन्ति ॥ १५ ॥ इति ।

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वाविंशाध्याये दशमः खण्डः ॥१०॥ (१५) [१६८] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
द्वाविंशोऽध्यायः ॥ २२ ॥

---

## अथ त्रयोविंशोऽध्यायः ।

---

द्वादशाहगते नवरात्रे त्रयस्त्र्यहाः । तत्र प्रथमद्वितीयौ त्र्यहावुक्तौ । तावता पृष्ठ्यः षडहः समाप्तः । यस्तु तृतीयस्त्र्यहस्तत्र यानि त्रीण्यहानि तानि च्छन्दोमनामकानि । तत्र प्रथमं नवरात्रापेक्षया सप्तमं यदहरस्ति तत्र मन्त्रलिङ्गं दर्शयति—

यद्वा एति च प्रेति च तत्सप्तमस्याह्नो रूपम्, इति ।

आकारः प्रशब्दश्चेति लिङ्गद्वयं सप्तमस्याह्नो निरूपकम् ।

प्रथमेऽहनि यल्लिङ्गजातमस्ति तदस्मिन्नतिदिशति—

यदूध्र्वेव प्रथममहस्तदेवैतत्पुनर्यत्सप्तमम्, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नवरात्रे प्रथममहर्यादृशलिङ्गोपेतं तदेवैतत्पुनरनुसंधीयमानं यत्सप्तममहस्तद्भवति ।

तान्यतिदिष्टानि लिङ्गानि दर्शयति—

यद्युक्तवद्यद्रथवद्यदाशुमद्यत्पिबवद्यत्प्रथमे पदे देवता निरुच्यते यदयं लोकोऽभ्युदितः, इति ।

एतानि प्रथमादह्नोऽत्रातिदिष्टानि लिङ्गानि ।

नूतनमपि लिङ्गं दर्शयति—

यज्जातवद्यदनिरुक्तम्, इति ।

जातवज्जनिधातुयुक्तमनिरुक्तमस्पष्टदेवताकम् ।

अतिदिष्टेन लिङ्गजातेन सह सर्वं लिङ्गजातमुपसंहरति—

यत्करिष्यद्यत्प्रथमस्याह्नो रूपमेतानि वै सप्तमस्याह्नो रूपाणि, इति ।

भविष्यदर्थवाचिप्रत्ययान्तं धातुमात्रं करिष्यदित्युच्यते । एतच्चान्यच्च यत्प्रथमस्याह्नो लिङ्गजातमस्ति तेन सह सर्वाण्येतानि सप्तमस्याह्नो रूपाणि ।

आज्यशस्त्रं विधत्ते—

समुद्रादूर्मिर्मधुमाँ उदारदिति सप्तमस्याह्न आज्यं भवत्यनिरुक्तं सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

निःशेषेण स्पष्टमुक्तं देवतास्वरूपं निरुक्तम् । तद्विपरीतमनिरुक्तम् । समुद्रादिति सूक्तेन काचिद्देवता विस्पष्टा । तस्मादिदं लिङ्गसद्भावात्सप्तमेऽहनि योग्यतया सप्तमस्याह्नो निरूपकम् ।

तदेतत्सूक्तं प्रशंसति—

वाग्वै समुद्रो न वै वाक्क्षीयते न समुद्रः क्षीयते तद्यदेतत्सप्तमस्याह्न आज्यं भवति यज्ञादेव तद्यज्ञं तन्वते वाचमेव तत्पुनरुपयन्ति संतत्यै, इति ।

समुद्रादूर्मिरित्यत्र यः समुद्रः प्रोक्तः सोऽयं वाक्स्वरूप एव । तयोर्वाक्समुद्र-

---

समुद्रादूर्मिर्मधुमाँ उदारत्०—४-५८-१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



योरक्षय्यत्वसाम्यात् । एकैकस्य वस्तुनः कविभिर्बहुधा वर्ण्यमानत्वान्नास्ति वाचः क्षयः । समुद्रेऽपि जलं न शुष्यति । तस्मात्समुद्रस्य वाग्रूपत्वाद्यदेतत्समुद्रादिति सूक्तमत्राऽऽज्यशस्त्रं भवति । तदानीं वाङ्निष्पाद्यमन्त्रात्मकाद्यन्नादेवानुष्ठानरूपं यज्ञं तन्वते विस्तारयन्ति । तद्विस्तारे च मन्त्राणां बहूनां पठितव्यत्वात्पुनः पुनर्वाचमेव प्राप्नुवन्ति । तच्च यज्ञसंतत्यै संपद्यते ।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

संततैरव्यहैरव्यवच्छिन्नैर्यन्ति य एवं विद्वांसो यन्ति, इति ।

पूर्ववद्व्याख्येयम् ।

अस्मिन्नाज्यशस्त्रे घृतस्य नाम गुह्यमिति यो घृतशब्दः श्रुतस्तमभिप्रेत्य तद्दृष्टान्तपूर्वकमाज्यशस्त्रं प्रशंसति—

आप्यन्ते वै स्तोमा आप्यन्ते छन्दांसि षष्ठेऽहनि तद्यथैवाद आज्येनावदानानि पुनः प्रत्यभिघारयन्त्ययातयामताया एवमेवैतत्स्तोमांश्च च्छन्दांसि च पुनः प्रत्युपयन्त्ययातयामतायै यदेतत्सप्तमस्याह्न आज्यं भवति, इति ।

त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाख्या ये स्तोमास्ते सर्वेऽपि षष्ठेऽहन्याप्यन्ते समाप्ताः । गायत्रीत्रिष्टुब्जगत्यनुष्टुप्पङ्क्त्यतिच्छन्दोभिधानि सर्वाणि च्छन्दांसि च समाप्तानि । तथा सति त(य)थैवादो वक्ष्यमाणं निदर्शनम् । तथैव सप्तमस्याह्नः प्रवृत्तिर्द्रष्टव्या । किं निदर्शनमिति तदुच्यते । यथा दर्शपूर्णमासादिषु पुरोडाशादिद्रव्याण्यवदाय पश्चात्तान्यवदानस्थानान्याज्यस्थाल्या आज्येन पुनः प्रत्यभिघारयन्ति । किमर्थमिति तदुच्यते । अयातयामतायै गतसारत्वपरिहाराय । पुनरपि हविष्ट्वयोग्यतार्थमेवमेवैतस्मिन्सप्तमेऽहनि स्तोमांश्छन्दांसि च पुनरपि प्रत्युपयन्ति प्रतिपद्यानुतिष्ठन्ति । तथा सत्यनुष्ठितस्य पुनरनुष्ठानं चर्वितचर्वणसमानमिति यातयामत्वं गतसारत्वं भवेत् । अतो यदेतत्समुद्रादूर्मिरित्यादिकं सप्तमस्याह्न आज्यं भवति तदेतदयातयामतायै पुनरपि सारत्वसिद्ध्यर्थं भवति । तस्मिञ्शस्त्रे घृतस्य नाम गुह्यमिति घृतशब्दस्य विद्यमानत्वात्प्रत्यभिघारणसाम्यं भवति । यद्यपि त्रिवृदादयः स्तोमाः सप्तमेऽ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऽहनि पुनर्नानुष्ठीयन्ते तथाऽपि चतुर्विंशादयश्छन्दोमनामका अनुष्ठास्यन्ते । तस्मादयातयामत्वं स्तोमत्वसाम्येनाभिहितम् ।

आज्यशस्त्रगतं छन्दः प्रशंसति—

तद्दु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

तद्दु तदपि समुद्रादूर्मिरित्यादिकं शस्त्रं त्रिष्टुप्छन्दस्कम् । प्रातःसवने त्रिष्टुप्छन्दो यस्मिंस्तृतीये त्र्यहे सोऽयं त्रिष्टुप्प्रातःसवनः । यथा प्रथमस्य त्र्यहस्य प्रातःसवने गायत्री यथा वा मध्यमस्य त्र्यहस्य प्रातःसवने जगती, एवमुत्तमस्य त्र्यहस्य प्रातःसवने त्रिष्टुबवगन्तव्या । एतच्छन्दसां विवादे निर्णीतम् ।

अथ प्रउगशस्त्रं विधत्ते—

आ वायो भूष शुचिपा उप नः प्र याभिर्यासि दाश्वांसमच्छा नो नियुद्भिः शतिनीभिरध्वरं प्र सोता जीरो अध्वरेष्वस्थाये वायव इन्द्रमादनासो या वां शतं नियुतो याः सहस्रं प्र यद्वां मित्रावरुणा स्पूर्धन्ना गोमता नासत्या रथेनाऽऽनो देव शवसा याहि शुष्मिन्प्र वो यज्ञेषु देवयन्तो अर्चन्प्र क्षोदसा धायसा सस्र एषेति प्रउगमेति च प्रेति च सप्तमेऽहनि सप्तमस्याह्नो रूपं तद्दु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

आ वायो भूष इति प्रथमं प्रतीकं तस्मिन्नाकारो लिङ्गम् । प्र याभिरिति द्वितीयम् । तत्र प्रशब्दो लिङ्गम् । आ नो नियुद्भिरिति तृतीयम् । तस्मिन्ना-

---

आ वायो भूष शुचिपा०—७-९२-१ । प्र याभिर्यासि दाश्वांसं०—७-९२-३ । आ नो नियुद्भिः शतिनीभिः०—१-१३५-३ । प्र सोता जीरो अध्वरेष्वस्थात्०—७-९२-२ । ये वायव इन्द्रमादनासः०—७-९२-४ । या वां शतं नियुतो०—७-९२-६ । प्र यद्वां मित्रावरुणा०—६-६७-९ । आ गोमता नासत्या०—७-७२-१ । आ नो देव शवसा०—७-३०-१ । प्र वो यज्ञेषु देवयन्तो०—७-४३-१ । प्र क्षोदसा धायसा सस्रे०—७-९६-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कारः । प्र सोतेति चतुर्थे प्रशब्दः । ये वायन्त इन्द्रेति पञ्चमं तत्र द्वितीयपाद आ देवास इत्याकारः । या वां शतमिति षष्ठं तस्य तृतीयपादादावाकारः श्रुतः । प्र यद्वामिति सप्तमे प्रशब्दः । आ गोमतेत्यष्टम आकारः । आ नो देवेति नवमेऽप्याकारः । प्र वो यज्ञेष्विति दशमे प्रशब्दः । प्र क्षोदसेत्येकादशेऽपि प्रशब्दः । अत्राऽऽद्यैः षड्भिर्द्वौ तृचौ । इतरे पञ्च तृचाः । तदेतत्सर्वं प्रउगशस्त्रमुक्तलिङ्गसद्भावात्सप्तमेऽहानि योग्यम् । अन्यत्पूर्ववद्व्याख्येयम् ।

शस्त्रक्लृप्तिसमत्वलिङ्गकान्मन्त्रान्विधत्ते—

आ त्वा रथं यथोतय इदं वसो सुतमन्ध इन्द्र नेदीय एदिहि प्रैतु ब्रह्मणस्पतिरग्नि-र्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपः प्र व इन्द्राय बृहत इति प्रथमेनाह्ना समान आ-तानः सप्तमेऽहानि सप्तमस्याह्नो रूपम्, इति ।

अथ जागतलिङ्गकं सूक्तं विधत्ते—

कया शुभा सवयसः सनीळा इति सूक्तं न जायमानो न शतेन जात इति जातव-त्सप्तमेऽहानि सप्तमस्याह्नो रूपम्, इति ।

अस्य सूक्तस्य नवम्यामृचि न जायमान इत्यादिस्तृतीयः पादः । तत्र जातशब्दोपेतत्वं लिङ्गम् ।

एतत्सूक्तं प्रशंसति—

तद्व कयाशुभीयमेतद्वै संज्ञानं संतानि सूक्तं यत्कया-शुभीयमेतेन ह वा इन्द्रोऽगस्त्यो मरुतस्ते समजा-नत तद्यत्कयाशुभीयं शंसति संज्ञात्या एव, इति ।

---

आ त्वा रथं यथोतये०—८-६७-१ । इदं वसो सुतमन्धः०—८-२-१ । प्रैतु ब्रह्मणस्पतिः०—१-४०-३ । अग्निर्नेता भग इव०—३-२०-४ । त्वं सोम क्रतुभिः०—१-९१-२ । पिन्वन्त्यपो मरुतः०—१-६४-६ । प्र व इन्द्राय बृहते०—६-६-११ । कया शुभा सवयसः०—१-१६५-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तदु तत्सूक्तं कयाशुभशब्दोपेतत्वात्कयाशुभीयनामकम् । अस्त्वेवं किं तत इति चेत् । उच्यते । एतदेव कयाशुभीयनामकं सूक्तं संज्ञानं परस्परैकमत्यसाधनम् । किंचैतत्सूक्तं संतानि संतानकरं प्राणानामविच्छेदेन दीर्घायुष्यकारणम् । यदेतत्कयाशुभीयसूक्तमस्ति, एतदनुष्ठानेनैवेन्द्रागस्त्यमरुतो ये सन्ति ते सर्वे समजानत संज्ञानं परस्परैकमत्यं प्राप्नुवन् । तथा सत्येतच्छंसनं विप्रतिपन्नानामैकमत्यार्थं संपद्यते ।

प्रकारान्तरेण प्रशंसति—

तद्वायुष्यं तद्योऽस्य प्रियः स्यात्कु-
र्यादेवास्य कयाशुभीयम्, इति ।

तदु तत्तु सूक्तमायुष्करम् । संतनीति पूर्वमुक्तत्वात् । तथा सत्यस्य यजमानस्य यः पुत्रादिः प्रियः स्यात्तस्याऽऽयुर्वृद्ध्यर्थं कयाशुभीयसूक्तं कुर्यादेव ।

पुनरपि च्छन्दोद्वारा प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं
दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

पूर्ववद्व्याख्येयम् ।

रथलिङ्गकं सूक्तं विधत्ते—

त्यं सु मेषं महया स्वर्विदमिति सूक्तमत्यं
न वाजं हवनस्यदं रथमिति रथवत्सप्त-
मेऽहनि सप्तमस्याह्नो रूपम्, इति ।

त्यं सु मेषमिति सूक्तस्यात्यं न वाजमिति तृतीयः पादस्तत्र रथशब्दः श्रूयते ।

तस्मिन्सूक्ते निविद्धानं विधत्ते—

तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यं-
दिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निवि-
द्धीयते तस्माज्जगतीषु निविदं दधाति, इति ।

---

त्यं सु मेषं महया० — १–५२–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्य सूक्तस्य जगतीछन्दस्कत्वाज्जगतीनां च त्रिवादक्रमेणोत्तरे त्र्यो माध्यंदिनसवननिर्वाहिक(का)त्वादस्मिन्माध्यंदिनसवनगते शस्त्रे तत्सवननिर्वाहकतया जगतीछन्दस्कास्वृक्षु निविदं प्रक्षिपेत् ।

पूर्वोक्तं त्रिष्टुप्छन्द इदानीमुच्यमानं जगतीछन्दश्च मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

तथा परस्परविलक्षणयोः स्त्रीपुरुषयोर्मेलने मिथुनं भवति । एवं छन्दोद्वयमेलने मिथुनत्वम् । गवाश्वादिपशवश्च मिथुनरूपाः । चतुर्विंशचतुश्चत्वारिंशष्टाचत्वारिंशाख्याश्छन्दोमाः पशुसाधनत्वात्पशुरूपाः । तस्माच्छन्दोमयुक्तेऽस्मिन्ब्यहे छन्दोद्वयानुष्ठानं पशुप्राप्त्यै भवति । छन्दोभिर्गायत्रीत्रिष्टुब्जगतीभिरक्षरसंख्याद्वारेणोपमीयन्त इति चतुर्विंशादयस्त्रयश्छन्दोमाः । तत्र गायत्र्या चतुर्विंशत्यक्षरया सदृशो यश्चतुर्विंशः स्तोमस्तस्य प्रतिपादकमष्टभ्यो हिं करोतीत्यादिकं छन्दोगब्राह्मणम् । चतुर्विंशमेतदहरुपयन्तीत्यारम्भयणीयमित्यत्रैवोदाहृतम् । यच्च(अथ च)तुश्चत्वारिंशस्तोमस्य निरूपकं छन्दोगब्राह्मणमेवमाम्नायते–'पञ्चदशभ्यो हिं करोति स तिसृभिः स एकादशभिः स एकया । चतुर्दशभ्यो हिं करोति स एकया स तिसृभिः स दशभिः पञ्चदशभ्यो हिं करोति स एकादशभिः स एकया स तिसृभिः' इति । अस्यायमर्थः । त्रिभिः पर्यायैस्तृचस्याऽऽवृत्तौ प्रथमे पर्याये प्रथमाया ऋचस्त्रिरभ्यासो मध्यमाया ऋच एकादशकृत्वोऽभ्यासः । उत्तमाया ऋचः सकृत्पाठः । द्वितीयपर्याये प्रथमायाः सकृत्पाठः । मध्यमायास्त्रिरभ्यासः । उत्तमाया दशकृत्वोऽभ्यासः । तृतीये पर्याये प्रथमाया एकादशकृत्वोऽभ्यासः । मध्यमायाः सकृत्पाठः । उत्तमायास्त्रिरभ्यासः । सोऽयं चतुश्चत्वारिंशस्तोम इति । अथाष्टाचत्वारिंशस्तोमस्य ब्राह्मणमेवमाम्नायते–'षोडशभ्यो हिं करोति स तिसृभिः स द्वादशभिः स एकया । षोडशभ्यो हिं करोति स एकया स तिसृभिः स द्वादशभिः । षोडशभ्यो हिं करोति स द्वादशभिः स एकया स तिसृभिः । अन्तो वाऽष्टाचत्वारिंशः' इति । अस्यायमर्थः । प्रथमे पर्याये प्रथमायास्त्रिरभ्यासः । मध्यमायाः द्वादशकृत्वोऽभ्यासः । उत्तमायाः सकृत्पाठः । द्वितियपर्याये प्रथमाया सकृत्पाठो मध्यमायास्त्रिरभ्यास उत्तमाया द्वादशकृत्वोऽभ्यासः । तृतीयपर्याये प्रथमाया द्वादशकृत्वो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भ्यासः । मध्यमायाः सकृत्पाठः । उत्तमायास्त्रिरभ्यास इति । एवमष्टाचत्वारिंशस्तोम इति । एवं त्रयश्छन्दोमा अवगन्तव्याः ।

अथ बृहत्सामसाध्यपृष्ठस्तोत्रियस्याऽऽधारभूतं स्तोत्रियं प्रगाथं तदनुरूपं च विधत्ते—

त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति
बृहत्पृष्ठं भवति सप्तमेऽहनि, इति ।

त्वामिद्धीत्येकः प्रगाथः । त्वं ह्येहीति द्वितीयः । तदुभयं सप्तमेऽहनि निष्केवल्यशस्त्रे शंसनीयम् । नन्वयुग्ममहः सप्तमं तथा सति रथंतरपृष्ठं परित्यज्य बृहत्पृष्ठं किमित्युपादीयत इति चेत् । वचनबलादिति ब्रूमः । किं हि वचनं न कुर्यान्नास्ति वचनस्यातिभार इति न्यायात् ।

बृहत्पृष्ठस्वीकारे कांचिद्युक्तिमाह—

यदेव षष्ठस्याह्नस्तत, इति ।

पूर्वस्य षष्ठस्याह्नो यदेव पृष्ठस्तोत्रं तदेवात्र कृतं भवति । तस्य प्रयोजनं तूपरिष्टाद्वक्ष्यते । ननु षष्ठेऽप्यहनि रैवतं पृष्ठं न तु बृहदिति चेत् । नैष दोषः । बृहद्रैवतयोः कार्यकारणभावेनैकत्वादित्यभिमेत्य बृहच्च वा इदमग्रे रथंतरं चाऽऽस्तामित्यत्र प्रतिपादितम् ।

कार्यकारणभावमिह स्मारयति—

यद्वै रथंतरं तद्वैरूपं यद्बृहत्तद्वैराजं
यद्रथंतरं तच्छाक्वरं यद्बृहत्तद्रैवतम्, इति ।

वैरूपशाक्वरयो रथंतरजन्यत्वात्तद्रूपत्वम् । वैराजरैवतयोर्बृहज्जन्यत्वात्तद्रूपत्वमेवं च सति षष्ठेऽहनि रैवतस्य बृहत्त्वं व्यवहर्तुं शक्यते ।

इदानीमत्र सप्तमेऽहनि बृहत्पृष्ठस्वीकारे प्रयोजनमाह—

तद्यद्बृहत्पृष्ठं भवति बृहतैव तद्बृहत्प्रत्युत्तभ्नुवन्त्यस्तोमकृन्तत्राय, इति ।

तत्तस्मात्षष्ठेऽहनि कृतस्य रैवतस्य बृहद्रूपत्वात्कारणाद्यत्र सप्तमेऽहनि बृहत्पृष्ठं क्रियते तदिदानीं षष्ठेऽहन्यनुष्ठितेन बृहतैवास्मिन्सप्तमेऽहनि तद्बृहत्पृष्ठं प्रत्युत्तभ्नुवन्ति । अतीतत्वेन नष्टस्य पुनरुद्धरणं प्रत्युत्तम्भनम् । एतच्चास्तो·

त्वामिद्धि हवामहे०—६–४६–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मकृन्तत्राय संपद्यते । स्तोमानां त्रिवृत्पञ्चदशादीनां कृन्तत्रं कृन्तनं छेदः, तद्राहित्यमस्तोमकृन्तत्रं तदर्थमत्र स्वीकारः ।

विपक्षबाधोपन्यासमुखेनैव तदेव स्पष्टयति—

यद्रथंतरं स्यात्कृन्तत्रं स्यात्, इति ।

षष्ठेऽहन्यनुष्ठितस्य बृहतोऽस्मिन्सप्तमेऽहन्यनुवृत्तिं परित्यज्य युग्मदिनत्वमाश्रित्य रथंतरं पृष्ठं स्वी क्रियते तदानीं षष्ठसप्तमयोरनुवृत्त्यभावात्कृन्तत्रं विच्छेदनं स्यात् । षष्ठे बृहत्कृतं सप्तमे तन्न कृतम् । किंतु रथंतरं कृतमिति विच्छेदः ।

विपक्षबाधमुपन्यस्य स्वपक्षमुपसंहरति—

तस्माद्बृहदेव कर्तव्यम्, इति ।

यस्माद्बृहति कृते विच्छेदः परिह्रियते तस्मादित्यर्थः ।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

अथ युग्मदिनत्वमुपजीव्य रथंतरसंबन्धात्तदीयामृचं विधत्ते—

अभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरायतनेन, इति ।

नितरां वर्तनमनुष्ठानं निवर्तनं न तु परित्यागः । आयतनेनायुग्मत्वस्थानेन रथंतरसंबन्धः ।

पिबशब्दलिङ्गकं प्रगाथान्तरं विधत्ते—

पिबा सुतस्य रसिन इति सामप्रगाथः पिबवान्सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

अच्युतत्वलिङ्गकं सूक्तविशेषं विधत्ते—

त्य मू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ १६ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोविंशाध्याये प्रथमः खण्डः ॥ १ ॥ (१६) [१६९] ।

---

यद्वावान पुरुतमं०—१०–७४–६ । अभि त्वा शूर नोनुमः०—७–३२–२२ । पिबा सुतस्य रसिनः०—८–३–१ । त्यमू षु वाजिनं देवजूतं०—१०–१७८–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रशब्दलिङ्गकं सूक्तं विधत्ते—

इन्द्रस्य नु वीर्याणि प्रवोचमिति सूक्तं प्रेति सप्तमेऽहानि सप्तमस्याह्नो रूपम्, इति ।

तत्रत्यं छन्दः प्रशंसति—

तद्धु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

अभिशब्दप्रशब्दयोरुपसर्गत्वसाम्येनार्थैकत्वमभिप्रेत्य तद्द्वारा शब्दैकत्वमप्यारोप्य प्रशब्दलिङ्गकं सूक्तं विधत्ते—

अभि त्यं मेषं पुरुहूतमृग्मियमिति सूक्तं यद्वाव प्रेति तदभीति सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

अस्मिन्सूक्ते निविद्धानं विधत्ते—

तद्धु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति, इति ।

छन्दोद्वयं मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

शस्त्रान्तरस्य प्रतिपदनुचरौ विधत्ते—

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

तत्सवितुरित्यादेः क्वचिद्रथंतरसामाधारत्वमभिप्रेत्य राथंतरत्वं लिङ्गमुक्तम् । अभिशब्दप्रशब्दयोः पूर्ववदेकत्वमारोप्य प्रशब्दलिङ्गकं तृचात्मकं सूक्तं विधत्ते—

---

इन्द्रस्य नु वीर्याणि प्रवोचं०—१–३२–१ । अभि त्यं मेषं पुरुहूतं०—१–५१–१ । तत्सवितुर्वृणीमहे०—५–८२–१ । अद्या नो देव सवितः०—५–८२–४ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभि त्वा देव सवितरिति सावित्रं यद्वाव प्रेति तदभीति सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

आरोपितप्रशब्दलिङ्गकमुक्त्वा मुख्यप्रशब्दलिङ्गकं तृचात्मकं सूक्तं विधत्ते-

प्रेतां यज्ञस्य शंभुवेति द्यावापृथिवीयं प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

द्वितीयस्यामृचि द्यावा नः पृथिवीत्युक्तत्वादिदं द्यावापृथिवीदेवताकम् । जातलिङ्गकं तृचात्मकं सूक्तं विधत्ते—

अयं देवाय जन्मन इत्यार्भवं जातवत्सप्तमेऽहानि सप्तमस्याह्नो रूपम्, इति ।

अत्र सूक्ते चतुर्थ्यामृचि ऋभवो विष्ट्यक्रतेति श्रुतत्वादयमपि तृच आर्भवः । जन्मन इत्युक्तत्वाज्जातवल्लिङ्गम् ।

अथ पादद्वयोपेता ऋचो विधाय प्रशंसति—

आ याहि वनसा सहेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तयद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।

छन्दोगा(मा)नां पूर्वोक्तचतुर्विंशादीनां पशुप्राप्तिसाधनत्वात्पशुत्वम् ।

आकारलिङ्गकं बहुदेवताकं सूक्तं विधत्ते—

ऐभिरग्ने दुवो गिर इति वैश्वदेवमेति सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

---

अभि त्वा देव सवितः०—१-२४-३ । प्रेतां यज्ञस्य शंभुवा०—२-४१-१९ । अयं देवाय जन्मने०—१-२०-१ । आ याहि वनसा सह०-१-१७२-१ । ऐभिरग्ने दुवो गिरः०-१-१४-११ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उक्तेषु सूक्तेषु च्छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः, इति ।

तान्यु तानि तु सूक्तान्यग्ना नो देव सवितरित्यारभ्य मध्ये द्विपदा वर्जयित्वैभिरग्न इत्यन्तानि गायत्रीछन्दस्कानि वैश्वदेवशस्त्रेऽभिहितानि । एषु चोत्तमस्त्र्यहो गायत्रतृतीयसवनो गायत्रीछन्दस्तृतीयसवनो यस्य त्र्यहस्य सोऽयं गायत्रतृतीयसवनः । तदेव च्छन्दो विवाहप्रस्तावेऽनुसंधेयम् ।

शस्त्रान्तरस्य जनिधातुलिङ्गयुक्तां प्रतिपदं विधत्ते—

वैश्वानरो अजीजनदित्याग्निमारुतस्य प्रतिपज्जातवत्सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

प्रशब्दलिङ्गकं सूक्तं विधत्ते—

प्र यद्वस्त्रिष्टुभमिषमिति मारुतं प्रेति सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

द्वितीयपादे मरुतो विप्र इति श्रुतत्वादिदं सूक्तं मरुद्देवताकम् ।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

जातवेदसे सुनवाम सोममिति जातवेदस्याऽच्युता, इति ।

अस्पष्टदेवताकं सूक्तं विधत्ते—

दूतं वो विश्ववेदसमिति जातवेदस्यमानिरुक्तं सप्तमेऽहनि सप्तमस्याह्नो रूपम्, इति ।

जातवेदःशब्दस्याग्निशब्दस्य वा स्पष्टदेवतावाचकस्याभावादनिरुक्तत्वम् ।

वैश्वानरो अजीजनदित्यादिषु दूतं व इत्यन्तेषु सूक्तेषु जातवेदस इत्येतद्वर्जितेषु विद्यमानं छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ १७ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये त्रयोविंशाध्याये द्वितीयः खण्डः ॥२॥ (१७) [१७०] ।

---

प्र यद्वस्त्रिष्टुभं० — ८-७-१ । जातवेदसे सुनवाम सोमं० — १-९९-१ । दूतं वो विश्ववेदसं० — ४-८-१ ।

---

१ क. ख. ङ. ट. वाचि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सप्तममहरभिधायाष्टमस्याह्नो मन्त्रलिङ्गानि दर्शयति—

यद्वै नेति न प्रेति यत्स्थितं
तदष्टमस्याह्नो रूपम्, इति ।

आकारस्य च प्रशब्दस्य च लिङ्गत्वं नकारद्वयेन निषिध्यते । यत्स्थितम-च्युतत्वेन नियतं तिष्ठतिधातुयुक्तं वा तदष्टमस्याह्नो निरूपकम् ।

द्वितीयस्मिन्नहनि प्रोक्तानि लिङ्गान्यष्टमेऽहन्यतिदिशति—

यद्व्येव द्वितीयमहस्तदेवैतत्पुनर्यदष्टममम्, इति ।

यल्लिङ्गकमेव द्वितीयमहस्तल्लिङ्गकमेवैतत्पुनरपि भवति । यदष्टममहस्तत्पू-र्वोक्तलिङ्गकम् ।

तानि लिङ्गान्युपन्यस्यति—

यदूर्ध्ववद्यत्प्रतिवद्यदन्तर्वद्यद्वृषण्वद्यद्वृधन्वद्यन्मध्यमे
पदे देवता निरुच्यते यदन्तरिक्षमभ्युदितम्, इति ।

अथ नूतनानि लिङ्गानि दर्शयति—

यद्व्यग्नि यन्महद्वद्यद्द्विहूतवद्यत्पुनर्वद्यत्कुर्वत्, इति ।

अग्निशब्दद्वयोपेतं द्व्यग्नीत्युच्यते । महच्छब्दोपेतं महद्वत् । द्वयोर्देवतयोर्हव-माह्वानं यस्मिंस्तादृशं द्विहूतवत् । पुनःशब्दोपेतं पुनर्वत् । द्वितीयेऽहनि वर्तमा-नार्थनाचिप्रत्ययान्तं कुर्वच्छब्देनोक्तम् ।

तेन सह सर्वाणि लिङ्गान्युपसंहरति—

यद्द्वितीयस्याह्नो रूपमेतानि वा
अष्टमस्याह्नो रूपाणि, इति ।

तत्राऽऽज्यशस्त्रं विधत्ते—

अग्निं वो देवमग्निभिः सजोषा इत्यष्टमस्याह्न आज्यं
भवति द्व्यग्न्यष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

द्वावग्निशब्दौ यस्मिन्सूक्ते विद्येते तत्सूक्तं द्व्यग्नि । अतोऽष्टमेऽहनि योग्य-त्वादेतदष्टमस्याह्नो निरूपकम् ।

---

अग्निं वो देवमग्निभिः०—७-३-१ ।

---

१ क. ट. °ह्नो रू° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्रत्यं छन्दः प्रशंसति—

तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

अथ प्रउगशस्त्रं विधत्ते—

कुविदङ्ग नमसा ये वृधासः पीवो अन्नाँ रयिवृधः सुमेधा उच्छन्नुषसः सुदिना अरिप्रा उशन्ता दूता न दभाय गोपा यावत्तरस्तन्वो३ यावदोजः प्रति वां सूर उदिते सूक्तैर्धेनुः प्रत्नस्य काम्यं दुहाना ब्रह्मा ण इन्द्रोप याहि विद्वानूर्ध्वो अग्निः सुमतिं वस्वो अश्रेदुत स्या नः सरस्वती जुषाणेति प्रउगं प्रतिवदन्तर्वद्धूद्धि-हूतवदूर्ध्ववदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

कुविदङ्गेति प्रथमं प्रतीकम् । पीवो अन्नानिति द्वितीयम् । उच्छन्नुषस इति तृतीयम् । उशन्तेति चतुर्थम् । यावत्तर इति पञ्चमम् । प्रति वामिति षष्ठम् । धेनुः प्रत्नस्येति सप्तमम् । ब्रह्मा ण इत्यष्टमम् । ऊर्ध्वो अग्निरिति नवमम् । उत स्या न इति दशमम् । अत्राऽऽद्यैस्त्रिभिः प्रतीकैरेकस्तृचश्चतुर्थे(र्थ ए ?)का पञ्चमे द्वे तदुभयं मिलित्वा द्वितीयस्तृचः । इतरे पञ्च तृचाः । एतत्सर्वं प्रउगम् । तत्र दशमे प्रतीके प्रतिस्तोममिति प्रतिशब्दोपेतं लिङ्गमस्ति । धेनुः प्रत्नस्येत्यस्य द्वितीयपादेऽन्तः पुत्र इत्यन्तःशब्दोपेतं लिङ्गम् । ऊर्ध्वो अग्निरित्यास्मिन्नूर्ध्वश-ब्दोपेतं लिङ्गम् । अवशिष्टेषु द्वयोराह्वानं लिङ्गम् । क्वचिदिन्द्रवाय्वोः क्वचिन्मि-त्रावरुणयोरिति द्रष्टव्यम् ।

उक्तमन्त्रगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

---

कुविदङ्ग नमसा ये वृधासः०—७-९१-१ । पीवो अन्नाँ रयिवृधः०—७-९१-३ । उच्छन्नुषसः सुदिना०—७-९०-४ । उशन्ता दूता न दभाय०—७-९१-२ । यावत्तरस्तन्वो३ यावदोजः०—७-९१-४ । प्रति वां सूर उदिते सूक्तैः०—७-६५-१ । धेनुः प्रत्नस्य काम्यं०—३-५८-१ । ब्रह्मा ण इन्द्रोप याहि०—७-२८-१ । ऊर्ध्वो अग्निः सुमतिं०—७-३९-१ । उत स्या नः सरस्वती०—७-९६-४ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ मरुत्वतीयशस्त्रे तुल्यशस्त्रक्लृप्त्याख्येन लिङ्गेनोपेतान्मन्त्रान्विधत्ते—

विश्वानरस्य वस्पतिमिन्द्र इत्सोमपा एक इन्द्र नेदीय एदिह्युत्तिष्ठ ब्रह्मणस्पतेऽग्नि-र्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो बृह-दिन्द्राय गायतेति द्वितीयेनाह्ना समान आतानोऽष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

महच्छब्दलिङ्गकं सूक्तं विधत्ते—

शंसा महामिन्द्रं यस्मिन्विश्वा इति सूक्तं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

अत्र महामित्येष महच्छब्दः ।

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते—

महश्चित्त्वमिन्द्र यत एतानिति सूक्तं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

अत्र मह इत्येष एव महच्छब्दः ।

पुनरपि महच्छब्दयुक्तं सूक्तान्तरं विधत्ते—

पिबा सोममभि यमुग्र तर्द इति सूक्त-मूर्वं गव्यं महि गृणान इन्द्रेति महद्व-दष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

पिबा सोममित्यादिसूक्तस्योर्वं गव्यमिति द्वितीयः पादस्तत्र महीत्येष महच्छब्दः ।

---

विश्वानरस्य वस्पतिं०—८-६८-४ । इन्द्र इत्सोमपा एकः०—८-२-४। इन्द्र नेदीय एदिहि०—८-५३-५ । उत्तिष्ठ ब्रह्मणस्पते०—१-४१-१ । अग्नि-र्नेता भग इव०—३-२०-४ । त्वं सोम क्रतुभिः०—१-९१-२ । पिन्वन्त्यपो मरुतः०—१-६४-६ । बृहदिन्द्राय गायत०—८-८९-१ । शंसा महामिन्द्रं०—३-४९-१ । महश्चित्त्वमिन्द्र यत एतान्०—१-१६९-१ । पिबा सोममभि यमुग्र०—६—१७-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुनरपि महच्छब्दयुक्तं सूक्तं विधत्ते--

महाँ इन्द्रो नृवदा चर्षणिप्रा इति सूक्तं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति।

अत्र महानित्येष महच्छब्दः । उक्तेषु चतुर्ष्वपि महच्छब्देष्वन्तस्य वैलक्षण्येऽप्यादिभागस्यैकविधत्वान्महच्छब्दत्वं द्रष्टव्यम् ।

एतत्सूक्तचतुष्टयगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति ।

अथान्यन्महच्छब्दोपेतं सूक्तं विधत्ते--

तमस्य द्यावापृथिवी सचेतसेति सूक्तं यदैत्कृण्वानो महिमानमिन्द्रियमिति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

तमस्येत्ति सूक्तस्य यदैत्कृण्वान इति तृतीयः पादस्तत्र महिमानपदे महीति महच्छब्दः श्रूयते ।

तस्मिन्सूक्ते निविद्धानं विधत्ते—

तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति, इति ।

छन्दोद्वयं मिलित्वा प्रशंसति--

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

उक्तेषु सूक्तेषु महच्छब्दं प्रशंसति--

महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्षमन्त-

महाँ इन्द्रो नृवदा०—६–१९–१ । तमस्य द्यावापृथिवी सचेतसा०—१०–११३–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


रिक्षस्याऽऽप्त्यै, इति ।

अन्तरिक्षस्य महत्त्वं विस्तीर्णत्वं प्रसिद्धम् ।

महच्छब्दयुक्तानां सूक्तानां संख्यां प्रशंसति—

पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

शंसा महामिति प्रथमे सूक्ते महच्छब्दो महश्चित्त्वमिति द्वितीये महि गृणान इति तृतीये महाँ इन्द्र इति चतुर्थे महिमानमिति पञ्चम एवं पञ्च सूक्तानि महच्छब्दयुक्तानि शस्यन्ते । पञ्चसंख्यायोगात्पञ्चपादोपेता पङ्क्तिश्छन्दोरूपा भवति । यज्ञश्च हविष्पङ्क्त्यादिना पाङ्क्तः । पशवश्च पङ्क्तिमुखेन पाङ्क्ताश्छन्दोमानां च पशुसाधनत्वात्पशुत्वम् । अनेन संबन्धेन सूक्तपञ्चकं पशुप्राप्त्यै संपद्यते ।

अथ निष्केवल्यशस्त्रस्य रथंतरसामसाध्यपृष्ठस्तोत्रस्याऽऽधारभूतं स्तोत्रियमनुरूपं च विधत्ते—

अभि त्वा शूर नोनुमोऽभि त्वा पूर्वपीतय इति रथंतरं पृष्ठं भवत्यष्टमेऽहनि, इति ।

यद्यपि युग्मदिनत्वान्न्यायतो बृहत्पृष्ठं प्राप्तं तथाऽपि वचनबलाद्रथंतरपृष्ठत्वं द्रष्टव्यम् ।

अच्युतत्वलिङ्गयुक्तामृचं विधत्ते—

यद्वावानेति धाय्याऽच्युता, इति ।

तस्या उपरि बृहत्सामयोनेः शंसनं विधत्ते—

त्वामिद्धि हवामह इति बृहतो योनिमनु निवर्तयति बार्हतं ह्येतदहरायतनेन, इति ।

अष्टमस्य युग्मदिनत्वाद्बृहत्संबन्धिस्थानत्वम् ।

तस्यैव बृहत्संबन्धिनं सामप्रगाथं विधत्ते—

उभयं शृणवच्च न इति सामप्रगाथो यच्चेदमद्य

---

अभि त्वा शूर नोनुमः०—७—३२—२२ । उभयं शृणवच्च नः०—८—६१—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यदु च ह्य आसीदिति बार्हतेऽहन्यष्टमेऽहन्यष्टम-स्याह्नो रूपम्, इति ।

उभयशब्दतात्पर्यं यच्चेदमित्यादिनोच्यते । अद्य यदिदं कार्यमासीत्, ह्यश्च पूर्वेद्युरपि यदु यदेव कार्यमासीत्, तदेतदुभयमपि श्रुतमिति तस्य पादस्यार्थः । युग्यरूपे बार्हतेऽहनि बृहत्सामसंबन्धः प्रगाथो युक्त एव ।

अच्युतलिङ्गकं सूक्तविशेषं विधत्ते—

त्यमू षु वाजिनं देवजूतमिति तार्क्ष्योऽच्युतः ॥ १८ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोविंशाध्याये तृतीयः खण्डः ॥३॥ (१८) [१७१] ।

---

महच्छब्दयुक्तसूक्तचतुष्टयं विधत्ते—

अपूर्व्या पुरुतमान्यस्मा इति सूक्तं महे वीराय तवसे तुरायेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं तां सुते कीर्तिं मघवन्महि त्वेति सूक्तं महद्वदष्टमेऽहन्यष्टम-स्याह्नो रूपं त्वं महाँ इन्द्र यो ह शुष्मैरिति सूक्तं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपं त्वं महाँ इन्द्र तुभ्यं ह क्षा इति सूक्तं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

अपूर्व्येति सूक्तस्य द्वितीयपादे महे वीरायेति महच्छब्दः श्रुतः । इतरस्मिन्सूक्तत्रये प्रथमपाद एव महच्छब्दः स्पष्टः ।

सूक्तचतुष्टयगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽय-तनादेवैतेन न प्रच्यवते, इति ।

---

त्यमू षु वाजिनं देवजूतं०—१०–१७८–१ । अपूर्व्या पुरुतमान्यस्मै०—६–३२–१ । तां सुते कीर्तिं०—१०–५४–१ । त्वं महाँ इन्द्र यो ह०—१–६३–१ । त्वं महाँ इन्द्र तुभ्यं०—४–१७–१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यथा मरुत्वतीयशस्त्रे महच्छब्दयुक्तं त्रिष्टुप्छन्दस्कं सूक्तचतुष्टयमुक्त्वा पश्चाज्जगतीछन्दस्कं महच्छब्दयुक्तं सूक्तान्तरमुक्तमेवमत्र निष्केवल्येऽपि त्रिष्टुप्छन्दस्कं सूक्तचतुष्टयमभिधाय जगतीच्छन्दस्कं सूक्तं विधत्ते—

दिवश्चिदस्य वरिमा विपप्रथ इति सूक्तमिन्द्रं न महेति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति।

दिवश्चिदस्येति सूक्तस्येन्द्रामिति द्वितीयपादे महेति महच्छब्दः श्रुतः। तस्मिन्सूक्ते निविद्धानं विधत्ते--

तद्‌ु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति, इति।

छन्दोद्वयं मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति।

सूक्तेषु महच्छब्दं पञ्चसंख्यां च पूर्ववत्प्रशंसति—

महद्वन्ति सूक्तानि शस्यन्ते महद्वा अन्तरिक्षमन्तरिक्षस्याऽऽप्त्यै पञ्च पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति।

शस्त्रद्वयगतानि महच्छब्दयुक्तानि मिलित्वा प्रशंसति—

तानि द्वेधा पञ्चान्यानि पञ्चान्यानि दश संपद्यन्ते सा दशिनी विराळन्नं विराळन्नं पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति।

पूर्वोक्तानि महच्छब्दयुक्तानि सर्वाणि सूक्तानि द्वेधा विभक्तानि। का

---

दिवश्चिदस्य वरिमा०—१–५५–१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मिति तदुच्यते । पञ्चान्यानि मरुत्वतीयशस्त्रगतानि पञ्चसंख्याकानि पृथगेवावस्थितानि । पुनरपि पञ्चान्यानि विष्केवल्यशस्त्रगतानि पञ्चसंख्याकानि पृथगेवावस्थितानि । तानि सर्वाणि मिलित्वा दशसंख्याकानि संपद्यन्ते । सा दशिनी दशसंख्यासमूहरूपा विराड्भवति । दशाक्षरा विराळिति श्रुतेः । अन्नसाधनत्वाद्विराट्छन्दोऽन्नम् । तच्चान्नं क्षीरादिरूपं पशुपूत्पन्नत्वात्पशव एव । ते च पशवश्छन्दोभिश्चतुर्विंशादिभिः स्तोमैस्तद्युक्तैरहोभिर्वा संपाद्यत्वाच्छन्दोमस्वरूपाः । अनेन संबन्धेन तत्पञ्चकद्वयं पशुप्राप्त्यै भवति ।

शस्त्रान्तरस्य प्रतिपदनुचरौ विधत्ते—

विश्वो देवस्य नेतुस्तत्सवितुर्वरेण्यमा विश्वदेवं सत्पतिमिति वैश्वदेवस्य प्रतिपदनुचरौ बार्हतेऽहन्यष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

विश्वो देवस्येत्येका । तत्सवितुर्वरेण्यमिति द्वे । एतत्त्रयं बृहत्सामसंबन्धी तृचः शस्त्रस्य प्रतिपत् । आ विश्वदेवमिति तृचोऽनुचरः । तदुभयं बृहत्सामसंबन्धाद्बार्हतं युग्मत्वेन बृहत्सामसंबन्धिन्यष्टमेऽहनि योग्यम् ।

ऊर्ध्वलिङ्गोपेतं सवितृदेवताकं सूक्तस्थानीयं चतुर्ऋचं विधत्ते—

हिरण्यपाणिमूतय इति सावित्रमूर्ध्ववदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

द्वितीयपादे सवितारमुपह्वय इति श्रवणात्सवितृदेवताकं सूक्तम् । ऊर्ध्वशब्दस्याश्रवणेऽपि सवितृमण्डलस्योपरिदेशवर्तित्वादर्थत ऊर्ध्ववत्त्वम् ।

महच्छब्दोपेतं सूक्तस्थानीयं तृचं विधत्ते—

मही द्यौः पृथिवी च न इति द्यावापृथिवीयं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

महीत्येष एव महच्छब्दः ।

पुनःशब्दोपेतं सूक्तस्थानीयं तृचं विधत्ते—

युवाना पितरा पुनरित्यार्भवं पुनर्व-

---

विश्वो देवस्य नेतुः०—५–५०–१ । तत्सवितुर्वरेण्यं०—३–६२–१० । आ विश्वदेवं सत्पतिं०—५–८२–७ । हिरण्यपाणिमूतये०—१–२२–५ । मही द्यौः पृथिवी च नः०—१–२२–१३ । युवाना पितरा पुनः०—१–२०–४ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

तृतीयपाद ऋभवो विष्ट्यक्रतेति श्रवणादृभुदेवताकं सूक्तम् ।

द्विपदा ऋचो विधाय प्रशंसति—

इमा नु कं भुवना सीषधामेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तद्यद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।

महच्छब्दोपेतं बहुदेवताकं सूक्तं विधत्ते—

देवानामिदवो महदिति वैश्वदेवं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

महच्छब्दोऽत्र विस्पष्टः ।

द्विपदाव्यतिरिक्तानां तत्सवितुर्वरेण्यमित्यारभ्य देवानामिदवो महदित्यन्तानां छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः, इति ।

शस्त्रान्तरस्य प्रतिपदं विधत्ते—

ऋतावानं वैश्वानरमित्याग्निमारुतस्य प्रतिपदग्निर्वैश्वानरो महानिति महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

ऋतावानमित्यादिके सूक्तगते तृचे द्वितीयस्यामृच्यग्निर्वैश्वानर इति द्वितीयः पादस्तत्र महानिति महच्छब्दः श्रूयते ।

वृधशब्दोपेतं सूक्तं विधत्ते—

क्रीळं वः शर्धो मारुतमिति मारुतं जम्भे रसस्य वावृध इति वृधन्वदष्टमेऽहन्यष्टमस्याह्नो रूपम्, इति ।

क्रीळं व इति सूक्तस्य पञ्चम्यामृचि जम्भे रसस्येति पादः श्रूयते । तत्र वावृध इति वृधिधातुमत्त्वम् ।

---

देवानामिदवो महत्०—८-८४-१ । ऋतावानं०—२-२३-९ । १०-१४-१ । ४-७-३ । ३-२-१२ । क्रीळं वः शर्धो मारुतं०—१-३७-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अच्युतत्वलिङ्गामृचं विधत्ते—

जातवेदसे सुनवाम सोममिति जातवेदस्याऽच्युता, इति ।

महच्छब्दयुक्तं जातवेदोदेवताकं सूक्तं विधत्ते—

अग्ने मृळ महाँ असीति जातवेदस्यं महद्वदष्टमेऽहन्यष्टमस्याह्नो रूपम् , इति ।

आग्निमारुतशस्त्रगतेषु सूक्तेषु च्छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यह एष त्र्यहः ॥ १९ ॥ इति।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयोविंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (१९) [१७२]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये त्रयोविंशोऽध्यायः ॥ २३ ॥

---

अथ चतुर्विंशोऽध्यायः ।

---

नवमेऽहानि मन्त्रलिङ्गं दर्शयति—

यद्वै समानोदर्कं तन्नवमस्याह्नो रूपम् , इति ।

समानोदर्कं तुल्यसमाप्तिकम् ।

तृतीयेऽहन्युक्तानि लिङ्गान्यस्मिन्नवमेऽहन्यतिदिशति—

यद्ध्येव तृतीयमहस्तदेवैतत्पुनर्यन्नवमम् , इति ।

तृतीयमहर्यादृशलिङ्गोपेतं पुनरप्यत्र यन्नवममहस्तदपि तादृशलिङ्गोपेतं द्रष्टव्यम् ।

तानि लिङ्गान्युपन्यस्यति—

यदश्ववद्यदन्तवद्यत्पुनरावृत्तं यत्पुनर्निनृत्तं यद्रतवद्-

---

जातवेदसे सुनवाम सोमं०—१-९९-१ । अग्ने मृळ महाँ असि०—४-९-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्पर्यस्तवद्यन्निवद्यदन्तरूपं यदुत्तमे पदे देवता निरुच्यते यदसौ लोकोऽभ्युदितः, इति ।

अथ नूतनानि लिङ्गानि दर्शयति—

यच्छुचिवद्यत्सत्यवद्यत्क्षेतिवद्यद्गतवद्यदोकवत् , इति ।

शुचिसत्यक्षेतिगतौकशब्दा नवमेऽहनि लिङ्गरूपाः । भूतार्थवाचिमत्यशान्त धातुरूपं यदस्ति तेन सहितं तृतीयेऽहनि विद्यमानं लिङ्गम् ।

अन्यानि च सर्वाणि लिङ्गान्युपसंहरति—

यत्कृतं यत्तृतीयस्याह्नो रूपमेतानि वै नवमस्याह्नो रूपाणि, इति ।

आज्यशस्त्रं विधत्ते—

अगन्म महा नमसा यविष्ठमिति नवमस्याह्न आज्यं भवति गतवन्नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

गतवद्गमिधातुयुक्तम् । अत्र चागन्मेति गमिधातुः श्रूयते ।

सूक्तगतं छन्दः प्रशंसति—

तद्रु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

प्रउगशस्त्रं विधत्ते—

प्र वीरया शुचयो दद्रिरे ते ते सत्येन मनसा दीध्याना दिवि क्षयन्ता रजसः पृथिव्यामा विश्ववाराऽश्विना गतं नोऽयं सोम इन्द्र तुभ्यं सुन्व आ तु प्र ब्रह्माणो अङ्गिरसो नक्षन्त सरस्वतीं देवयन्तो हवन्त आ नो दिवो बृहतः

---

अगन्म महा नमसा०—७-१२-१ । प्र वीरया शुचयो दद्रिरे०—७-९०-१ । ते सत्येन मनसा०—७-९१-५ । दिवि क्षयन्ता रजसः०—७-६५-१ । विश्ववाराऽश्विना०—७-७०-१ । अयं सोम इन्द्र तुभ्यं सुन्व आ०—७-३०-१ । प्र ब्रह्माणो आङ्गिरसो०—७-४२-१ । सरस्वतीं देवयन्तो हवन्ते०—१०-१७-७ । आ नो दिवो बृहतः—१२-४४-११ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पर्वताद्या सरस्वत्याभि नो नेषि वस्य इति प्रउगं शुचिवत्सत्यवत्क्षेतिवद्गतवदो-कवन्नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

अत्र दद्रिरे त इति प्रयोगपाठः । प्र वीरयेति प्रथमं प्रतीकम् । तत्र शुचय इति शुचिशब्दोपेतं लिङ्गम् । ते सत्येनेति द्वितीयं प्रतीकम् । तत्र सत्यशब्दो लिङ्गम् । दिवि क्षयन्तेति तृतीयम् । तत्र क्षेतिधातुर्लिङ्गम् । आ विश्ववारेति चतुर्थम् । तत्र गतशब्दो लिङ्गम् । अयं सोम इति पञ्चमम् । तस्मिन्ना तु प्र याहि हरिवस्तदोका इति द्वितीयः पादस्तस्मिन्नोकशब्दो लिङ्गम् । प्र ब्रह्माण इति षष्ठम् । सरस्वतीमिति सप्तमम् । आ नो दिव इत्यष्टमम् । अत्र द्वितीयपादे यजता गन्तुमिति गमिधातुः श्रुतः । सरस्वत्याभि न इति नवमम् । तत्र चतुर्थे पादेऽरणानि गन्मेति गमिधातुः श्रुतः । पूर्वोक्तयोः षष्ठसप्तमयोः स्पष्टलिङ्गाभावेऽपि च्छत्रिणो गच्छन्तीति न्यायेनेतरसाहचर्याल्लिङ्गवत्त्वं द्रष्टव्यम् । अत्रान्तिमैस्त्रिभिः प्रतीकैरेकस्तृचः । इतरे षट् तृचाः । तदेतत्सर्वं प्रउगशस्त्रम् ।

अत्रत्यं छन्दः प्रशंसति—

तदु त्रैष्टुभं त्रिष्टुप्प्रातःसवन एष त्र्यहः, इति ।

मरुत्वतीयशस्त्रे क्लृप्तिलिङ्गं दर्शयति—

तं तमिद्राधसे महे त्रय इन्द्रस्य सोमा इन्द्र नेदीय एदिहि प्र नूनं ब्रह्मणस्पतिरग्निर्नेता त्वं सोम क्रतुभिः पिन्वन्त्यपो नाकिः सुदासो रथमिति तृतीयेनाह्ना समान आतानो नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

अन्तलिङ्गोपेतं सूक्तं विधत्ते—

इन्द्रः स्वाहा पिबतु यस्य सोम इति सूक्तमन्तो वै स्वाहाकारोऽन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

---

सरस्वत्यभि नो नेषि वस्यः०—६–६१–१४ । इन्द्रः स्वाहा पिबतु०—३–५०–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अत्र स्वाहाशब्दो दृश्यते। स च होममन्त्रस्यान्तो नवममहर्नवरात्रस्यान्तोऽ[ऽतो]ऽन्त-लिङ्गसद्भावान्नवमेऽहन्येतद्युक्तम्।

पुनरप्यन्तलिङ्गोपेतं सूक्तं विधत्ते—

गायत्साम नभन्यं यथा वेरिति सूक्तमर्चाम तद्वावृधानं स्वर्वदित्यन्तो वै स्वरन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्, इति।

गायादिति सूक्तस्यार्चामेति द्वितीयः पादः। तत्र स्वर्वदिति स्वर्गवाची शब्दः श्रूयते। स्वर्गश्च लोकत्रयस्यान्तः।

प्रकारान्तरेणान्तवत्सूक्तं विधत्ते—

तिष्ठा हरी रथ आ युज्यमानेति सूक्तमन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्, इति।

तिष्ठेति स्थितिलक्षणो धात्वर्थः श्रूयते। स च गमनस्यान्तः।

पुनरपि तथाविधं तल्लिङ्गोपेतं सूक्तं विधत्ते—

इमा उ त्वा पुरुतमस्य कारोरिति सूक्तं धियो रथेष्ठामित्यन्तो वै स्थितमन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्, इति।

इमा उ त्वेति सूक्तस्य धियो रथेष्ठामिति तृतीयः पादः। तत्र स्थाधातौ स्थितिधात्वर्थो गमनस्यान्तः श्रूयते।

एतेष्वन्तवत्सु सूक्तेषु च्छन्दः प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयतनादेवैतेन न प्रच्यवते, इति।

तुल्यसमाप्तिकं सूक्तं विधत्ते—

प्र मन्दिने पितुमदर्चता वच इति सूक्तं समा-

---

गायत्साम नभन्यं यथा वेः०—१–१७३–१। तिष्ठा हरी रथ आ युज्यमाना—३–३५–१। इमा उ त्वा पुरुतमस्य०—६–२१–१। प्र मन्दिने पितुमदर्चता०—१–१०१–१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


नोदर्कं नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

अत्र सर्वास्वृक्षु मरुत्वन्तं सख्याय हवामह इति चतुर्थपादस्यैकत्वात्समानोदर्कत्वम् ।

तस्मिन्सूक्ते निविद्धानं विधत्ते—

तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति, इति ।

छन्दोद्वयं मिलित्वा प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जागतानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

मिथुनस्यैकत्वेऽपि बहुवचनं पूजार्थम् ।

द्विविधसूक्तगतसंख्यां प्रशंसति—

पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै, इति ।

निष्केवल्यशस्त्रे बृहत्सामसाध्यपृष्ठस्तोत्रस्याऽऽधारभूतं स्तोत्रियं तृचं तदनुरूपं च विधत्ते—

त्वामिद्धि हवामहे त्वं ह्येहि चेरव इति बृहत्पृष्ठं भवति नवमेऽहनि, इति ।

अयुग्मस्याह्नो राथंतरत्वेऽपि बृहत्संबन्धस्य वाचनिकत्वान्नवमेऽहनि तद्योग्यता ।

तृतीयेऽहनि विहितान्यत्र पुनर्विधीयन्ते—

यद्वावानेति धाय्याऽच्युताऽभि त्वा शूर नोनुम इति रथंतरस्य योनिमनु निवर्तयति राथंतरं ह्येतदहरा-

---

त्वामिद्धि हवामहे०—६–४६–१ । यद्वावान पुरुतमं०—१०–७४–६ । अभि त्वा शूर नोनुमः०—७–३२–२२ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यतनेनेन्द्र त्रिधातु शरणमिति साम प्रगाथस्त्रिवान्न-वमेऽहनि नवमस्याह्नो रूपं त्यमू षु वाजिनं देवजू-तमिति तार्क्ष्योऽच्युतः ॥ २० ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्रा-ह्मणभाष्ये चतुर्विंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२०) [१७३] ।

---

अथ गमिधातुयुक्तं सूक्तं विधत्ते—

सं च त्वे जग्मुर्गिर इन्द्र पूर्वीरिति सूक्तं गतवन्नव-मेऽहनि नवमस्याह्नो रूपम्, इति ।

जग्मुरिति गमिधातुः ।

क्षेतिधातुलिङ्गकं सूक्तं विधत्ते—

कदा भुवन्रथक्षयाणि ब्रह्मेति सूक्तं क्षेतिवदन्तरूपं क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

कदा भुवन्नित्यत्र क्षयाणीति क्षेतिधातुरूपं श्रूयते । क्षेतिधातुश्चान्त्यरूपः । कथमेतदिति तदुच्यते । मार्गस्यान्तं गत्वा क्षेतीव वै कश्चिन्निवसत्येव । अतो निवासार्थवाचिनः क्षेतिधातोरन्तरूपत्वम् ।

सत्यलिङ्गकं सूक्तं विधत्ते—

आ सत्यो यातु मघवाँ ऋजीषीति सूक्तं सत्यवन्न-वमेऽहनि नवमस्याह्नो रूपम्, इति ।

सत्यशब्दोऽत्र विस्पष्टः ।

अन्तलिङ्गोपेतं सूक्तं विधत्ते—

तत्त इन्द्रियं परमं पराचैरिति सूक्तमन्तो वै परम-

---

इन्द्र त्रिधातु शरणं०–६–४६–९ । त्यमू षु वाजिनं देवजूतं०–१०–१७८–१ । कदा भुवन्रथक्षयाणि ब्रह्म०–६–३५–१ । आ सत्यो यातु मघवाँ ऋजीषी०–४–१६–१ । तत्त इन्द्रियं परमं पराचैः०—१–१०३–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मन्तो नवममहर्नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

तत्र इति सूक्ते परमशब्द उत्कर्षवाची विद्यते । उत्कर्षादधिकस्य कस्य-चिदभावात्परमशब्दस्यान्तवाचित्वम् ।

सं च त्वेत्यादिसूक्तचतुष्टयगतं छन्दः प्रशंसति—

तदु त्रैष्टुभं तेन प्रतिष्ठितपदेन सवनं दाधाराऽऽयत-नादेवैतेन न प्रच्यवते, इति ।

अन्तलिङ्गकमन्यत्सूक्तं विधत्ते—

अहं भुवं वसुनः पूर्व्यस्पतिरिति सूक्तमहं धनानि संजयामि शश्वत इत्यन्तो वै जितमन्तो नवममहर्न-वमेऽहनि नवमस्याह्नो रूपम्, इति ।

अहं भुवमिति सूक्तस्याहं धनानीति द्वितीयः पादः । तत्र जयामीति श्रूयते । जयश्च युद्धस्यान्तः ।

तस्मिन्सूक्ते निविद्धानं विधत्ते—

तदु जागतं जगत्यो वा एतस्य त्र्यहस्य मध्यंदिनं वहन्ति तद्वैतच्छन्दो वहति यस्मिन्निविद्धीयते तस्माज्जगतीषु निविदं दधाति, इति ।

सूक्तगतं छन्दोद्वयं सूक्तसंख्यां च प्रशंसति—

मिथुनानि सूक्तानि शस्यन्ते त्रैष्टुभानि च जाग-तानि च मिथुनं वै पशवः पशवश्छन्दोमाः पशू-नामवरुद्ध्यै पञ्च पञ्च सूक्तानि शस्यन्ते पञ्चपदा पङ्क्तिः पाङ्क्तो यज्ञः पाङ्क्ताः पशवः पशव-श्छन्दोमाः पशूनामवरुद्ध्यै तानि द्वेधा पञ्चा-न्यानि पञ्चान्यानि दश संपद्यन्ते सा दशिनी विरा-ळन्नं विराळन्नं पशवः पशवश्छन्दोमाः पशूनाम-वरुद्ध्यै, इति ।

---

अहं भुवं वसुनः० — १०–४८–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मरुत्वतीयनिष्केवल्यशस्त्रद्वयगतसूक्तापेक्षया पञ्च पञ्चेति द्विरुक्तिः।
तृतीयेऽहनि विहितौ वैश्वदेवस्य प्रतिपदनुचरावत्रापि विधत्ते—

तत्सवितुर्वृणीमहेऽद्या नो देव सवितरिति वैश्वदेवस्य प्रतिपदनुचरौ राथंतरेऽहनि नवमेऽहनि नवमस्याह्नो रूपम्, इति।

अन्तलिङ्गकं तृचात्मकं सूक्तं विधत्ते—

दोषो आगादिति सावित्रमन्तो वै गतमन्तो नवममहर्नवमेऽहानि नवमस्याह्नो रूपम्, इति।

आगादिति गमिधात्वर्थः। गमनं च स्थितेरन्तः। अतोऽन्तत्वं लिङ्गम्।
शुचिलिङ्गकं सूक्तस्थानीयं तृचं विधत्ते—

प्र वां महि द्यवी अभीति द्यावापृथिवीयं शुची उप प्रशस्तय इति शुचिवन्नवमेऽहनि नवमस्याह्नो रूपम्, इति।

महि द्यवी इति श्रवणादिदं द्यावापृथिवीयम्। तस्य तृतीयपादे शुची उपेति शुचिशब्दः श्रूयते।

त्रिशब्दोपेतं सूक्तस्थानीयं तृचं विधत्ते—

इन्द्र इषे ददातु नस्ते नो रत्नानि धत्तनेत्यार्भवं त्रिरा साप्तानि सुन्वत इति त्रिवन्नवमेऽहनि नवमस्याह्नो रूपम्, इति।

इन्द्र इष इत्यृगेका। ते नो रत्नानीति द्वे त्रितयं मिलित्वा, ऋभुदेवताकं सूक्तम्। ऋभुक्षणमृभुमिति श्रवणात्। त्रिरा साप्तानीति पादे त्रिशब्दः श्रुतः।

---

तत्सवितुर्वृणीमहे०—५-८२-१। अद्या नो देव सवितः०—५-८२-४।
प्र वां महि द्यवी अभि०—४-५६-५। इन्द्र इषे ददातु नः०—८-९४-११।
ते नो रत्नानि धत्तन०—१ २०-७।

---

१ ख. सूक्तं वि°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पादद्वयोपेता ऋचो विधाय प्रशंसति—

बभ्रुरेको विषुणः सूनरो युवेति द्विपदाः शंसति द्विपाद्वै पुरुषश्चतुष्पादाः पशवः पशवश्छन्दोमाः पशूनामवरुद्ध्यै तद्यद्द्विपदाः शंसति यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति, इति ।

त्रिशब्दोपेतं बहुदेवताकं सूक्तं विधत्ते—

ये त्रिंशति त्रयस्पर इति वैश्वदेवं त्रिवन्नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

त्रिंशतीति श्रवणाद्बहुदेवताकत्वम् । त्रय इति त्रिशब्दो विस्पष्टः ।

तत्सूक्तगतं छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः, इति ।

तान्यु वैश्वदेवशस्त्रे प्रोक्तानि तान्यपि सूक्तानि ।

शस्त्रान्तरस्य प्रतिपदं विधत्ते—

वैश्वानरो न ऊतय इत्याग्निमारुतस्य प्रतिपदा प्रयातु परावत इत्यन्तो वै परावतोऽन्तो नवममहर्नवमेऽहानि नवमस्याह्नो रूपम्, इति ।

अत्र सूक्तपठिते तृचे परावत इति शब्दो दूरदेशवाची । स च देशो मार्गस्यान्त इत्यन्तवत्त्वं लिङ्गम् ।

प्रकारान्तरेणान्तलिङ्गकं सूक्तं विधत्ते—

मरुतो यस्य हि क्षय इति मारुतं क्षेतिवदन्तरूपं क्षेतीव वा अन्तं गत्वा नवमेऽहनि नवमस्याह्नो रूपम्, इति ।

मरुत इति श्रवणान्मारुतम् । क्षय इति श्रवणात्क्षेतिवत्क्षयतिधातुयुक्तम् । स च धात्वर्थोऽत्र स्वरूपम् । कथमेतदिति तदुच्यते । सर्वो हि पुरुषो मार्गस्यान्तं गत्वा क्षेतीव वै क्वचिन्निवसत्येव सोऽयमन्तो लिङ्गम् ।

---

बभ्रुरेको विषुणः सूनरः०—८–२९–१ । ये त्रिंशति त्रयस्परः—८–२८–१ । मरुतो यस्य हि क्षये०—१–८६–१

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अच्युतत्वलिङ्गयुक्तामृचं विधत्ते

जातवेदसे सुनवाम सोममिति जातवेदस्याऽच्युता, इति।

जातवेदोवाचकाग्निशब्दोपेतं सूक्तं विधत्ते—

प्राग्नये वाचमीरयेति जातवेदस्यं समानोदर्कं नवमेऽहनि नवमस्याह्नो रूपम् , इति।

एतदीयास्वृक्षु स नः पर्षदति द्विष इति पादेन समाप्तिदर्शनात्समानोदर्कत्वम्।

तस्य पादस्य पुनः पुनरावृत्तिं दर्शयति—

स नः पर्षदति द्विषः स नः पर्षदति द्विष इति शंसति बहु वा एतस्मिन्नवरात्रे किंच किंच वारणं क्रियते शान्त्या एव तयत्स नः पर्षदति द्विषः स नः पर्षदति द्विष इति शंसति सर्वस्मादेवैनांस्तदेनसः प्रमुञ्चति, इति।

स न इत्यादिपादस्य सर्वास्वृक्षु पठितस्य संग्रहार्थं वीप्सारूपेण द्विरुक्तिः। एतमेव पादं पुनः पुनः शंसतीत्यत्र कोऽभिप्राय इति सोऽभिधीयते। एतस्मिन्नवरात्रे त्रिविधत्र्यहसमष्टिरूपे प्रयोगाधिक्यात्तदा तदा विस्मृत्य किमपि वारणं वारणीयं निषिद्धानुष्ठानं बहु वै प्रभूतमेव क्रियते। अतः स्वशान्त्यर्थमेव पुनः पुनः शस्यते। तेन स न इत्यादेः पुनः पुनः शंसनेन तस्मात्सर्वस्मान्निषिद्धाचरणपापादेनानृत्विग्यजमानान्प्रमोचयति। तस्य पदस्यायमर्थः—यस्याग्नये स्तुतिरूपा वागीर्यते सोऽग्निः पापरूपाञ्शत्रूनतिक्रम्य नोऽस्मान्पर्षद्विघ्नपरिहारेण कर्मपारं नयत्विति।

एतच्छस्त्रगतसूक्तेषु च्छन्दः प्रशंसति—

तान्यु गायत्राणि गायत्रतृतीयसवन एष त्र्यहः ॥ २१ ॥ इति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (२१)[१७४]।

---

जातवेदसे सुनवाम सोमं०—१ ९९–१। प्राग्नये वाचमीरय०—१०–१८८–१।

१ ख. ग. स्वस्य शा°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वादशाहे प्रायणीयोदयनीयरूपमा(पे आ)द्यन्ते ये अहनी तयोर्मध्ये दश-रात्रोऽस्ति। तस्मिंश्च त्रयो भागाः। पृष्ठ्यः षडह एको भागः। छन्दोमनामका-स्त्रयोऽहर्विशेषा[1] द्वितीयो भागः। दशममहस्तृतीयो भागस्तस्य भागस्य विधे-यतया प्रशंसा कर्तव्या। इतरभागयोरप्यत्र या प्रशंसा प्रतीयते साऽपि विधे-यस्य दशमस्याह्नः प्रशंसार्थमेव। तस्मिन्नहनि प्रशंसातिशयस्य गम्यमानत्वात्। तत्र चत्वारो दृष्टान्ता विवक्षिताः। तेषां मध्ये प्रथमेन दृष्टान्तेन प्रशंसति—

पृष्ठ्यं षळहमुपयन्ति यथा वै मुखमेवं पृष्ठ्यः षळहस्तद्यथाऽन्तरं मुखस्य जिह्वा तालु दन्ता एवं छन्दोमा अथ येनैव वाचं व्याकरोति येन स्वादु चास्वादु च विजानाति तद्दशममहः, इति।

याज्ञिका दशरात्रे पृष्ठ्यं षडहमनुतिष्ठन्ति स मुखस्थानीयो मुखस्याभ्य-न्तरे जिह्वा तालु दन्ताश्चेति त्रयोऽवयवास्तिष्ठन्ति तत्स्थानीयास्त्रयश्छन्दोमाः। अथ तद्येन विलक्षणेन येनैव वागिन्द्रियेण वाचं व्याकरोति शब्दमुच्चारयति येन च रसनेन्द्रियेण स्वादुस्वादुविभागं जानाति तदिन्द्रियद्वयस्थानीयमेतद्द-शममहः।

द्वितीयेन दृष्टान्तेन प्रशंसति—

यथा वै नासिके एवं पृष्ठ्यः षळहस्तद्यथाऽन्तरं नासिकयोरेवं छन्दोमा अथ येनैव गन्धान्विजानाति तद्दशममहः, इति।

छिद्रद्वययुक्तत्वेन भागद्वयविवक्षया नासिके इति द्विवचनम्। तयोरन्तरं मध्यवर्ति च्छिद्रं गन्धग्राहकघ्राणेन्द्रियस्थानीयं दशममहः।

तृतीयेन दृष्टान्तेन प्रशंसति—

यथा वा अक्ष्येवं पृष्ठ्यः षळहस्तद्यथाऽन्तरमक्ष्णः कृष्णमेवं छन्दोमा अथ यैव कनीनिका येन पश्यति तद्दशममहः, इति।

अक्षिशब्देन शुक्लमण्डलसहितं सर्वं गोलकं विवक्षितम्। तत्र भागत्रयमारण्यक-काण्डे वक्ष्यते—'त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिका' इति। शुक्लमण्डलमध्ये

[1] क. ख. ङ. ठ. 'यो हर्वि' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कृष्णमण्डलं तस्य मध्ये स्वल्पा वर्तुलाकारा कनीनिका तत्रावस्थितेन चक्षुरिन्द्रियेण जनो रूपं पश्यति। तत्र शुक्लमण्डलरूपगोलकस्थानीयः पृष्ठ्यः षडहः। कृष्णमण्डलस्थानीयाश्छन्दोमाः। कनीनिकागतेन्द्रियस्थानीयं दशममहः।

चतुर्थदृष्टान्तेन प्रशंसति—

यथा वै कर्ण एवं पृष्ठ्यः षळहस्तद्यथाऽन्तरं कर्णस्यैवं छन्दोमा अथ येनैव शृणोति तद्दशममहः, इति।

कर्णशब्देन शष्कुल्याकारं गोलकमुच्यते। तत्स्थानीयः पृष्ठ्यः षडहः। तस्य कर्णस्यान्तरं यन्मध्यवर्ति च्छिद्रं तत्स्थानीयाश्छन्दोमाः। तच्छिद्रावस्थितेनेन्द्रियेण जनः शब्दं शृणोति। तदिन्द्रियस्थानीयं दशममहः।

अथ तस्मिन्दशमेऽहनि कंचिन्नियमं विधत्ते—

श्रीर्वै दशममहः श्रियं वा एत आगच्छन्ति ये दशममहरागच्छन्ति तस्माद्दशममहरविवाक्यं भवति मा श्रियोऽववादिष्मेति दुरववदं हि श्रेयसः, इति।

यदेतद्दशममहः सा श्रीर्वै भोग्यवस्तुसमृद्धिस्वरूपमेव। 'ऋध्नोति यो द्वादशाहेन यजते' इति श्रुत्यन्तरात्। अतो ये दशममहरागच्छन्त्यनुतिष्ठन्ति ते श्रियमेव प्राप्नुवन्ति। यस्माच्छ्रीरूपमेतदहस्तस्माद्विवाक्यरहितं भवति। यदि प्रमादान्मन्त्रे तत्र वा कश्चित्किंचिद्विरुद्धमाचरेत्तदानीं तद्विरुद्धमन्येन वाच्यं वक्तव्यम्। अत्र त्वया विरुद्धमनुष्ठितं तदेवं सम्यगनुतिष्ठेत्यभिज्ञेन कर्मान्तरे वक्तव्यम्। इह तु तस्य विरुध्यमानवचनस्य निषिद्धत्वादिदमहरविवाक्यम्। तथा चाऽऽश्वलायन आह—'नास्मिन्नहनि केनचित्कस्यचिद्विवाच्यमाविवाक्यमित्येतदाचक्षते संशये बहिर्वेदि स्वाध्यायप्रयोगोऽन्तर्वेदीत्येके' इति। परेण प्रयुज्यमानं विरुद्धं दृष्ट्वाऽपि तन्न ब्रूयादिति नियमस्योपपत्तिरुच्यते। श्रियो माऽववादिष्मेति दशमस्याह्नः श्रीरूपत्वात्तस्य यदववदनं तच्छ्रिया एव भवति। अवमतस्य विरुद्धस्य वदनमववदनं निन्दा। यदि दशममहरव(वा)वादिष्म निन्दां कुर्मस्तर्हि श्रिया एव निन्दा संपद्यते। अतो वयं श्रियो माऽववादिष्म निन्दां मा कुर्म इति विचार्यं परित्य(ज्य)जतामित्यभिप्रायः। लोकेऽपि श्रेयसो विद्यैश्वर्यादिनाऽधिकस्य पुरुषस्याऽऽचरणं दुरववदं अववा-

१ क. 'वाक्यम'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


देन निन्दया रहितम् । अत एव पित्राचार्यादीनां निन्दां न कुर्वन्ति द्वेषिभिः क्रियमाणामपि न शृण्वन्ति । तदेवमविवाच्यत्वधर्मोऽत्र विहितः । यद्वा वाक्यद्वयमिदम् । दशममहरागच्छन्तीत्यन्तो दशमस्याह्नो विधिस्तस्मादित्यादिरविवाक्यत्वनियमविधिः । सोऽपि शाखान्तरेऽप्येवमाम्नायते—'तस्माद्दशमेऽहन्यविवाक्य उपहताय न व्युच्यम्' इति ।

अथैतस्मिन्दशमेऽहनि मानसग्रहाय प्रसर्पणं विधत्ते--

ते ततः सर्पन्ति, इति ।

तेऽनुष्ठातारस्ततः पत्नीसंयाजान्तानुष्ठानादूर्ध्वं प्राञ्च उदेत्य मानसाय प्रसर्पेयुः । प्रसर्पणं नाम तदर्थः प्रयत्नः । सर्वेष्वहर्गणेषु कर्मस्वन्तिमादह्न इतराण्यहानि पत्नीसंयाजान्तान्यन्तिमं त्वेकमेवोदवसानीयान्तम् । तथा चाऽऽश्वलायन आह—'प्रातरनुवाकाद्युदवसानीयान्तान्यन्त्यानि पत्नीसंयाजान्तानीतराणि' इति । तथा सत्यपि[वि]वाल[क्य](?)स्येतरत्व[त्वात्पू]न्यायेन पत्नीसंयाजान्तत्वे प्राप्ते वचनेन तत ऊर्ध्वं मानसग्रहो(हं) विधत्ते । तदर्थं प्रसर्पन्ति संदसो निर्गत्य यथायथं मार्गेण गच्छेयुः ।

गतानां तेषां तीर्थदेशे मार्जनं विधत्ते—

ते मार्जयन्ते, इति ।

मार्जनादूर्ध्वं होमार्थं स्थानविशेषप्राप्तिं विधत्ते—

ते पत्नीशालां संप्रपद्यन्ते, इति ।

पत्नी हि गार्हपत्यस्य समीपेऽवतिष्ठत इति सैव पत्नीशाला तत्र गच्छेयुः ।

गतानां तेषां होमं विधत्ते—

तेषां य एतामाहुतिं विद्यात्स ब्रूयात्समन्वारभध्वमिति स जुहुयात्, इति ।

तेषां होमार्थं गार्हपत्यसमीपं गतानां मध्ये यः पुमानेतां वक्ष्यमाणामाहुतिं जानाति स पुमानितरान्प्रति समन्वारभध्वं यूयं सर्वेऽपि मां स्पृशतेति ब्रूयात् । तैः समन्वारब्धः स पुमानाहुतिं जुहुयात् ।

तत्र मन्त्रं दर्शयति—

इह रमेह रमध्वमिह धृतिरिह स्वधृतिरग्नेऽवाट्स्वा-

---

१ क ख. झ ट. 'द्वाक्य' । २ क. च. झ. ट. 'धिस्तस्मा ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



हाऽवाळिति, इति ।

हे यजमाना इहास्मिँल्लोके रम रमणं कुरुत । हे पुत्रपौत्रादिकाः प्रजा इ तेषु यजमानेषु रमध्वं क्रीडत । इह यजमानेषु धृतिरपत्यानां प्रजानां धार मस्तु । इह यजमानेषु स्वधृतिर्वेदशास्त्रादिरूपाया वाचः स्वाधीनत्वेन धार मस्तु । हेऽग्नेऽवाड्रथंतररूपेण यज्ञस्य वहनं कुरु । हे स्वाहा देव्यग्निजायेऽ इवृहत्सामरूपेण यज्ञस्य वहनं कुरु । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

यथोक्तं मन्त्रार्थमभिप्रेत्य क्रमेण मन्त्रावयवानां सर्वेषां तात्पर्यं दर्शयति-

स यदिह रमेत्याहास्मिन्नेवैनांस्तल्लोके रमयतीह रमध्वमिति यदाह प्रजामेवैषु तद्रमयतीह धृतिरिह स्वधृतिरिति यदाह प्रजां चैव तद्वाचं च यजमानेषु दधात्यग्नेऽवाळिति रथंतरं स्वाहाऽवाळिति बृहत्, इति।

स मन्त्र इह रमेति भागमाहेति यदस्ति तेनास्मिन्नेव लोक एनान्यजमाना न्रमयति । एवमुत्तरभागा अपि योज्याः ।

बृहद्रथंतररूपं भागद्वयं विशेषेण प्रशंसति—

देवानां वा एतन्मिथुनं यद्बृहद्रथंतरे देवानामेव तन्मिथुनेन मिथुनमवरुन्धते देवानां मिथुनेन मिथुनं प्रजायन्ते, इति ।

यदेतदन्त्यमन्त्रद्वयं बृहद्रथंतररूपमुक्तं तदेतद्देवानां संबन्धि मिथुनम् । अ स्तद्भागद्वयपाठेन देवसंबद्धेनैव मिथुनेन मानुषं मिथुनं प्राप्नुवन्ति । ततो दे संबन्धिमिथुनानुग्रहेण मानुषमिथुनमुत्पादयन्ति। ततः सोऽयं मन्त्रो यजमाना प्रजोत्पादनाय संपद्यते ।

वेदनं प्रशंसति—

प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

गार्हपत्ये यथा होमो विहितस्तथैवाऽऽग्नीध्रीये कंचिद्धोमं विधत्ते—

ते ततः सर्पन्ति ते मार्जयन्ते त आग्नीध्रं

१ आग्नीध्रीयं ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


संप्रपद्यन्ते तेषां य एतामाहुतिं विद्यात्स ब्रूयात्सम-
न्वारभध्वमिति स जुहुयात्, इति ।

गार्हपत्यस्थानाद्बहिर्निर्गत्य मार्जनं कृत्वाऽऽग्नीध्रीयं प्राप्य तत्र पूर्ववज्जुहुयात् ।

तस्मिन्होमे मन्त्रमाह—

उपसृजन्धरुणं मातरं धरुणो धयन् । रायस्पोषमि-
षमूर्जमस्मासु दीधरत्स्वाहेति, इति ।

अत्र देवताया अस्पष्टत्वादनिरुक्तः प्रजापतिर्देवतेति श्रुत्यन्तरेण प्रजापतिर्देवता । तस्य मन्त्रस्यायमर्थः । धरुणः सर्वस्य जगतो धारयिता प्रजापतिर्धरुणमस्माकं धर्तारं पितरं मातरं चोपसृजन्नस्माभिः संयोजयन्ननिष्टाद्वा वियोजयन्नस्माभिर्हुतमाज्यं धयन्पिबन्रायस्पोषं धनपुष्टिमिषमन्नमूर्जं क्षीरादिरसं चास्मासु दीधरद्धारयतु संपादयतु । तस्य प्रजापतेरिदं स्वाहुतमस्तु । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

आहुतिं प्रशंसति—

रायस्पोषमिषमूर्जमवरुन्ध आत्मने च यजमानेभ्यश्च
यत्रैवं विद्वानेतामाहुतिं जुहोति ॥ २२ ॥ इति ।

आत्मने होत्रे ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (२२) [१७५] ।

---

आग्नीध्रीये होमादूर्ध्वं कर्तव्यानि तानि दर्शयति—

ते ततः सर्पन्ति ते सदः संप्रपद्यन्ते यथायथमन्य
ऋत्विजो व्युत्सर्पन्ति संसर्पन्त्युद्गातारस्ते सर्पराज्या
ऋक्षु स्तुवते, इति ।

ते कृतहोमाः सर्वे तत आग्नीध्रीयादग्नेः सर्पन्ति निर्गच्छन्ति । निर्गतास्ते सदः प्रविशेयुः । प्रवेशवेलायामुद्गातृभ्योऽन्य ऋत्विजो यथायथं स्वमार्गमनतिक्रम्य व्युत्सर्पन्ति विविधं गच्छन्ति । उद्गातारस्तु संसर्पन्ति संभूय गच्छेयुः । गतास्ते सामगाः सर्पराज्याः संबन्धिनीष्वृक्ष्वाऽयं गौरित्यादिषु

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्तोत्रं कुर्युः। सर्पराज्ञीति भूमेरवतारस्वरूपा काचिद्देवता। तया दृष्टा मन्त्राः सर्पराज्ञीशब्देनोच्यन्ते। अत्र तु ऋक्ष्विति पृथगुपादानात्सर्पराज्ञ्या इति षष्ठ्यन्तत्वाच्च देवतावाच्येवायं शब्दः।

एतदेवाभिप्रेत्य तत्संबद्धा ऋचस्तां च देवतां प्रशंसति--

इयं वै सर्पराज्ञीयं हि सर्पतो राज्ञीयं वा अलोमिकेवाग्र आसीत्सैतं मन्त्रमपश्यदाऽयं गौः पृश्निरक्रमीदिति तामयं पृश्निर्वर्ण आविशन्नानारूपो यं यं काममकामयत यदिदं किंचौषधयो वनस्पतयः सर्वाणि रूपाणि, इति।

या भूमिरस्ति सेयमेव देवताशरीरं धृत्वा ब्रह्मवादिनी भूत्वा सर्पराज्ञीशब्देनोच्यते। यस्मादियं पृथिवी सर्वतः संचरतो जङ्गमस्य मनुष्यादे राज्ञी स्वामिनी सर्वेषां मनुष्यादीनां तदाश्रयेणावस्थानात्। अतः सर्पराज्ञीत्युच्यते। इयमेवाग्रे वृक्षाद्युत्पत्तेः पूर्वमेवालोमिकेव रोमरहितेवाऽऽसीत्। ततो रोमोत्पत्त्यर्थं सा भूमिः साधनभूतमाऽयं गौरिति मन्त्रमपश्यत्। तन्मन्त्रप्रसादेन तां भूमिमयं दृश्यमानः पृश्निर्वर्ण आविशत्। पृश्निशब्दस्य व्याख्यानं नानारूप इति। नीलपीतादिरित्यर्थः। किंच लोक ओषधयो वनस्पतयः सर्वाण्यन्यानि रूपाणि तृणादीनि यदिदं किंचित्स्थावररूपमस्ति तन्मध्ये यं यं काममसौ भूमिरकामयत स सर्वोऽप्येनां प्राविशत्।

वेदनं प्रशंसति—

पृश्निरेनं वर्ण आविशति नानारूपो यं यं कामं कामयते य एवं वेद, इति।

वर्णशब्देन नीलपीतादिवाचिना सर्वमपि भोग्यजातमुपलक्ष्यते।

स्तोत्रशब्दयोः प्रकाराविशेषं विधत्ते—

मनसा प्रस्तौति मनसोद्गायति मनसा प्रतिहरति वाचा शंसति, इति।

उद्गातॄणां मध्ये प्रस्तोतुः प्रस्तावभाग उद्गातुरुद्गीथभागः प्रतिहर्तुः प्रतिहारभागस्तान्भागान्मनसैव तेऽनुतिष्ठेयुः। होता तु वाचा शंसेत्।

---

आऽयं गौः पृश्निरक्रमीत्०—१०-१९०-१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्विविधमपि विधिं प्रशंसति —

वाक्च वै मनश्च देवानां मिथुनं देवानामेव तन्मिथुनेन मिथुनमवरुन्धते देवानां मिथुनेन मिथुनं प्रजायन्ते प्रजात्यै प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

बृहद्रथंतरमिथुनवद्व्याख्येयम् ।

होतुः सर्पराज्ञ्याः शंसनादूर्ध्वं चतुर्होतृमन्त्रान्विधत्ते—

अथ चतुर्होतॄन्होता व्याचष्टे तदेव तत्स्तुतमनुशंसति, इति ।

चतुर्होतृमन्त्रास्तद्व्याख्यानप्रकारश्चोपरिष्टादभिधास्यते । तेन व्याख्यानेन यदुद्गातृभिः स्तुतं तदेव सर्वमनुशस्तं भवति ।

तमेतं मन्त्रसमूहं प्रशंसति —

देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतॄन्होता व्याचष्टे देवानामेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति, इति ।

य एते चतुर्होतृमन्त्राः सन्ति तदेतन्मन्त्रस्वरूपं देवानां संबन्धि यज्ञयोग्यं नाम ततो होतृव्याख्याने देवसंबन्धि योग्यं नाम प्रकाशितं करोति ।

वेदनं प्रशंसति—

तदेनं प्रकाशं गतं प्रकाशं गमयति गच्छति प्रकाशं य एवं वेद, इति ।

यदुक्तार्थवेदिता होतैनं होतारं तद्देवानां गुह्यं नाम स्वयं प्रकाशं गतं सत्पश्चात्प्रकाशं गमयति । ततो वेदिता प्रकाशं गच्छति । तेन नाम्नाऽनुगृहीतः प्रख्यातो भवतीत्यर्थः । यद्वा तदेनमित्यादि पूर्वशेषः । तद्देवानां गुह्यं नाम स्वयं प्रकाशं गतं सत्पश्चादेनं होतारं प्रकाशं गमयति । गच्छतीत्यादिकैव विद्वत्प्रशंसा ।

तदेवं क्रत्वङ्गेन चतुर्होतृव्याख्यानं विधाय तत्प्रशंसां कर्तुं क्रतुनिरपेक्षलौकिककाम्यफलसिद्ध्यर्थं चतुर्होतृव्याख्यानं विधत्ते —

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यं ब्राह्मणमनूचानं यशो नर्छेदिति ह स्माऽऽहारण्यं परेत्य दर्भस्तम्बानुदूग्रथ्य दक्षिणतो ब्रह्माणमुपवेश्य चतुर्होतॄन्व्याचक्षीत, इति।

साङ्गवेदाध्ययनतदर्थानुष्ठानशीलोऽनूचानस्तादृशं कंचिद्ब्राह्मणं सभामध्ये वाग्मित्वेन रहितं यदि यशो नर्च्छेद्विद्वानयमिति कीर्तिर्न प्राप्नुयात्तदानीमयं ब्राह्मणो ग्रामान्निर्गत्य विजनमरण्यं प्राप्य तत्र दर्भस्तम्बानामग्रमूर्ध्वमुखत्वेन ग्रथित्वा स्वस्य दक्षिणपार्श्वे कंचिद्वेदविदं विप्रमुपवेश्य तत्संनिधौ चतुर्होतृनामकान्मन्त्रान्व्याचक्षीत। उच्चैरुच्चारणं व्याख्यानम्। इत्येतत्प्रयोगं कश्चिद्ब्रह्मवाद्याह स्मेत्यन्वयः॥

तमिमं यज्ञसंयुक्तं प्रयोगं पूर्ववत्प्रशंसति—

देवानां वा एतद्यज्ञियं गुह्यं नाम यच्चतुर्होतारस्तद्यच्चतुर्होतॄन्व्याचक्षीत देवानामेव तद्यज्ञियं गुह्यं नाम प्रकाशं गमयति तदेनं प्रकाशं गतं प्रकाशं गमयति गच्छति प्रकाशं य एवं वेद ॥२३॥ इति।

पूर्ववद्व्याख्येयम्।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये चतुर्थः खण्डः॥ ४॥ (२३) [१७६]।

---

अथ चतुर्होतृव्याख्यानस्य प्रकारं यज्ञाङ्गसाकल्येनाभिधातुमुपक्रमते—

अथौदुम्बरीं समन्वारभन्ते, इति।

चतुर्होतृव्याख्यानोद्योगानन्तरं येयमौदुम्बरी शाखा सदस्यन्तर्निहिता तां शाखां सर्वे संभूयोपस्पृशेयुः।

तत्र मन्त्रं दर्शयति—

इषमूर्जमन्वारभ इति, इति।

अन्नरूपां रसरूपां वै तामौदुम्बरीमन्वारभ इति हस्तेन स्पृशामि। इतिशब्दो मन्त्रसमाप्त्यर्थः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

मन्त्रार्थमौदुम्बर्यां दर्शयति —

ऊर्ग्वा अन्नाद्यमुदुम्बरः, इति ।

योऽयमुदुम्बरवृक्षः सोऽयं रसरूपोऽन्नरूपश्च ।

तमेतमर्थमुपपादयति —

यद्वैतद्देवा इषमूर्जं व्यभजन्त तत उदुम्बरः समभवत्तस्मात्स त्रिः संवत्सरस्य पच्यते, इति ।

देवाः पुरा यदेतदन्नरसरूपं वस्तु कचिद्भूमावुपविश्य व्यभजन्तैतावदस्यै-तावदस्येति विभागं कृतवन्तस्तदानीं तस्माद्भूमौ पतितादन्नरसभेदाद्बीजभू-तादयमौदुम्बरवृक्षः समुत्पन्नः । तस्मात्संवत्सरस्य मध्ये भोक्तृणामन्नसिद्ध्यर्थं स वृक्षस्त्रिः पच्यते । त्रिरित्युपलक्षणम् । बहुकृत्वः फलं गृह्णाति ।

औदुम्बरीस्पर्शमुपसंहरति—

तद्यदौदुम्बरीं समन्वारभन्त इषमेव तदूर्जमन्नाद्यं समन्वारभन्ते, इति ।

औदुम्बरीस्पर्शादूर्ध्वं मौनं विधत्ते—

वाचं यच्छन्ति वाग्वै यज्ञो यज्ञमेव तद्यच्छन्ति, इति ।

यज्ञस्योच्चार्यमाणमन्त्रसाध्यत्वाद्वाग्रूपत्वम् । अतो वाङ्नियमेन यज्ञस्यैव नियमो भवति ।

मौनस्य कालविशेषं विधत्ते—

अहर्नियच्छन्त्यहर्वै स्वर्गो लोकः स्वर्गमेव तं लोकं नियच्छन्ति, इति ।

सूर्यास्तमयादर्वाक्स्वर्गवत्प्रकाशसद्भावेनाह्नः स्वर्गत्वम् । तस्मिन्नहनि वाङ्-नियमेन स्वर्ग एव नियतः स्वाधीनो भवति ।

विधिसिद्ध्यर्थमहानि कतिपयेषु क्षणेषु वाचं नियम्य पश्चान्मौनपरित्याग-मासौ निषेधति—

न दिवा वाचं विसृजेरन्यद्दिवा वाचं विसृजेरन्नह-र्भ्रातृव्याय परिशिंष्युः, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अहनि वाग्विसर्गे सति यजमानाः सर्वेऽप्यहासंबन्धं परित्यज्य शत्रवे तदहः परिशिंष्युर्दद्युरित्यर्थः ।

अहनि निषिद्धस्य वाग्विसर्गस्य रात्रौ प्राप्तौ सत्यां तदपि निषेधति—

न नक्तं वाचं विसृजेरन्यन्नक्तं वाचं विसृजेरन्रात्रीं भ्रातृव्याय परिशिंष्युः, इति ।

पूर्ववद्व्याख्येयम् ।

यद्यहनि रात्रौ च निषेधः कदा तर्हि वाग्विसर्ग इत्याशङ्क्याऽऽह—

समयाविषितः सूर्यः स्यादथ वाचं विसृजेरंस्तावन्तमेव तद्द्विषते लोकं परिशिंषन्ति, इति ।

यदा सूर्यः समयाविषितोऽस्तमयसमयं प्राप्तोऽर्धास्तमितः स्यात्तदानीं वाग्विसर्गः । तथा सति संपूर्णास्तमयपर्यन्तमल्पमेव कालं द्विषते लोकं शत्रोः स्थानं परिशिंषन्ति प्रयच्छन्ति । अहो रात्रिश्चेति कालद्वयं स्वार्थमेव भवति ।

पक्षान्तरं विधत्ते—

अथो खल्वस्तमित एव वाचं विसृजेरंस्तमोभाजमेव तद्द्विषन्तं भ्रातृव्यं कुर्वन्ति, इति ।

अथो खल्वथवेत्यर्थः । सूर्ये साकल्येनास्तमिते सत्येव पश्चाद्वाग्विसर्गे शत्रुं तमोभाजमन्धकारमग्नं कुर्वन्ति ।

वाग्विसर्गस्य देशविशेषं विधत्ते—

आहवनीयं परीत्य वाचं विसृजेरन्यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयो यज्ञेनैव तत्स्वर्गेण लोकेन स्वर्गं लोकं यन्ति, इति ।

सदसो निर्गत्याऽऽहवनीयं परितः प्रदक्षिणीकृत्य तत्र वाग्विसर्गः कर्तव्यः । आहवनीयस्य यज्ञनिष्पादकत्वद्वारा स्वर्गहेतुत्वेन तदुभयात्मकत्वे सति यज्ञस्वर्गात्मकेनैवाऽऽहवनीयेन यजमानाः स्वर्गं प्राप्नुवन्ति ।

वाग्विसर्गे मन्त्रविशेषं विधत्ते—

यदिहोनमकर्म यदत्यरीरिचाम प्रजापतिं

१ ख झ. ट 'स्येऽस्त' । २ क. झ. ट. 'कद्वा' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तत्पितरमप्येत्विति वाचं विसृजन्ते, इति ।

इह क्रतौ यदङ्गमूनमसंपूर्णं यदप्यकर्पं स्वरूपेणैव तदङ्गं न कृतं यदप्यङ्गमत्यरीरिचामातिरिक्तं द्विवारं त्रिवारं वा वयमनुष्ठितवन्तस्तत्सर्वं दोषकरमङ्गजातं पितरमस्माकं पालकं प्रजापतिमप्येतु प्राप्नोतु । इत्यनेन मन्त्रेण वाग्विसर्गः कर्तव्यः ।

उक्तमन्त्रं प्रशंसति—

प्रजापतिं वै प्रजा अनु प्रजायन्ते प्रजापतिरूनातिरिक्तयोः प्रतिष्ठा नैनानूनं नातिरिक्तं हिनस्ति, इति ।

सर्वाः प्रजाः प्रजापतिमेवानु प्रजायन्ते तस्य स्रष्टृत्वात्तदनुरूपैव सर्वोत्पत्तिः । अतः स्रष्टा प्रजापतिरेव न्यूनातिरिक्तदोषयोः प्रतिष्ठाऽऽश्रयः समाधानहेतुः । तस्मादेतन्मन्त्रपाठेनैनान्यजमानानूनातिरिक्तद्वयदोषो न बाधते ।

वेदनपूर्वकमनुष्ठानं प्रशंसति--

प्रजापतिमेवोनातिरिक्तान्यभ्यत्यर्जन्ति य एवं विद्वांस एतेन वाचं विसृजन्ते, इति ।

मन्त्रेण वाग्विसर्गं कुर्वाणा यजमाना ऊनातिरिक्ताङ्गकृतं दोषमभिलक्ष्य प्रजापतिमेवाभ्यत्यर्जन्ति । अतिशयेन प्राप्नुवन्ति । स एव समादधातीत्यर्थः ।

मन्त्रेण वाग्विसर्गमुपसंहरति--

तस्मादेव विद्वांस एतेनैव वाचं विसृजेरन् ॥ २४ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये पञ्चमः खण्डः ॥५॥ (२४) [१७७] ।

---

चतुर्होतृमन्त्रव्याख्यानार्थमाहावं विधत्ते—

अध्वर्यो इ(र्यवि)त्याह्वयते चतुर्होतृषु वदिष्यमाणस्तदाहावस्य रूपम्, इति ।

चतुर्होतृनामकेषु मन्त्रेषूच्चैरुच्चारणं कर्तुमुद्युक्तो होता हेऽध्वर्यो इ(र्यवि)त्या-

१ ख. 'पंकृतम' ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ह्वानं कुर्यात्। यथा शस्त्रादौ शोंसावोमित्याह्वानं करोति तद्वदत्रापि संबोधनमेवाऽऽहावस्य स्वरूपम्।

चतुर्होतृव्याख्यानकालेऽध्वर्योः प्रतिगरविशेषं विधत्ते—

ओं होतस्तथा होतरित्यध्वर्युः प्रतिगृणात्यवसितेऽवसिते दशसु पदेषु, इति।

हे होतरों त्वदभिलषितमस्तु। हे होतस्तथा क्रियतामित्यध्याहारः। अनेन मन्त्रेणाध्वर्युः प्रतिगरं ब्रूयात्। होतुरुत्साहजनकं प्रतिवचनं प्रतिगरः। वक्ष्यमाणेषु होत्रा प्रयोज्येषु दशसंख्याकेषु पदेषु मध्य एकैकस्मिन्पदेऽवसिते समाप्ते सति तदा तदा पुनः पुनरध्वर्युरों होतरित्यादिमन्त्रेण प्रतिगरं ब्रूयात्। अवसितशब्दस्य वीप्सा प्रतिपदं प्रतिगरप्रयोगार्थम्।

तत्र प्रथमं पदं दर्शयति—

तेषां चित्तिः स्रुगासी३त्, इति।

देवकर्तृके सत्रे प्रजापतिर्गृहपतिरन्ये देवा यजमानास्ते च ग्रन्थान्तरे वक्ष्यन्ते। त एवात्र तेषामिति तच्छब्देन परामृश्यन्ते। तेषां प्रजापतिरूपगृहपतियुक्तानां देवतारमनां यजमानानां मानसे कर्मणि चित्तिः स्रुगासीत्। चिती संज्ञान इति धातोश्चित्तिशब्दनिष्पत्तिः। इदं वस्त्वीदृशमेव न त्वन्यथेति या सम्यग्ज्ञानरूपा मनोवृत्तिः सा चित्तिः। सैवैतेषां होमसाधनभूतजुहूस्थानीयाऽऽसीत्। अमूर्तायाश्चित्तेर्जुहूरूपत्वमाश्चर्यमिति द्योतयितुं प्लुतिः। एवमुत्तरत्रापि द्रष्टव्यम्।

द्वितीयं पदं दर्शयति—

चित्तमाज्यमासी३त्, इति।

पूर्वोक्ताया श्चित्तिरूपाया वृत्तेराधारभूतं यदन्तःकरणं तच्चित्तम्। तदेवात्राऽऽज्यस्थानीयमासीत्।

तृतीयं पदं दर्शयति—

वाग्वेदिरासी३त्, इति।

यद्वागिन्द्रियं तद्वेदिस्थानीयमासीत्।

चतुर्थं पदं दर्शयति—

आधीतं बर्हिरासी३त्, इति।

आ समन्ताद्धीतं मनसा ध्यातं यद्वस्तु तदेव बर्हिःस्थानीयमासीदिति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पञ्चमं पदं दर्शयति--

केतो अग्निरासी३त्, इति ।

कित ज्ञान इति धातुः । चित्तिः सम्यग्ज्ञानम् । केतुर्ज्ञानमात्रमिति विशेषः । स च केतोऽग्निस्थानीयमासीदिति ।

षष्ठं पदं दर्शयति—

विज्ञातमग्नीदासी३त्, इति ।

मनसा विज्ञातं विशेषेण निश्चितं यद्वस्तु तदग्नीत् । आग्नीध्रनामक ऋत्विगासीत् ।

सप्तमं पदं दर्शयति—

प्राणो हविरासी३त्, इति ।

योऽयं प्राणवायुः स हविःस्थानीय आसीत् ।

अष्टमं पदं दर्शयति —

सामाध्वर्युरासी३त्, इति ।

यद्गीयमानं साम तदध्वर्युस्थानीयमासीदिति ।

नवमं पदं दर्शयति—

वाचस्पतिर्होताऽऽसी३त्, इति ।

योऽयं वाचस्पतिर्बृहस्पतिः सोऽयं होतृस्थानीय एवाऽऽसीत् ।

दशमं पदं दर्शयति —

मन उपवक्ताऽऽसीत्, इति ।

यद्यप्येकमेवान्तःकरणं चित्तशब्देन मनःशब्देन चाभिधीयते तथाऽप्यवस्थाविशेषो द्रष्टव्यः । चित्तिकेत्वादिवृत्तिजनकत्वाकारेण चित्तम् । वृत्तिरहितस्वरूपावस्थानाकारेण मनः । तच्चात्रोपवक्ता होतुः समीपस्थो वक्ता मैत्रावरुण आसीत् । एतेषां दशानां पदानामेकैकस्मिन्पदेऽवसिते सत्यध्वर्युर्होतस्तथा होतरिति प्रतिगरं ब्रूयात् । सोऽयं दशपदात्मकश्चतुर्होतृसंज्ञको मन्त्रसंघातः ।

अवग्रहसंज्ञकं मन्त्रं दर्शयति—

ते वा एतं ग्रहमगृह्णन । वाचस्पते विधे नामन् ।

विधेम ते नाम । विधेस्त्वमस्माकं नाम्ना द्यां गच्छ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यां देवाः प्रजापतिगृहपतय ऋद्धिमराध्नुवंस्तामृद्धिं रात्स्यामः, इति ।

तेषामिति पदेनोक्ताः प्रजापतिगृहपतियुक्ता देवरूपा ये यजमानाः सन्ति त एवैतं मानसं ग्रहमगृह्णत । ग्रहणकाले वाचस्पतिं संबोध्य ब्रुवते । हे वाचस्पते बृहस्पते हे विधे जगतो विधातर्हे नामन् । सर्वस्य नमयितः । सर्ववशीकारयुक्तेत्यर्थः । तादृशस्य ते नाम विधेम ख्यातिं करवाम । यद्वा नामान्नं हविर्लक्षणं विधेम संपादयामः । त्वमप्यस्माकं प्रजापतियुक्तानां देवानां विधिः कीर्तिमन्नं च संपादय । तेनास्मद्दत्तेन नाम्ना हविर्लक्षणेनान्नेन कीर्त्या वा युक्तो द्यां स्वर्गं गच्छ । प्रजापतिर्गृहपतिर्येषां देवानां ते प्रजापतिगृहपतयस्तादृशा देवा यामृद्धिमैश्वर्यमराध्नुवंस्तामृद्धिं तादृशमैश्वर्यं वयमपि यजमाना रात्स्याम इत्येष ग्रहमन्त्रस्तमपि होता पठेत् ।

मन्त्रान्तराणि विधत्ते—

अथ प्रजापतेस्तनूरनुद्रवति ब्रह्मोद्यं च, इति ।

चतुर्होतृग्रहमन्त्रपाठानन्तरं होता प्रजापतितनूसंज्ञकान्मन्त्रान्ब्रह्मोद्यसंज्ञकं मन्त्रमनुद्रवति । अनुक्रमेण ब्रूयात् । द्वादशसंख्याकाः प्रजापतितनूसंज्ञका अन्नादा चेति चशब्दान्तानि द्वादश पदानि प्रजापतेस्तन्वः । तत्र द्वे द्वे पदे उपादाय क्रमेण प्रशस्येते ।

तत्र प्रथमं पदयुग्ममाह—

अन्नादा चान्नपत्नी चान्नादा तदग्निरन्नपत्नी तदादित्यः, इति ।

अन्नादादयः प्रजापतेर्मूर्तिविशेषस्य वाचकाः शब्दाः । अन्नादेति यदस्ति तदयमग्निः । अन्नपत्नीति यदस्ति तदसावादित्यः । एतदुभयं प्रजापतितनुरूपम् ।

द्वितीयं युग्ममाह—

भद्रा च कल्याणी च भद्रा तत्सोमः कल्याणी तत्पशवः, इति ।

पूर्ववद्व्याख्येयम् ।

---

१ क. ग. झ. ट. 'न्नाद' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तृतीयं युग्ममाह—

अनिलया चापभया चानिल्या तद्वायुर्न ह्येष कदा च नेलयत्यपभया तन्मृत्युः सर्वं ह्येतस्माद्बीभाय, इति ।

एष वायुः कदाचिदपि नेलयति नहि । इलयतिर्गतिकर्मा । नेलयति न गच्छतीति नहि किंतु सदा गच्छत्येव । अमुमर्थं निलयेति शब्दो ब्रूते । निलयो निवासः स नास्ति यस्या वायुमूर्तेः सेयमनिलया । अपगतं भयं यस्या मृत्युमूर्तेः सेयमपभया । सर्वमपि जगदेतस्मान्मृत्योर्बिभाय भीतिं प्राप्नोति । तादृशो मृत्युः कस्मादस्मादन्यस्माद्भीतिं प्राप्नुयात् । अनेन न्यायेन पूर्वोक्तानामपि मूर्तीनां निरुक्तयो द्रष्टव्याः । अन्नपत्नीत्यत्रान्नादाऽग्निमूर्तिः । अन्नस्य पत्नी पालयित्री सूर्यमूर्तिः । आदित्याज्जायते वृष्टिरिति न्यायेन पालयितृत्वम् । सोममूर्तेः शैत्यहेतुत्वाद्दृष्टिप्रियत्वाच्च भद्रत्वम् । पशुमूर्तेः क्षीरादिप्रदानेन कल्याणत्वमिति तासां निरुक्तयः ।

चतुर्थपदयुग्ममाह—

अनाप्ता चानाप्या चानाप्ता तत्पृथिव्यनाप्या त्तद्द्यौः, इति ।

दूरस्थस्य ग्रामादेः संयोगे सति प्राप्तिरित्युच्यते । पृथिव्यामेवोत्पन्नस्य मनुष्यादेर्दूरवर्तित्वपूर्वकः पृथिवीसंयोगो नास्ति । तस्मादसंयोगपूर्वस्य संयोगस्य प्राप्तिशब्दार्थस्याभावादनाप्ता भूमिः । उपरि दूरदेशवर्तित्वेन प्राप्तुमयोग्यत्वाद्द्यौरनाप्या ।

पञ्चमं युग्ममाह—

अनाधृष्या चाप्रतिधृष्या चानाधृष्या तदग्निरप्रतिधृष्या तदादित्यः इति ।

आगत्य समीपं प्राप्य हस्तस्पर्शेन धर्षितुमभिभवितुमशक्योऽग्निः । आदित्यो यथा न प्रकाशते तथा कंचित्प्रतिबन्धं कृत्वा धर्षि[illegible]भिभवितुमशक्य आदित्यः ।

षष्ठं युग्ममाह—

अपूर्वा चाभ्रातृव्या चापूर्वा तन्मनोऽभ्रातृव्या तत्संव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्सरः, इति ।

न विद्यते पूर्वं प्रथममप्रवृत्तमिन्द्रियं यस्या मनोमूर्तेः सेयमपूर्वा । सर्वमपी-न्द्रियजातं मनसा संकल्पिते विषये पश्चात्प्रवर्तते । अतो नान्यस्य पूर्वप्र-वृत्तिः । संवत्सरः कालात्मा सर्वं जगज्जरयति । न च तं कालं जरयितुं समर्थः कश्चिदन्योऽस्ति । तस्मात्संवत्सरमूर्तिर्भ्रातृव्यरहिता ।

द्वादशपदरूपाः प्रजापतितनूरुपसंहरति—

एता वाव द्वादश प्रजापतेस्तन्व एष कृत्स्नः प्रजा-पतिस्तत्कृत्स्नं प्रजापतिमाप्नोति दशममहः, इति ।

अन्नादेत्यारभ्याभ्रातृव्येत्यन्ता द्वादशसंख्याका मूर्तयो याः प्रोक्ता :एता एव प्रजापतेर्जगन्निर्वाह(हि)कास्तन्वः । एष द्वादशभिस्तनूभिर्युक्तः प्रजापतिः कृत्स्नः संपूर्णः । तथा सत्येतत्पदपाठेन कृत्स्नं प्रजापतिरूपं दशममहः प्राप्नोति ।

ब्रह्मोद्यमन्त्रविधिमनूद्य तन्मत्रस्वरूपं दर्शयति—

अथ ब्रह्मोद्यं वदन्त्यग्निर्गृहपतिरिति हैक आहुः सोऽस्य लोकस्य गृहपतिर्वायुर्गृहपतिरिति हैक आहुः सोऽन्तरिक्षलोकस्य गृहपतिरसौ वै गृह-पतिर्योऽसौ तपत्येष पतिर्ऋतवो गृहाः । येषां वै गृहपतिं देवं विद्वान्गृहपतिर्भवति राध्नोति स गृहपती राध्नुवन्ति ते यजमानाः । येषां वा अपहतपाप्मानं देवं विद्वान्गृहपतिर्भवत्यप स गृहपतिः पाप्मानं हतेऽप ते यजमानाः पाप्मानं घ्नतेऽध्वर्यो अरात्स्मारात्स्म ॥ ॥ २५ ॥ इति ।

अथ द्वादशपदानुद्रवणानन्तरं ब्रह्मोद्यनामकं मन्त्रं वदेयुः । ब्राह्मणाना-मुद्यं संवादो ब्रह्मोद्यम् । अग्निरित्यादिकस्तन्मन्त्रः । एके ब्राह्मणा अग्निर्गृह-पतिः स्वामीत्याहुः । सोऽस्येत्यादिना तन्मतमन्यैर्ब्राह्मणैर्दूष्यते । सोऽग्निरस्य लोकस्य भलोकमात्रस्य गृहपतिर्न तु सर्वलोकस्येति दूषणवादिनामपरितोषः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तच्छ्रुत्वा परे ब्राह्मणा वायुर्गृहपतिरित्याहुस्तदपि मतमन्यैर्ब्राह्मणैर्दूष्यते । स वायुरन्तरिक्षलोकमात्रस्य गृहपतिर्न तु सर्वस्य । योऽसावादित्यस्तपति सोऽसावेव गृहपतिरिति सर्वैरङ्गीकार्यं मतम् । कथं गृहपतित्वमिति तदुच्यते । एष प्रकाशमान आदित्यः पतिस्तेन निष्पाद्या वसन्ताद्यृतवो गृहाः । तस्मादृतुलक्षणानां गृहाणां पतिरित्ययमर्थो नाग्निवाय्वोरस्ति । आदित्ये तु विद्यते । तत्संचारादृतुनिष्पत्तेः । किंच येषामृतूनां गृहरूपाणां स्वामिनमादित्यं देवं गृहपतित्वेन विद्वान्पुरुषः स्वयमपि गृहपतिर्भवति । स च गृहपती राध्नोति सर्वैर्भोगैः समृद्धो भवति । तादृशेन गृहपतिना युक्तास्ते यजमानाः सर्वेऽपि राध्नुवन्ति समृद्धिं प्राप्नुवन्ति । येषामृतुगृहाणां स्वामित्वादादित्यस्य गृहपतित्वं युक्तमित्यर्थः । सत्रे दीक्षिताः सर्वेऽपि यजमानास्तेषु मुख्यो गृहपतिरिति विवेकः । किंच येषामृतूनां स्वामिनमादित्यदेवमपहतपाप्मानं सर्वपापरहितं विद्वान्पुरुषः स्वयं गृहपतिर्भवति । स गृहपतिः पाप्मानमपहते । ये त्वन्ये यजमानास्तेऽपि पाप्मानमपघ्नते । तादृशामृतूनां स्वामिनो गृहपतित्वं युक्तम् । हेऽध्वर्यो वयमरात्स्म समृद्धा अभूम । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुर्विंशाध्याये षष्ठः खण्डः ॥ ६ ॥ (२५) [ १७८ ]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये चतुर्विंशोऽध्यायः ॥ २४ ॥

---

अथ पञ्चविंशोऽध्यायः ।

---

दशममहर्विवाक्यमभिधाय द्वादशाहः समापितः । अथाग्निहोत्रमभिधीयते । तत्राध्वर्युं प्रति यजमानोऽग्न्युद्धरणकर्तव्यतां ब्रूयात् । तदाहाऽऽपस्तम्बः—'उद्धरेत्येव सायमाह यजमान उद्धरेति प्रातः' इति । तत्र[1] सायंकालीनं यजमानकर्तव्यं विधत्ते—

**उद्धराऽऽहवनीयमित्यपराह्ण आह यदेवाह्ना साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्ते, इति ।**

---

१ ख. °त्र तत्र सा° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अग्निहोत्रस्याध्वर्युरेक एव ऋत्विग्भवति। तथा च शाखान्तरे श्रूयते—'तस्मादग्निहोत्रस्य क्रतोरेक ऋत्विक्' इति। तमध्वर्युं यजमानः प्रेष्यति। हेऽध्वर्यो, आहवनीयाख्यं वह्निमुद्धरेति। ज्वलन्तमग्निं गार्हपत्यादुद्धृत्य प्राञ्चं प्रणीयाऽऽहवनीयस्थाने निधेहीत्यर्थः। तथा चाऽऽश्वलायन आह—'गार्हपत्यादाहवनीयं ज्वलन्तमुद्धरेत्' इति। उद्धराऽऽहवनीयमित्यमुं प्रैषमपराह्णे सायंकाले सूर्यास्तमयात्प्राग्यजमानो ब्रूयात्। एवं सत्यह्ना सर्वेणापि यदेव पुण्यं यजमानः करोति तत्सर्वं प्राङुद्धृत्य भयरहित आहवनीयस्थाने निहितवान्भवति।

प्रातःकालीनं यजमानकर्तव्यं विधत्ते—

उद्धराऽऽहवनीयमिति प्रातराह यदेव रात्र्या साधु करोति तदेव तत्प्राङुद्धृत्य तदभये निधत्ते, इति।

पूर्ववद्व्याख्येयम्।

आहवनीयोद्धरणं प्रशंसति—

यज्ञो वा आहवनीयः स्वर्गो लोक आहवनीयः, इति।

आहवनीयस्य यज्ञनिष्पादनेन स्वर्गहेतुत्वादुभयरूपत्वम्।

वेदनं प्रशंसति—

यज्ञ एव तत्स्वर्गे लोके स्वर्गं लोकं निधत्ते य एवं वेद, इति।

आहवनीयोद्धरणस्य वेदिता स्वर्गसाधनयज्ञात्मके स्थाने स्वर्गं लोकं स्थापितवान्भवति।

अथाग्निहोत्रहोमद्रव्यं क्षीरादिरूपं प्रशंसितुमुपक्रमते—

यो वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रतिष्ठितं वेद वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन राध्नोति, इति।

यः पुमानग्निहोत्रशब्देन कर्मवाचिनोपलक्षितहोमद्रव्यं वेद स पुमानग्निहोत्रकर्मणा राध्नोति समृद्धो भवति। कीदृशमग्निहोत्रद्रव्यं वैश्वदेवं वक्ष्यमाणा रुद्रादयो विश्वे देवास्तेषां संबन्धि। षोळशकलं षोडशावस्थम्। ते चावस्था-

१ क. झ. ट. °दुद्धरत्यप्रा°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विशेषा रौद्रं गवीत्यादिना वक्ष्यन्ते । गवि स्थितत्वादेव पशुवत्प्रतिष्ठितमग्निहोत्रेणेत्यत्रापि विशेषणत्रयं द्रव्यद्वारा योजनीयम् ।

होमद्रव्यस्य बहुदेवतासंबन्धं षोडशावस्थोपेतत्वं च दर्शयति—

रौद्रं गवि सद्वायव्यमुपावसृष्टमाश्विनं दुह्यमानं सौम्यं दुग्धं वारुणमधिश्रितं पौष्णं समुदयन्तं मारुतं विष्यन्दमानं वैश्वदेवं बिन्दुमन्मैत्रं शरोगृहीतं द्यावापृथिवीयमुद्वासितं सावित्रं प्रक्रान्तं वैष्णवं ह्रियमाणं बार्हस्पत्यमुपसन्नमग्नेः पूर्वाऽऽहुतिः प्रजापतेरुत्तरैन्द्रं हुतम्, इति ।

होमद्रव्यं क्षीरं गवि सद्गोशरीरे यदा तिष्ठति तदा रौद्रं रुद्रदेवताकं वेदितव्यम् । उपावसृष्टं वत्सेन संसृष्टं प्रस्नुतं यदा भवति तदा वायुदेवताकम् । दुह्यमानत्वदशायामश्विदेवताकम् । दुग्धत्वदशायां सोमदेवताकम् । अधिश्रितं पाकार्थमग्नौ स्थापितं वरुणदेवताकम् । समुदयन्तं पात्रमध्ये स्थित्वा संतापवशेन सम्यगूर्ध्वदशायां पूषदेवताकम् । विष्यन्दमानमूर्ध्वमुद्गतस्य पात्राद्बहिर्विशेषेण स्यन्दनदशापन्नं मरुद्देवताकम् । बिन्दुमद्बुद्बुदवद्विश्वेषां देवानां संबन्धि । शरोगृहीतं सारप्रचयभावापन्नं मित्रदेवताकम् । उद्वासितमग्निस्थानाद्बहिरवस्थापितं द्यावापृथिवीदेवताकम् । प्रक्रान्तं होतुं हरणायोपक्रान्तं सवितृदेवताकम् । ह्रियमाणं होमस्थाने नीयमानं विष्णुदेवताकम् । उपसन्नं नीत्वा वेद्यामासादितं बृहस्पतिदेवताकम् । तेन द्रव्येण या पूर्वाऽऽहुतिः साऽग्निसंबन्धिनी । उत्तराऽऽहुतिस्तु प्रजापतिसंबन्धिनी । हुतं होमोत्तरकालीनमिन्द्रदेवताकम् । एवं हविषः षोडशावस्थास्तत्तद्देवतासंबन्धाश्च दर्शिताः ।

तत्सर्वमुपसंहरति—

एतद्वा अग्निहोत्रं वैश्वदेवं षोळशकलं पशुषु प्रतिष्ठितम्, इति ।

अग्निहोत्रं तदर्थं क्षीरम् ।

तद्वेदनं प्रशंसति—

वैश्वदेवेनाग्निहोत्रेण षोळशकलेन पशुषु प्रतिष्ठितेन



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



राध्नोति य एवं वेद ॥ २६ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२६) [१७२]।

---

अथाग्निहोत्रे वैकल्यनिमित्तं प्रश्नपूर्वकं प्रायश्चित्तं विधीयते—

यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत, इति ।

अग्निहोत्रार्थं संपादिता गौरग्निहोत्री । सा चोपावसृष्टा दोहनार्थं वत्सेन संयोजिता । ऊर्ध्वं दुह्यमाना सती दोहनमध्ये यद्युपविशेत्तदानीं शास्त्रीयस्य दोहनस्य विनष्टत्वाद्यस्य यजमानस्य तत्राग्निहोत्र्युपवेशने प्रायश्चित्तिरपेक्षिता सा च कीदृशीति प्रश्नः । तामग्निहोत्रीं वक्ष्यमाणेन मन्त्रेणाभिमन्त्रयेतेति प्रायश्चित्तविधिः ।

तत्र मन्त्रं दर्शयति—

यस्माद्भीषा निषीदसि ततो नो अभयं कृधि । पशून्नः सर्वान्गोपाय नमो रुद्राय मीढुष इति, इति ।

हेऽग्निहोत्रि त्वं यस्माद्विरोधिनः शङ्क्यमानान्मनसा स्मर्यमाणाद्व्याघ्रादेर्भीभयेन निषीदस्युपविशसि ततो भयहेतोः सकाशान्नोऽस्माकमभयं कृधि कुरु तथा नोऽस्माकं सर्वान्पशूनगोपाय रक्ष । मीढुषे सेचनसमर्थाय रुद्राय पशुस्वामिने नमोऽस्तु । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

अभिमन्त्रणादूर्ध्वं तस्या अग्निहोत्र्या मन्त्रान्तरेणोत्थापनं विधत्ते—

तामुत्थापयेत्, इति ।

तस्मिन्नुत्थापने मन्त्रमाह—

उदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्राय कृण्वती भागं मित्राय वरुणाय चेति, इति ।

अदितिरदीना देवी देवतारूपाऽग्निहोत्र्युदस्थादुत्थितवत्युत्थाय च यज्ञपतौ यजमान आयुरधात्संपादितवती । कीदृश्यग्निहोत्री । इन्द्रमित्रवरुणानामपेक्षितं हविर्भागं कृण्वती संपादयन्ती । इतिशब्दो मन्त्रसमाप्त्यर्थः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उत्थापनानन्तरकर्तव्यं दर्शयति—

**अथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्मणाय दद्यात्सा तत्र प्रायश्चित्तिः, इति ।**

अस्या अग्निहोत्र्या ऊधसि उदकपात्रग्रहणं नाम जलस्योत्क्षेपणम् । मुखे गृहीत्वा जलं पाययित्वा तादृश्या ब्राह्मणाय दानं यदस्ति सा तत्र वैकल्ये प्रायश्चित्तिरवगन्तव्या ।

अथ दोहनकाले ध्वनिकरणे प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमानस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूया इति सा तत्र प्रायश्चित्तिः, इति ।**

वाश्येत हम्भारवं कुर्वीत तदानीमेवाग्निहोत्री स्वकीयामशनायां क्षुधां यजमानस्य प्रतिख्याय प्रख्यापनार्थं वाश्यते ध्वनिं करोति । तस्मात्तामग्निहोत्रीं वाश्यमानामन्नमप्यादयेत् । अपिशब्दात्तृणादिकमपि । तच्च भक्षणं क्षुधाशान्त्यै संपद्यते । अन्नं शान्तिहेतुरिति प्रसिद्धम् । सूयवसादित्यादि मन्त्रः । हेऽग्निहोत्रि भगवती पूज्या त्वं सूयवसाद्भूयाः । सुष्ठु यवसं तृणं सूयवसम् । तदत्ति भक्षयतीति सूयवसात् । तादृशी भवेति मन्त्रार्थः । मन्त्रेणान्नमादयेदिति यदस्ति सैव तत्र ध्वनौ प्रायश्चित्तिर्द्रष्टव्या ।

दो(दु)ह्यमानस्य क्षीरस्याग्निहोत्र्याः स्थानचलनेन भूमौ पतने प्रायश्चित्तं विधत्ते—

**यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेत्, इति ।**

स्पन्देत किंचिच्चलेत् । सा चलन्ती यदि तत्र भूमौ स्कन्दयेदीषत्क्षीरं पातयेत्तत्क्षीरं हस्तेन स्पृष्ट्वा मन्त्रं जपेत् ।

तं मन्त्रं दर्शयति—

**यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः ।**

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति, इति।

अथेदानीं यद्दुग्धं क्षीरं पृथिवीमसृप्त प्राप्नोत्। यच्चौषधीः पतितं तृणजातमत्यसृपदतिशयेन प्राप्नोत्। यदपि तत्क्षीरं बिन्दुरूपमापो भूमिष्ठं जलं प्राप्नोत्। आप इति द्वितीयार्थे प्रथमा। तत्सर्वमस्मदीयेषु गृहेष्वघ्न्यायामस्मदीयायां धेन्वां वत्सेष्वस्मदीयेषु मयि मदुदरे वाऽस्तु तिष्ठतु। पृथगन्वयार्थं पयःशब्दावृत्तिः। इतिशब्दो मन्त्रसमाप्त्यर्थः।

उक्तप्रायश्चित्तादूर्ध्वं होमं विधत्ते—

तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्यात्, इति।

तत्र दोहनपात्रे यत्क्षीरं भूमौ पतित्वा परिशिष्टं स्यात्तद्यदि होमायालं पर्याप्तं भवेत्तदानीं तेन जुहुयात्।

अपर्याप्तावुपायान्तरमाह—

यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः, इति।

यद्यु वै यदि च सर्वं दुह्यमानं क्षीरं सिक्तं भूमौ पतितं स्यात्तदानीमन्यां कांचिद्गामाहूयाऽऽनीय तां दुग्ध्वा तदीयेन क्षीरेण जुहुयात्। यद्यन्याऽपि न लभेत तदानीमप्यग्निहोत्रं न परित्याज्यम्। किंत्वा श्रद्धायै होतव्यम्। आङोऽत्राभिविधिरर्थः। आ श्रद्धायाः श्रद्धासहितं सर्ववस्तुजातं होतव्यं होमयोग्यम्। अयमर्थः। दधियवाग्वादीनां मध्ये येन केनापि द्रव्येण होतव्यम्। सर्वालाभे त्वन्ततः श्रद्धामपि जुहुयात्। अहं श्रद्धां जुहोमीति संकल्पः श्रद्धाहोमः। अग्निहोत्रस्य नित्यत्वात्सर्वात्मना परित्यागो न युक्त इति।

वेदनपूर्वकमनुष्ठानं प्रशंसति—

सर्वं वा अस्य बर्हिष्यं सर्वं परिगृहीतं य एवं विद्वानग्निहोत्रं जुहोति ॥ २७ ॥ इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विदित्वाऽनुष्ठातुरस्य पुरुषस्य सर्वमपि द्रव्यं बर्हिष्यं यज्ञयोग्यम् । अतः सर्वं द्रव्यमनेन होमार्थं परिगृहीतं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये द्वितीयः खण्डः ॥२॥ (२७) [१८०]।

---

यथा श्रद्धाहोमः पूर्वमुक्तस्तथा भावनारूपो होमोऽग्निहोत्रप्रशंसार्थमेव प्रदर्श्यते—

असौ वा अस्याऽऽदित्यो यूपः पृथिवी वेदिरोषधयो बर्हिर्वनस्पतय इध्मा आपः प्रोक्षण्यो दिशः परिधयः, इति ।

अस्य भावनारूपं यज्ञं कुर्वतः पुरुषस्यासौ वा आदित्यो यूपस्थानीयः । पृथिवी वेदिस्थानीया। ओषधयो बर्हिस्थानीयाः। वनस्पतय इध्मस्थानीयाः। भूमौ विद्यमाना आपः सर्वा अपि संस्कृतप्रोक्षणीस्थानीयाः । प्राच्यादिदिशः परिधिस्थानीयाः । ईदृशी भावनैवाग्निहोत्रहोमः । इतरसंपत्त्यभावेऽप्येतादृशो वा होमः कर्तव्यः ।

ईदृग्भावनायां फलं दर्शयति —

यद्ध वा अस्य किंच नश्यति यन्म्रियते यदपाजन्ति सर्वं हैवैनं तदमुष्मिँल्लोके यथा बर्हिषि दत्तमागच्छेदेवमागच्छति य एवं विद्वानग्निहोत्रं जुहोति, इति ।

यः पुमानादित्यो यूप इत्यादिकं विद्वान्भावयन्नग्निहोत्रं जुहोत्येनं पुरुषममुष्मिन्स्वर्गे लोके तत्सर्वमागच्छति । किं किमिति तदुच्यते । अस्य पुरुषस्य यद्ध वै किंचास्मिँल्लोके यत्किमपि वस्तु नश्यति यच्च पुत्रादिकं म्रियते यदप्यन्यदपाजन्ति, अपगच्छति स्वस्माद्वियुक्तं भवति तत्सर्वं प्राप्यते । तत्र दृष्टान्तः । यथा बर्हिषि यज्ञे दत्तं वस्तु स्वर्गे यजमानमागच्छेदेवं नष्टं मृतमपगतं च सर्वमागच्छति । योऽयं श्रद्धाहोमः पूर्वमुक्तस्तस्यैव पुनरपि यूपवेद्यादिभावनारूपमनुष्ठानमुक्तम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदानीं भावनारूपां दक्षिणामाह—

उभयान्वा एष देवमनुष्यान्विपर्यासं दक्षिणा नयति सर्वं चेदं यदिदं किंच, इति।

एष श्रद्धाहोमस्य कर्ता देवान्मनुष्यांश्चोभयविधान्विपर्यासं विपर्यस्य दक्षिणाः कृत्वा नयति ऋत्विग्भ्यः समर्पयाति। यत्र देवानां दक्षिणारूपत्वं न तत्र मनुष्याणां तद्रूपत्वम्। यत्र तु मनुष्याणां दक्षिणात्वं न तत्र देवाना- मित्येवं विपर्यासः। अनेन विपर्यासेन देवेषु मनुष्येषु च दक्षिणात्वसंकल्पः कर्तव्यः। न केवलं देवमनुष्याणामेव दक्षिणात्वं किं तर्हि यत्किंचेदं जगदस्ति तत्सर्वमिदं श्रद्धाहोमी होमदक्षिणा नयाति। सर्वस्मिञ्जगति दक्षिणेयमिति संकल्पः कर्तव्यः।

मनुष्याणां कुत्र दक्षिणात्वमित्याशङ्क्य तद्दर्शयति—

मनुष्यान्वा एष सायमाहुत्या देवेभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किंच त एते प्रलीना न्यो- कस इव शेरे मनुष्या देवेभ्यो दक्षिणा नीताः, इति।

येयं श्रद्धाहोमे सायमाहुतिस्तयाऽऽहुत्या तदाहुतिनिमित्तं देवेभ्य ऋत्वि- क्स्थानीयेभ्यो मनुष्यान्गोसुवर्णस्थानीयान्दक्षिणाः कृत्वा नयति समर्पयति। न केवलं मनुष्यान्किंतु यत्किंचिदिदं जगदस्ति तत्सर्वं दक्षिणाः कृत्वा समर्पयति। कथं मनुष्याणां रात्रौ दक्षिणात्वमिति तदुच्यते। एते मनुष्या यस्मात्सायं देवे- भ्यो दक्षिणा नीतास्तस्माद्रात्रौ प्रलीनाः स्वस्वव्यापाररहिता न्योकोभ्य(कस) इव निवृत्तमोकः स्थानं गृहरूपं येषां ते न्योकसो मदीयं गृहमित्यभिमानर- हिता एव सन्तः शेरे शेरते सुषुप्तिं गच्छन्तीत्यर्थः। यथर्त्विग्भ्यः समर्पितं गवादिकं दक्षिणाद्रव्यं पराधीनं भवत्येवं रात्रौ मनुष्या देवाधीनत्वात्स्वव्या- पाराक्षमाः। तदिदं पारवश्यं दक्षिणात्वे लिङ्गम्।

अथ देवानां दक्षिणात्वं दर्शयति—

देवान्वा एष प्रातराहुत्या मनुष्येभ्यो दक्षिणा नयति सर्वं चेदं यदिदं किंच त एते विविदाना इवोत्पतन्त्यदोऽहं करि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ष्येऽदोऽहं गमिष्यामीति वदन्तः, इति ।

एष श्रद्धाहोमी प्रातराहुत्या निमित्तभूतया मनुष्येभ्य ऋत्विक्स्थानीयेभ्यो देवान्गवादिद्रव्यस्थानीयान्दक्षिणाः कृत्वा समर्पयति । यत्किंचिदिदं जगदस्ति तदपि सर्वं दक्षिणात्वेन समर्पयति । अतस्त एते देवा दक्षिणारूपेण मनुष्यपारवश्यंगता विंविदाना इवोत्पतन्ति स्वस्वामिभूतानां मनुष्याणामभिप्रायं विशेषेण जानन्त एवोद्योगं कुर्वन्ति । किं कुर्वन्तः । अस्य मनुष्यस्यादः कार्यमहं करिष्य इत्यस्माददो मनुष्यस्य समीपमहं गमिष्यामीति वदन्तः । अहनि देवा मनुष्यैः पूज्यमानास्तत्समीपं गत्वा तदीयमिदमायुरारोग्यादिरूपं कार्यं करिष्याम इति वदन्तो मनुष्याधीना अवतिष्ठन्ते । तदिदं देवानां दक्षिणात्वम् । अथवा त एत इति वाच्यं(क्यं) मनुष्यपरत्वेन योजनीयम् । त एते मनुष्याः प्रातःकाले निद्रापारवश्यं परित्यज्य देवतानुग्रहरूपा दक्षिणा गृहीत्वा विंविदाना इव विशेषेण स्वस्वकार्यं जानन्त एवोत्पतन्ति शयनादुत्तिष्ठन्त्युत्थाय चाहमिदं संध्यावन्दनं करिष्येऽहमिदं राजगृहं गमिष्यामीत्येवं वदन्तो वर्तन्ते । तदेव मनुष्याणां स्वातन्त्र्यं देवतारूपदक्षिणाप्रतिग्रहस्य लिङ्गम् ।

उक्तार्थवेदनपूर्वकमग्निहोत्रानुष्ठानं प्रशंसति—

यावन्तं ह वै सर्वमिदं दत्त्वा लोकं जयति तावन्तं ह लोकं जयति य एवं विद्वानग्निहोत्रं जुहोति, इति ।

इदं सर्वं स्वकीयं धनं दत्त्वा तद्दानफलरूपं यावन्तं लोकं पुरुषः प्राप्नोति तावन्तमेव लोकं श्रद्धाहोमवेदनपूर्वकाग्निहोत्रानुष्ठायी प्राप्नोति ।

तदेवं श्रद्धाहोमादिरूपेणाग्निहोत्रं प्रशस्याथ गवामयनसंपादनेन प्रशंसति—

अग्नये वा एष सायमाहुत्याऽऽश्विनमुपाकरोति तद्वाक्प्रतिगृणाति वाग्वागिति, इति ।

येयमग्निहोत्रस्य सायमाहुतिराग्निर्देवतार्था तयाऽग्निहोत्री गवामयनसंबद्धमाश्विनशस्त्रमुपाकरोति । सायंहोमः शस्त्रोपक्रम इत्यर्थः । अस्याः सायमाहुतेरग्निर्देवता । आश्विनशस्त्रस्याऽऽदावप्यग्निर्होता गृहपतिरिति मन्त्रेऽग्निः श्रुतः । तदिदं सादृश्यम् । तच्चाऽऽहुतिरूपं शस्त्रं वाक्प्रतिगृणाति । यथा शस्त्रस्य प्रतिगर एवमत्र वाक्शब्दः प्रयुज्यते । तथाऽग्निहोत्रो[1]च्चरणमन्त्रे वाचा त्वा होत्रेति

१ ख. वाचैत्वा । ट. वाक्च त्वा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाक्शब्दः प्रयुज्यते । तदिदं प्रतिगरसदृशम् । वाग्वागिति वीप्सा प्रयोगबाहुल्यापेक्षा । गवामयनस्य प्रायणीयमहरतिरात्रसंस्थम् । अतिरात्रे चाऽऽश्विनं शस्त्रं शस्यते तेन सायंहोमस्य गवामयनप्रारम्भसादृश्यं प्रतिपादितं भवति ।

उक्तार्थवेदनपूर्वकमनुष्ठानं प्रशंसति—

अग्निना हास्य रात्र्याश्विनं शस्तं भवति य एवं विद्वानग्निहोत्रं जुहोति, इति ।

अस्य विदित्वाऽनुष्ठातुः सायमाहुतिदेवेनाग्निना रात्रौ विहितमाश्विनं शस्त्रं शस्तं भवति ।

सायमाहुतिं प्रायणीयातिरात्ररूपेण प्रशस्य प्रातराहुतिं गवामयनगतमहाव्रतरूपेण प्रशंसति—

आदित्याय वा एष प्रातराहुत्या महाव्रतमुपाकरोति तत्प्राणः प्रतिगृणात्यन्नमन्नमिति, इति ।

आदित्यार्थं हूयमाना येयं प्रातराहुतिस्तयैषोऽग्निहोत्री महाव्रताख्यं गवामयनस्योपान्तिममहः प्रारभते । तदिदासेत्यादित्यदेवताकेन मन्त्रेण तस्मिन्नहनि निष्केवल्यशस्त्रप्रारम्भात् । तच्चाऽऽहुतिरूपं शस्त्रं प्राणः प्रतिगृणाति कथमेतदिति तदुच्यते । अन्नं पयो रेतोऽस्मासुत्वित्यग्निहोत्रभक्षणमन्त्रः । तेनान्नमिति प्रतिगृणातीत्युच्यते । अन्नं च प्राणत्वेन संस्तुतम् । अन्नं प्राणमन्नमपानमिति श्रुतेः । अन्नमन्नमिति वीप्सा प्रयोगबाहुल्यापेक्षा । तस्मादस्ति महाव्रतस्य प्रातराहुतिगतादित्यसंबन्धः ।

उक्तार्थवेदनपूर्वकमनुष्ठानं प्रशंसति —

आदित्येन हास्याह्ना महाव्रतं शस्तं भवति य एवं विद्वानग्निहोत्रं जुहोति, इति ।

पूर्ववद्व्याख्येयम् ।

प्रकारान्तरेण गवामयनसाम्यं संपाद्य प्रशंसति—

तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि विंशतिश्च संवत्सरे सायमाहुतयः सप्त चो एव शतानि विंशतिश्च संवत्सरे प्रातराहुतयस्ताव-

१ झ. °पं प्रा° । २ क. झ. °होत्रे भ° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्योऽग्नेर्यजुष्मत्य इष्टकाः, इति ।

एकैकस्यां रात्रौ द्वे द्वे आहुती । तथा सति षष्ट्यधिकशतत्रयसंख्याकासु संवत्सरस्य रात्रिषु तत्संख्याद्वैगुण्येन विंशत्यधिकसप्तशतसंख्याकाः सायमाहुतयः संपद्यन्ते । प्रातराहुतयोऽपि संवत्सरस्यैतावत्य एव । सप्त चो इत्युकारो निपातो वाक्योपन्यासार्थः । मिलित्वा सर्वाहुतीनां चत्वारिंशदधिकेन शतचतुष्टयेन युक्ता सहस्रसंख्या संपद्यते । गवामयने चित्यस्याग्नेर्यजुष्मत्यो मन्त्रयुक्ता इष्टका अपि तावत्यः । अतोऽग्निहोत्रस्येष्टकासंख्याद्वारा गवामयनसादृश्यम् ।

एतद्वेदनपूर्वकमनुष्ठानं प्रशंसति—

संवत्सरेण हास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति ॥ २८ ॥ इति ।

त(अ)स्य विदित्वाऽनुष्ठातुः संवत्सरसत्रेण चित्याग्नियुक्तेनेष्टं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये तृतीयः खण्डः ॥३॥ (२८) [१८१] ।

---

अथानुदितहोमनिन्दोदितहोमस्तुतिश्च प्रारभ्यते—

वृषशुष्मो ह वातावत उवाच जातूकर्ण्यो वक्तास्मो वा इदं देवेभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति, इति ।

वतावन्नाम्नो महर्षेरपत्यं वातावतो जतूकर्णस्य पौत्रो जातूकर्ण्यः । स च वृषशुष्मो वृषभस्येव शुष्मो बलं यस्य महर्षेः सोऽयं वृषशुष्मः । तादृशो महर्षिः कदाचिदग्निहोत्रिणामग्रे प्रसङ्गादिदमुवाच । हेऽग्निहोत्रिणो भवदीयमिदमाचरणं देवेभ्यो वक्तास्मो वयं वक्ष्यामः । किं तदाचरणमिति तदुच्यते । एतदग्निहोत्रं पुरातनैर्महर्षिभिरुभयेद्युरहूयत दिनद्वये हुतमासीत् । पूर्वदिनस्य रात्रावग्निमुद्दिश्य होमः परदिनस्य प्रातः सूर्यमुद्दिश्य होम इत्येवं दिनद्वयानुष्ठानं पूर्वैः कृतम् । तदुल्लङ्घ्येदानीमेतदग्निहोत्रं मनुष्यैरन्येद्युरन्यतरस्मिन्नेव दिवसे हूयतेऽस्तमयादूर्ध्वमग्नये होमः पुनरपि सूर्योदयात्प्रागेव सूर्याय होम इत्येवमेकस्यामेव रात्रौ होमद्वयमनुचितं क्रियत इत्येतदाचरणं शास्त्रविरुद्धं देवतानामग्रे कथयिष्यामीति वृद्धस्य महर्षेर्वाक्यम् ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अस्मिन्नेवार्थे कुमारीवाक्यमप्युदाहरति—

एतद्ध हैवोवाच कुमारी गन्धर्वगृहीता वक्तास्मो वा इदं पितृभ्यो यद्वैतदग्निहोत्रमुभयेद्युरहूयतान्येद्युर्वाव तदेतर्हि हूयत इति, इति।

ऋषेः पुत्री काचिद्बाला तद्गृहस्वामिना गन्धर्वेण कदाचिद्गृहीता सती प्रसङ्गादेतदेव वाक्यमग्निहोत्रिणामग्र उवाच। वक्तास्म इत्यादिकमेतद्वाक्यम्। पितृभ्य इत्येतावानेव विशेषः।

ऋषेः कुमार्याश्च वाक्यतात्पर्यं दर्शयति—

एतद्वा अग्निहोत्रमन्येद्युर्हूयते यदस्तमिते सायं जुहोत्यनुदिते प्रातरथैतदग्निहोत्रमुभयेद्युर्हूयते यदस्तमिते सायं जुहोत्युदिते प्रातः, इति।

इदानींतनो यदग्निहोत्रं सूर्येऽस्तमिते सायं जुहोति पुनः सूर्येऽनुदित एवं (व) सति प्रातर्जुहोत्येतदेवाग्निहोत्रहोमद्वयमन्येद्युस्त्वेकस्मिन्नेव दिने हूयते। रात्रिमध्य एव द्विविधहोमनिष्पत्तेः। अथैतद्वैपरीत्येन पुरातनानां शास्त्रज्ञानां यदग्निहोत्रं सूर्येऽस्तमितेऽध्वर्युः सायं जुहोति परेद्युः प्रातरुदिते सूर्ये पश्चाज्जुहोत्येतदग्निहोत्रमुभयेद्युर्दिनद्वय एव हूयते।

एवमिदानींतनानामेकदिनानुष्ठानरूपां निन्दां पुरातनानां दिनद्वयानुष्ठानरूपां स्तुतिं च प्रदर्श्योदिते होमं प्रातःकाले विधत्ते—

तस्मादुदिते होतव्यम्, इति।

प्रकारान्तरेणोदितहोमं प्रशंसति—

चतुर्विंशो ह वै संवत्सरेऽनुदितहोमी गायत्रीलोकमाप्नोति द्वादश उदितहोमी स यदा द्वौ संवत्सरावनुदिते जुहोत्यथ हास्यैको हुतो भवत्यथ य उदिते जुहोति संवत्सरेणैव संवत्सरमाप्नोति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्, इति।

यः पुरुषोऽनभिज्ञ इदानींतनोऽनुदितहोमी स पुरुषश्चतुर्विंशतिसंख्यापूरके संवत्सरे गायत्रीदेवताया लोकं प्राप्नोति। तावद्भिः संवत्सरैर्गायत्र्यक्षरसंख्या

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



निष्पत्तेः । उदितहोमी तु द्वादशसंख्यापूरक एव संवत्सरे तं गायत्रीलोकं प्राप्नोति । तावतैवोक्तसंख्यानिष्पत्तेः । कथमेतदिति तदुच्यते । सोऽनुदितहोमी यदा द्वौ संवत्सरावनुदिते सूर्ये प्रातर्जुहोत्यथ तदानीं तस्यानुदितहोमिन एक एव संवत्सरो हुतो भवति । अस्तमयादूर्ध्वं पुनरुदयात्पूर्वं च कालैक्येन होमद्वयनिष्पत्त्यभावात् । अथ तद्वैलक्षण्येन यः शास्त्राभिज्ञ उदयादूर्ध्वं प्रातर्जुहोति तस्य कालद्वयानुष्ठानसिद्धेः संवत्सरद्वयमितरेणानुष्ठितं फलमेकेनैव संवत्सरेणास्य सिध्यति । तस्माद्द्वादशे संवत्सरे द्विगुणसंख्यया गायत्रीलोकप्राप्तिरुपपद्यते । संवत्सरेणेत्यादिकं वाक्यं विद्वत्प्रशंसार्थं पुनरप्यावर्तनीयम् । यो विद्वाञ्जुहोति स कालद्वयानुष्ठानात्संवत्सरमात्रेण संवत्सरद्वयफलं लभते । तस्मादुदिते सूर्ये सति पश्चादेव होतव्यम् ।

पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति—

एष ह वा अहोरात्रयोस्तेजसि जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातरग्निना वै तेजसा रात्रिस्तेजस्वत्यादित्येन तेजसाऽहस्तेजस्वत्, इति ।

यः सायंप्रातर्होमौ कालभेदेन जुहोत्येष पुमानहोरात्रयोः संबन्धिनि विविधे तेजसि जुहोति । कथमेतदिति तदुच्यते । येयं रात्रिः सेयमग्निनैव तेजसा युक्ता सती तेजस्विनी भवति । यदिदमहस्तदेतदादित्येन तेजसा तेजस्वद्भवति । तस्मात्सायंप्रातःकालद्वये जुह्वतस्तेजोद्वये होमसिद्धिः ।

वेदनपूर्वकमनुष्ठानं होमं [च] प्रशंसति—

अहोरात्रयोर्हास्य तेजसि हुतं भवति य एवं विद्वानुदिते जुहोति, इति ।

उपपादितमर्थं निगमयति—

तस्मादुदिते होतव्यम् ॥ २९ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (२९) [१८२] ।

---

दृष्टान्तपूर्वकमुदितहोमं पुनः प्रशंसति—

एते ह वै संवत्सरस्य चक्रे यदहोरात्रे ताभ्यामेव

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्संवत्सरमेति स योऽनुदिते जुहोति यथैकतश्च-
क्रेण यायात्तादृक्तदथ य उदिते जुहोति यथोभयत-
श्चक्रेण यान्क्षिप्रमध्वानं समश्नुवीत तादृक्तत्, इति ।

ये एवाहोरात्रे विद्येते एते एव रथस्थानीयस्य संवत्सरस्य चक्रस्थानीये। एवं सति स पुरुषो लौकिकस्ताभ्यामेवाहोत्रचक्राभ्यां संवत्सररथं प्राप्नोति। एवमहोरात्रयोः संवत्सरप्राप्तिसाधनत्वे स्थिते सति यः पुमानुदयात्प्रागेव प्रातर्जुहोति । तस्य दृष्टान्तोऽभिधीयते । यथा लोके रथस्यैकत एकस्मिन्नेव पार्श्वे स्थितेन चक्रेण यायान्मार्गं गच्छेत्तादृक्तदनुष्ठानं स्यात् । एकं चक्रं यथा गमनक्षमं न भवति तथैवानुदितहोमः। एककालमात्रवर्तित्वादित्यर्थः। अथोक्तवैलक्षण्येन यः पुमानुदिते जुहोति तस्य दृष्टान्तोऽभिधीयते । यथा पार्श्वद्वये चक्रयुक्तेन रथेन यान्गच्छन्पुरुषः क्षिप्रं शीघ्रं मार्गं प्राप्नोति तादृक्तत्कालद्वयानुष्ठानमविघ्नेन फलप्रदमित्यर्थः ।

उक्तार्थदार्ढ्याय गाथामुदाहरति—

तदेषाऽभि यज्ञगाथा गीयते, इति ।

तत्तस्मिन्कालद्वयहोमविषये काचिद्यज्ञप्रतिपादिका गाथा सर्वैरभितो गीयते। सुभाषितत्वेन सर्वैर्गीयमाना गाथा ।

तां गाथामुदाहरति—

बृहद्रथंतराभ्यामिदमेति युक्तं यद्भूतं भविष्यच्चापि
सर्वम् । ताभ्यामियादग्नीनाधाय धीरो दिवैवान्य-
ज्जुहुयान्नक्तमन्यादिति, इति ।

यद्भूतं जगदस्ति यच्च भविष्यदिदं सर्वमपि बृहद्रथंतराभ्यां सामभ्यां युक्तं सदेति प्रवर्तते । तस्माद्धीरो बुद्धिमानग्नीनाधाय पश्चात्ताभ्यां बृहद्रथंतराभ्यां पृष्ठस्तोत्रनिष्पादकाभ्यामियात्सोमयागमनुतिष्ठेत्। प्रतिदिनं च दिवैव सूर्यदेवता[क]मन्यदग्निहोत्रं जुहुयात् । नक्तं रात्रावन्यदग्निदेवताकमग्निहोत्रं जुहुयात्। इतिशब्दो गाथासमाप्त्यर्थः ।

दिवाहोमं रात्रिहोमं च बृहद्रथंतरसंबन्धेन प्रशंसन्नुदितहोमं निगमयति—

राथंतरी वै रात्र्यहर्बार्हतमग्निर्वै रथंतरमादित्यो

१ क. ख. झ. ट. °ति य ए° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



बृहद्रथंतरे ह वा एनं देवते ब्रध्नस्य विष्टपं स्वर्गं लोकं गमयतो य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्, इति ।

सर्वस्य जगतो बृहद्रथंतराधीनत्वादहोरात्रयोरपि तत्संबन्धोऽस्ति । तत्र रात्री रथंतरसामसंबन्धिनी । अहस्तु बृहत्सामसंबन्धि । तयोः कालयोरभिमानिन्यौ ये उभे देवते अग्न्यादित्यरूपे तयो रथंतरबृहद्रूपत्वं तत्सामाभिमानित्वादवगन्तव्यम् । एवं सति यः पुमाञ्शास्त्ररहस्यं विद्वान्सायमग्निहोत्रं हुत्वा पश्चात्प्रातरुदिते जुहोत्येवमुदितहोमिनं बृहद्रथंतराभिमानिन्यौ देवते ब्रध्नस्याऽऽदित्यस्य विष्टपं स्थानं स्वर्गं लोकं प्रापयतः । तस्मात्कारणात्प्रातरुदिते होतव्यम् ।

उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथामुदाहरति—

तदेषाऽभि यज्ञगाथा गीयते, इति ।

तत्तस्मिन्ननुदितहोमनिन्दारूपेऽर्थे एषा वक्ष्यमाणा गाथा याज्ञिकैः सर्वैर्गीयमाना सुभाषितरूपाऽभितः सर्वतो गीयते वक्ष्यते ।

तां गाथामुदाहरति--

यथा ह वाऽस्थूरिणैकेन यायादकृत्वाऽन्यदुपयोजनाय । एवं यन्ति ते बहवो जनासः पुरोदयाज्जुह्वति येऽग्निहोत्रमिति, इति ।

अस्थूरिनामाऽश्वो रथवाजी । यथा लोके कश्चिन्मन्दबुद्धिरुपयोजनाय रथे योजयितुमन्यदकृत्वाऽश्वान्तरमसंपाद्यैकेनैवास्थूरिणाऽश्वेन रथनियुक्तेन यायान्मार्गं गच्छेदेवमेव ये शास्त्ररहस्यानभिज्ञाः सूर्योदयात्पुराऽग्निहोत्रं जुह्वति ते बहवो जनासः पुरुषा यन्ति गच्छन्ति । एकाश्वयुक्तो रथो यथा मार्गपारं नेतुमसमर्थ एवं रात्रिरूपमे(ए)कस्मिन्नेव काले कृतमग्निहोत्रं फलदं न भवतीत्यर्थः । इतिशब्दो गाथासमाप्त्यर्थः ।

उदितहोमोत्कर्षार्थमादित्यदेवतां प्रशंसति—

तां वा एता देवतां प्रयतीं सर्वमिदमनुप्रैति यदिदं किंचैतस्यै हीदं देवताया अनुचरं सर्वं यदिदं किंच सैषाऽनुचरवती देवता, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यत्किंचिदिदं स्थावरजङ्गमरूपं जगदस्ति तदिदं सर्वं तामेतामादित्यदेवतां प्रयतीमुदयास्तमयौ गच्छन्तीमनु पश्चात्प्रैति प्रवर्तते । तथा च शाखान्तरे श्रूयते—'योऽसौ तपन्नुदेति स सर्वेषां भूतानां प्राणानादायोदेति । असौ योऽस्तमेति स सर्वेषां भूतानां प्राणानादायास्तमेति' इति । सूर्योदयमनु सर्वेषामिन्द्रियोदयाद्दिवा सर्वे चेष्टन्ते । सूर्यास्तमयमनु सर्वेषामिन्द्रियास्तमयाद्रात्रौ सर्वे निद्रां कुर्वन्ति । अनेन प्रकारेण यत्किंचिज्जगदस्ति तत्सर्वमेतस्या आदित्यदेवताया अनुचरं भृत्यस्थानीयम् । अतः सैषाऽऽदित्यदेवताऽनुचरवती बहुभृत्योपेता ।

वेदनं प्रशंसति ।

**विन्दते ह वा अनुचरं भवत्यस्यानुचरो य एवं वेद, इति ।**

वेदिता स्वयं धनिको भूत्वा जीवितप्रदानेनानुचरं लभते । अतोऽस्य सर्वदाऽनुचरो भृत्यवर्गो भवत्येव ।

प्रकारान्तरेणाऽऽदित्यदेवतां प्रशंसति—

**स वा एष एकातिथिः स एष जुह्वत्सु वसति, इति ।**

एष आदित्यः स्वयमेकातिथिः । यथा लोके कश्चिद्वैदेशिको बन्धुरहितः स्वयमेक एवातिथिर्भूत्वा गृहेषु गच्छत्येवं स एष आदित्यो जुह्वत्स्वग्निहोत्रिषु प्रातः समागत्य तिष्ठति ।

अस्मिन्नर्थे कांचिद्गाथामुदाहरति—

**तदप्येषा गाथा भवति, इति ।**

यदिदमादित्यस्यैकातिथित्वं तत्तस्मिन्नर्थे काचिद्गाथा सर्वैर्गातुं योग्या गीतिर्विद्यते ।

तां गाथामुदाहरति—

**अनेनसमेनसा सोऽभिशस्तादेनस्वतो वाऽपहरादेनः ।**
**एकातिथिमप सायं रुणद्धि बिसानि स्तेनो अपसो**
**जहारेति, इति ।**

पुरा कदाचित्सप्तर्षीणां संवादप्रसङ्गे कश्चित्पुरुषो बिसस्तैन्यलक्षणमपवादं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्राप्य तत्परिहारार्थमृषीणामग्रे शपथं चकार । तदीयशपथोक्तिरूपेयं गाथा । बिसानि पद्ममूलानि तेषामपहर्ता प्रत्यवायपरम्परां प्राप्नोतु । पापरहिते पुरुषे पापविषयमपवादं कृतवतो यः प्रत्यवायः पापिनः पुरुषस्य संबन्धी पापं स्वीकुर्वतो यः प्रत्यवायः सायंकाले गृहे समागच्छतः एवातिथेर्वैदेशिकस्यापरोधने यः प्रत्यवायः सेयं प्रत्यवायपरम्परा बिसस्तैन्ये सति मम भूयादित्येवं शपथः । अक्षरार्थस्तु—अप्रसिद्धो मादृशः पुरुषः स्तेनश्चोरो भूत्वा बिसान्यपजहार चेत्स पुमाननेनसं पापरहितं पुरुषं श्रोत्रियमेनसाऽभिशस्तात्पापेनाभिशंसनमपवादं कुर्यात् । तथैष स बिसापहारी, एनस्वतः पापयुक्तस्य पुरुषस्य यदेनः पापमस्ति तदपहरेत्स्वी कुर्यात् । तथा स बिसापहारी सायंकाले गृहे समागतमेकातिथिमपरुणद्धि भोजनमदत्त्वा निःसारयेत् । यद्वा । अग्निहोत्रार्थं सायं समागतमेकातिथिं देवमपरुणद्धि होमराहित्येन निराकुर्यात् । इतिशब्दो गाथासमाप्त्यर्थः ।

अस्यां गाथायामेकातिथिमप सायं रुणद्धीत्यस्य भागस्य प्रकृतोपयुक्तत्वाचस्य तात्पर्यं दर्शयति—

एष ह वै स एकातिथिः स एष जुह्वत्सु वसत्येतां वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति तमेषा देवताऽपरुद्धाऽपरुणद्ध्यस्माच्च लोकादमुष्माच्चोभाभ्यां योऽलमग्निहोत्राय सन्नाग्निहोत्रं जुहोति, इति ।

एष दृश्यमान आदित्य एव गाथायामुक्त एकातिथिः । स एष देवः प्रातःकाले समागत्य जुह्वत्स्वग्निहोत्रिषु तिष्ठति । एवं सति यः पुमानग्निहोत्रायालं समर्थः सन्नग्निहोत्रं न जुहोति स पुमानेतामग्निहोत्रहोमार्थमागतां देवतामपरुणद्धि निराकरोति । एषा च देवता तेनापरुद्धा सती तं नास्तिकं भूलोकस्वर्गलोकाभ्यामुभाभ्यामपरुणद्धि निःसारयति । योऽलमित्यादेः पुनरुक्तिरुपसंहारार्था । यो न जुहोति तस्यायं देवताद्रोहः ।

विपक्षे बाधकमुक्त्वा स्वपक्षं दर्शयति—

तस्माद्योऽलमग्निहोत्राय स्याज्जुहुयात्, इति ।

अग्निहोत्रायालमाहिताग्निर्धनेन समर्थो भवेत्सोऽवश्यं जुहुयात् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अग्निहोत्रस्याऽऽवश्यकत्वे दृष्टान्तरूपविवक्षायां स्मार्तं शास्त्रार्थं दर्शयति–

तस्मादाहुर्न सायमतिथिरपरुध्य इति, इति ।

यस्माद्देवस्य मनुष्यस्य चातिथेरपरोधे प्रत्यवायोऽस्ति तस्माच्छास्त्रज्ञा एव-माहुः–सायंकाले समागतोऽतिथिर्नापरुध्यो न निराकरणीय इति । अतो लौकि-कातिथिवद्देवतातिथये होतव्यमित्यर्थः ।

अग्निहोत्रस्याऽऽवश्यककर्तव्यतामुक्त्वा पुनरपि प्रकारान्तरेणोदितहोमं प्रशंसति—

एतद्ध स्म वै तद्विद्वान्नगरी जानश्रुतेय उदितहो-मिनमैकादशाक्षं मानुतन्तव्यमुवाच प्रजायामेनं विज्ञातास्मो यदि विद्वान्वा जुहोत्यविद्वान्वेति तस्यो हैकादशाक्षे राष्ट्रमिव प्रजा बभूव राष्ट्रमिव ह वा अस्य प्रजा भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम् ॥ ३० ॥ इति ।

जनश्रुताख्यस्य कस्यचिन्महर्षेः पुत्रो जानश्रुतेयः । स च राजपुरोहितत्वा-न्नित्यं नगरे वसतीति नगरी । स महर्षिस्तदेतदुदितमाहात्म्यं विद्वान्राजपुत्रं कंचिदुदितहोमिनमुद्दिश्य स्वमनस्येवमुवाच । कीदृशमुदितहोमिनमैकादशा-क्षमेकादशाक्षनामकस्य राज्ञः पुत्रं मानुतन्तव्यं मनुतन्तुनामकस्य राज्ञः पौत्रम् । तमुद्दिश्य मनसि किमुवाचेति तदभिधीयते । अयमैकादशाक्षो राजपुत्रो यदि विद्वाञ्जुहोति यदि वा शास्त्रार्थमविद्वानिति मम संशयो जायते । तथा सति प्रजायामेतदीयपुत्रपौत्रादिसंततौ पर्यालोच्यैतमैकादशाक्षं विज्ञातास्मो विशेषेण ज्ञास्यामः । यदि प्रजा वर्धते तदानीमयं विद्वानन्यथा त्वविद्वानिति निश्चित्य यदा तदीयां प्रजामपश्यत्तदानीं तस्यापि राजपुत्रस्य प्रजा पुत्रपौत्रादिरूपा राष्ट्रमिव बभूव । यथा राष्ट्रं बहुजनाकीर्णं तद्वदतिसमृद्धा प्रजाऽऽसीत् । एका-दशाक्षस्यापत्यमैकादशाक्षिरिकारान्तः शब्दस्तस्य षष्ठ्यामैकादशाक्षेरिति । यः पुमानेवं विद्वान्प्रातरुदिते जुहोत्यस्य राष्ट्रमिव बहुला प्रजा भवति । तस्मा-दुदिते होतव्यमिति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये पञ्चविंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ३० ) [ १८३ ] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकारान्तरेणानुदितहोमनिन्दामुदितहोमप्रशंसां चाऽऽह—

उद्यन्नु खलु वा आदित्य आहवनीयेन रश्मीन्संदधाति स योऽनुदिते जुहोति यथा कुमाराय वा वत्साय वाऽजाताय स्तनं प्रतिदध्यात्तादृक्तदथ य उदिते जुहोति यथा कुमाराय वा वत्साय वा जाताय स्तनं प्रतिदध्यात्तादृक्तत्तमस्मै प्रतिधीयमानमुभयोर्लोकयोरन्नाद्यमनु प्रतिधीयतेऽस्माच्च लोकादमुष्माच्चोभाभ्याम्, इति ।

आदित्यः स्वयमुद्यन्नेव हव्यार्थी सन्नाहवनीयेन सह स्वकीयान्रश्मीन्संदधाति संयोजयति । एवं सति यः पुमान्सूर्योदयात्पूर्वं जुहोति स मूढ इति शेषः । तत्र दृष्टान्तः । यथा लोके कस्मैचिदजातायानुत्पन्नाय स्तनं प्रतिदध्यात्पातुं समर्पयेत्तादृगेव तदुद्रष्टव्यम् । अथ तद्वैलक्षण्येन यः पुमानुदयादूर्ध्वं जुहोति स विवेकी । तत्रायं दृष्टान्तः । उत्पन्नाय स्तनप्रदानं यादृशं भवति तादृगेव तदिति । एवं सति अस्मै सूर्याय प्रतिधीयमानं हविः समर्पयेच्चं(यन्तं) तमग्निहोत्रिणमनु लोकद्वयेऽप्यन्नाद्यं संपद्यते । लोकयोरित्यस्यैव व्याख्यानमस्माच्चेत्यादि । सप्तम्यर्थे पञ्चमी । अस्मिन्नमुष्मिंश्चोभयोर्लोकयोरित्यर्थः ।

पुनरप्यन्येन दृष्टान्तेनानुदितहोमनिन्दामुदितहोमप्रशंसां च दर्शयति—

स योऽनुदिते जुहोति यथा पुरुषाय वा हस्तिने वाऽप्रयते हस्त आदध्यात्तादृक्तदथ य उदिते जुहोति यथा पुरुषाय वा हस्तिने वा प्रयते हस्त आदध्यात्तादृक्तत्तमेष एतेनैव हस्तेनोर्ध्वं हृत्वा स्वर्गे लोक आदधाति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्, इति ।

योऽनुदितहोमी स मूढः । यथा लोके पुरुषस्य हस्तिनो वा ग्रासार्थमप्रयतेऽप्रसारितहस्ते ग्रासं प्रक्षिपेत्तादृगेव तत् । उदितहोमस्तु प्रसारितहस्ते ग्रासप्रक्षेपसमानः । यः पुमान्विदित्वोदितहोमी स्यात्तं पुमांसमेष आदित्य एतेनैव हविःस्वीकारार्थं प्रसारितेन हस्तेनोर्ध्वं हृत्वा नीत्वा स्वर्गे लोके स्थापयति । तस्मादुदयादूर्ध्वं होतव्यम् ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रकारान्तरेणोदितहोमं प्रशंसति—

उद्यन्नु खलु वा आदित्यः सर्वाणि भूतानि प्रणयति तस्मादेनं प्राण इत्याचक्षते प्राणे हास्य संप्रति हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्, इति।

आदित्य स्वयमुद्यन्नेव सर्वप्राणिनः प्रणयति चेष्टयति। तस्मात्प्रणयनं व्युत्पत्त्याऽऽदित्यस्य प्राण इति नाम। एवं सत्युदितहोमी योऽस्ति तस्य प्राणरूप आदित्ये संप्रति सम्यग्द्रव्यं हुतं भवति। तस्मादुदयादूर्ध्वं होतव्यम्।

पुनरपि युक्त्यन्तरेणोदितहोमं प्रशंसति—

एष ह वै सत्यं वदन्सत्ये जुहोति योऽस्तमिते सायं जुहोत्युदिते प्रातर्भूर्भुवः स्वरो३मग्निर्ज्योतिर्ज्योतिरग्निरिति सायं जुहोति भूर्भुवः स्वरो३ सूर्यो ज्योतिर्ज्योतिः सूर्य इति प्रातः सत्यं हास्य वदतः सत्ये हुतं भवति य एवं विद्वानुदिते जुहोति तस्मादुदिते होतव्यम्, इति।

सायंकालीनमग्निहोत्रमस्तमयादूर्ध्वं प्रातःकालीनं च सूर्योदयादूर्ध्वं जुहोति एष पुमान्वाचा सत्यं यथार्थवादिनमेव मन्त्रं ब्रुवन्सत्ये परमार्थे देवे जुहोति कथमिति तदुच्यते। भूर्भुवः स्वरित्यादिकः सायंकालीनो मन्त्रः। तस्यार्थः। भूरादयस्त्रयो लोका मदीयं होममोमङ्गी कुर्वन्तु। योऽग्निर्देवः स ज्योतिर्दीपादिरूपः प्रकाशः। यश्च ज्योतिर्दीपादिरूपः प्रकाशः स एवाग्निस्तस्मै देवाय स्वाहुतमिदमस्त्विति। एवं प्रातःकालीनमन्त्रेऽपि द्रष्टव्यम् भूरादयो लोका मदीयं होमं स्वी कुर्वन्तु। सूर्यो देवः स एव ज्योतिर्दिवसप्रभारूपम्। यच्चेद प्रभारूपं ज्योतिः स एव सूर्यो देवस्तस्मै स्वाहुतमिदमस्तु तत्र यो विद्वानेवं जुहोति तस्य सायंकालीनं ज्योतिरग्निः प्रातःकालीनं ज्योतिः सूर्य इत्येवं सत्यं परमार्थं वदतः पुरुषस्य सत्ये परमार्थरूपेऽग्नौ सूर्ये च हुतं भवति। तस्मात्प्रातरुदयादूर्ध्वं होतव्यम्।

१ ख. ग. 'नेव जु'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


उदितहोमं प्रशस्यानुदितहोमं निन्दितुं गाथामुदाहरति—

तदेषाऽभि यज्ञगाथा गीयते, इति ।

तां गाथामाह—

प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽ-ग्निहोत्रम् । दिवाकीर्त्यमदिवा कीर्तयन्तः सूर्यो ज्योतिर्न तदा ज्योतिरेषामिति ॥ ३१ ॥ इति ।

येऽग्निहोत्रिण उदयात्पूर्वमग्निहोत्रं जुह्वति ते पुरुषा दिवाकीर्त्यमहनि कीर्तनीयं सूर्यमदिवा रात्रौ कीर्तयन्तः प्रातः प्रातः प्रतिदिनं प्रातःकालेऽनृतमसत्यं वदन्ति । कथमसत्यत्वमिति तदुच्यते । सूर्यो ज्योतिरिति हि मन्त्रपाठः । तदानीमुदयात्पुरा तेषामग्निहोत्रिणां सूर्यरूपं ज्योतिर्नास्ति तस्मादसत्यवादिनः । इतिशब्दो गाथासमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये षष्ठः खण्डः ॥ ६ ॥ (३१) [१८४] ।

---

अथाग्निहोत्रमन्त्रप्रसङ्गाद्बुद्धिस्थस्य सर्वप्रायश्चित्तसंपादकस्य व्याहृतित्रयस्य सृष्टिं वक्तुमुपक्रमते—

प्रजापतिरकामयत प्रजायेय भूयान्स्यामिति स तपोऽतप्यत स तपस्तप्त्वेमाँल्लोकानसृजत पृथिवीमन्तरिक्षं दिवं ताँल्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि ज्योतींष्यजायन्ताग्निरेव पृथिव्या अजायत वायुरन्तरिक्षादादित्यो दिवस्तानि ज्योतींष्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त ऋग्वेद एवाग्नेरजायत यजुर्वेदो वायोः सामवेद आदित्यात्तान्वेदानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजायन्त भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरा प्रजापतिरेको भूत्वा प्रजोत्पादनेन बहुविधः स्यामिति कामयित्वा तत्सिद्ध्यर्थं तपः पर्यालोचनमकरोत् । इदं वस्त्वीदृशमिति पर्यालोचनरूपं तपः कृत्वा पर्यालोचितप्रकारेणोत्पद्यतामिति संकल्प्य तेन संकल्पेन लोकत्रयमसृजत । ताँल्लोकान्पुनरप्यभितः पर्यालोचितवान् । किमेषु लोकेषु सारभूतं संपादनीयमिति पर्यालोचनम् । तथा पर्यालोचितेभ्यो लोकेभ्यः प्रजापतिसंकल्पानुसारेणाग्निवाय्वादित्यरूपाणि ज्योतींष्यजायन्त । तत्रापि सारं पर्यालोच्य त्रिभ्यो ज्योतिर्भ्यो वेदत्रयमुत्पादितवान् । तेभ्यश्च वेदेभ्यो व्याहृतित्रयरूपाणि शुक्राणि ज्योतींषि पापाख्यतमोनिवारणसमर्थान्यजायन्त ।

एवं व्याहृतित्रयस्योत्पत्तिमुक्त्वा प्रणवस्योत्पत्तिमाह—

तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेत*दोमिति तस्मादोमिति प्रणौत्योमिति वै स्वर्गो लोक ओमित्यसौ योऽसौ तपति, इति ।

तानि शुक्राणि व्याहृतित्रयरूपाणि ज्योतींषि सारोत्पादनाय पर्यालोचितवान् । तेभ्यः पर्यालोचितेभ्यः प्रजापतिसंकल्पाद्वर्णत्रयमजायत । तच्च त्रयमेकधा संयोजितवान् । तदेतदेकीभूतं वर्णत्रयमोमित्येवं संपन्नम् । तस्मात्सर्वसारत्वाद्धोता यः (यं) प्रयोगमध्य ओमिति प्रणवं करोति । सर्वप्रयोगसंग्रहार्थो वीप्सा । सोऽयमोंकारः स्वर्गप्राप्तिहेतुत्वात्तदात्मकः । तथा योऽसावादित्यस्तपत्यसावप्योंकारस्वरूपः । आदित्यप्राप्तेरप्योंकारसाधनत्वात् । ओंकारस्य सर्वफलहेतुत्वं कठा आमनन्ति—'एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्' इति ।

अथ प्रायश्चित्तं विधातुमुपयुक्तमुपाख्यानमाह—

स प्रजापतिर्यज्ञमतनुत तमाहरत्तेनायजत स ऋचैव हौत्रमकरोद्यजुषाऽऽध्वर्यवं साम्नोद्गीथं तदेतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत्, इति ।

पुरा प्रजापतिः स्वेच्छया यज्ञमतनुत विस्तारितवान् । केन प्रकारेणेति सोऽभिधीयते । तं यज्ञसाधनसमूहमाहृत्य तेन साधनेन यागं कृतवान् । वेदत्रयगतैर्मन्त्रैः क्रमेण हौत्राध्वर्यवौद्गात्राणि निष्पाद्य ततस्त्रय्यै विद्यायै वेदत्रय-

* अत्र पुस्तकेषु प्लुतिर्वर्तते साऽयुक्ता ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पार्या विद्यायाः यदेतच्छुक्रं सारं व्याहृतित्रयादिरूपं तेन सारेण ब्रह्मत्वं कृतवान् ।

अथ ब्रह्मयज्ञवद्देवतायज्ञं दर्शयति—

स प्रजापतिर्यज्ञं देवेभ्यः संप्रायच्छत्ते देवा यज्ञमतन्वत तमाहरन्त तेनायजन्त त ऋचैव हौत्रमकुर्वन्यजुषाऽऽध्वर्यवं साम्नोद्गीथं यदेवैतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वन्, इति ।

पूर्ववाक्यवद्व्याख्येयम् ।

अथ प्रश्नोत्तराभ्यां प्रायश्चित्तं विधत्ते—

ते देवा अब्रुवन्प्रजापतिं यदि नो यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा का प्रायश्चित्तिरिति स प्रजापतिरब्रवीद्देवान्यदि वो यज्ञ ऋक्त आर्तिर्भवति भूरिति गार्हपत्ये जुहवाथ यदि यजुष्टो भुव इत्याग्नीध्रीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहवाथेति, इति ।

ते देवाः प्रजापतिं प्रत्येवमपृच्छन्नोऽस्मदीये यज्ञे यदि कदाचिदृक्त ऋङ्मन्त्रादार्तिर्नाशो भवेत् । तथा यजुर्मन्त्रात्साममन्त्राद्वा कदाचिदार्तिः स्यात् । एताः सर्वा आर्तयोऽस्माभिर्विज्ञाता यदि कदाचिदविज्ञाता काचिदार्तिर्भवेत् । यदि वा सर्वथा यद्वेदत्रयमन्त्रनिमित्ताऽस्माभिर्विज्ञाताऽस्माभिरज्ञाता च सर्वाऽप्यार्तिर्भवेत् । इदानीं प्रायश्चित्तिर्वक्तव्येति देवप्रश्नः । ऋङ्मन्त्रवैकल्ये गार्हपत्ये भूरिति होमः । यजुर्मन्त्रवैकल्ये सत्याग्नीध्रीये धिष्णिये भुव इति होमः । सोऽयं सोमयागे द्रष्टव्यः । हविर्याग आग्नीध्रीयाभावात् । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि दाक्षायणयज्ञः

१ ख. 'वेध' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कौण्डपायिनामयनं सौत्रामणी वा सप्तमी त एते हविर्यज्ञास्तेष्वाग्नीध्रीयाभा- वादन्वाहार्यपचने दक्षिणाग्नौ जुहवाथ हे देवा यूयं जुहुत। सामश्रेषे स्वरि- त्याहवनीये होमः। यद्यविज्ञातो श्रेषो यदि वा वेदत्रयश्रेषसमुच्चयस्तत्रोभय- त्रापि भूर्भुवः स्वरित्येतास्तिस्रो व्याहृतीः सर्वा अनुद्रुत्योच्चार्याऽऽहवनीय एव जुहुत।

अनेनार्थवादेन प्रायश्चित्तविधिमुन्नीय व्याहृतिप्रशंसापूर्वकं तं विधिमुप- संहरति—

एतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्याहृत- यस्तद्यथाऽऽत्मनाऽऽत्मानं संदध्याद्यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वाऽन्यद्वा विश्लिष्टं संश्ले- षयेदेवमेवैताभिर्यज्ञस्य विश्लिष्टं संदधाति सैषा सर्वप्रायश्चित्तिर्यदेता व्याहृतयस्तस्मादेषैव यज्ञे प्राय- श्चित्तिः कर्तव्या ॥ ३२ ॥ इति।

या एता व्याहृतयः सन्त्येतानि ह वै त्रीण्येव व्याहृतिरूपाणि वेदानां संबन्धीन्यन्तःश्लेषणान्यन्तर्बन्धनसाधनानि। तत्र दृष्टान्तोऽभिधीयते। यथा लोक आत्मनाऽऽत्मानं संदध्यात्। आत्मशब्दः स्वरूपमात्रवाचित्वात्सर्वद्रव्य- परः। एकेन द्रव्येण द्रव्यान्तरं संधीयते। एतच्छन्दोगैर्विस्पष्टमाम्नातम्। तद्यथा—लवणेन सुवर्णं संदध्यात्। सुवर्णेन रजतम्। रजतेन त्रपु। त्रपुणा सीसम्। सीसेन लोहम्। लोहेन दारु। दारुणा चर्मेति। क्षारादिना सुवर्णादीनां संधानं सुवर्णकारादिषु प्रसिद्धम्। तदेतदभिप्रेत्याऽऽत्मनाऽऽत्मानं संदध्यादित्युक्तम्। यथा च हस्तपादादिष्वेकेन पर्वणा पर्वान्तरं संश्लिष्टं यथा च श्लेष्मणा धात्वन्तरं संश्लिष्टं चर्मणा च चर्मण्यं पादत्राणादिकमन्यद्वा शकटादिषु किंचिद्विश्लिष्टमङ्गं चर्ममय्या रज्ज्वा संश्लेषयेत्। अनेनैव प्रकारेणैता- भिर्व्याहृतिभिर्यज्ञस्य विश्लिष्टमङ्गं संश्लिष्टं भवति। या एता व्याहृतयः सैषा सर्वस्य वैकल्यस्य प्रायश्चित्तिः। तस्माद्यज्ञे वैकल्यपरिहारार्थमेषैव प्रायश्चित्तिः कर्तव्या॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्रा- ह्मणभाष्ये पञ्चविंशाध्याये सप्तमः खण्डः॥ ७॥ (३२) [१८५]।

---

व्याहृतिहोमप्रसङ्गेन ब्रह्मा बुद्धिस्थस्तस्य तत्कर्तृत्वात्। तथा चाऽऽश्वला- यन आह— जुहोति जपतीति प्रायश्चित्ते ब्रह्माणमिति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तदाहुर्ब्रह्मवदा३ः,यदृचैव हौत्रं क्रियते यजुषाऽऽध्व-र्यवं साम्नोद्गीथं व्यारब्धा त्रयी विद्या भवत्यथ केन ब्रह्मत्वं क्रियत इति त्रय्या विद्ययेति ब्रूयात्, इति ।

तत्तत्र प्रायश्चित्तप्रसङ्गे महावदा ब्रह्मवादिन आहुश्चोदयन्ति । महान्तं प्रौढं वेदं वदन्तीति महावदाः । प्लुतिस्तेषां प्रशंसार्था । यद्यस्मात्कारणादृग्यजुः सामेति हौत्राध्वर्यवौद्गात्राणां करणात्त्रयी वेदत्रयरूपा विद्या व्यारब्धा विविच्य होत्रादिभिः स्वीकृता भवति । अथर्ववेदश्च नात्र मिश्रयितुं शक्यते । आहव-नीयादिकर्मणस्तस्य तत्राभावात् । अथ तस्मात्कारणात्केन साधनेन ब्रह्मत्वं क्रियत इति चोद्यम् । तस्य त्रय्या वेदत्रयरूपया विद्यया ब्रह्मत्वं कर्तव्यमि-त्युत्तरं प्रतिब्रूयात् । अत एव संप्रदायविद आहुः—

अथर्वक्षेत्रवान्ब्रह्मा वेदेष्वन्येषु भागवान् ।
तस्माद्ब्रह्माणं ब्रह्मिष्ठमिति ह्यारण्यके श्रुतम् ॥ इति ।

ब्रह्मणो मनसा वैकल्यराहित्यानुसंधानं विधत्ते—

अयं वै यज्ञो योऽयं पवते तस्य वाक्च मनश्च वर्तन्यौ वाचा च हि मनसा च यज्ञो वर्तत इयं वै वागदो मनस्तद्वाचा त्रय्या विद्ययैकं पक्षं संस्कुर्वन्ति मनसैव ब्रह्मा संस्करोति, इति ।

योऽयं वायुः पवतेऽन्तरिक्षे संचरत्ययमेव यज्ञस्वरूपो वायुसदृशो यज्ञः । यथा वायोः संचारमार्गास्तथा तस्य यज्ञस्य वाक्चं मनश्च वर्तन्यौ प्रवृत्ति-मार्गौ । यस्माद्वाचा मन्त्ररूपया मनसा च प्रयोगानुसंधात्रा यज्ञो वर्तते तस्मा-दुभौ मार्गौ । तत्र वागियं वै भूमिस्वरूपैव । मनस्त्वदः स्वर्गरूपम् । तत्तथा सति वाग्रूपया त्रय्या विद्यया होत्रादयो रथस्थानीयस्य यज्ञस्यैकं पक्षं भागं संस्कुर्वन्ति सम्यक्संपादयन्ति । ब्रह्मा मनसैव संस्करोति सम्यक्संपादयति । अन्यं भागमिति शेषः । होत्रादिभिर्वाचाऽनुष्ठीयमानेष्वङ्गेषु वैकल्यराहित्यं ब्रह्माऽनुसंदध्यादित्यर्थः । छन्दोगाश्चैतमर्थमामनन्ति—' एष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्व-र्युरुद्गाताऽन्यतराम् ' इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ ब्रह्मणो मौनं विधातुं वाग्व्यवहारे बाधां दर्शयति—

ते हैके ब्रह्माण उपाकृते प्रातरनुवाके स्तोमभागाञ्जपित्वा भाषमाणा उपासते तद्धैतदुवाच ब्राह्मण उपाकृते प्रातरनुवाके ब्रह्माणं भाषमाणं दृष्ट्वाऽर्धमस्य यज्ञस्यान्तरगुरिति तद्यथैकपात्पुरुषो यन्नेकतश्चक्रो वा रथो वर्तमानो भ्रेषं न्येत्येवमेव स यज्ञो भ्रेषं न्येति यज्ञस्य भ्रेषमनु यजमानो भ्रेषं न्येति, इति।

केषुचिद्यज्ञप्रयोगेषु वर्तमानास्ते वेदत्रयाभिज्ञत्वेन प्रसिद्धा एके ब्रह्माण केचिद्ब्रह्मसंज्ञका ऋत्विजो होत्रा पठितव्ये प्रातरनुवाकेऽध्वर्युणोपाकृते ज्ञाते सति तत ऊर्ध्वं रश्मिरसि क्षयाय त्वेत्यादीन्स्तोमभागसंज्ञकान्मन्त्राञ्ज पित्वा मौनमकृत्वा भाषमाणा वाग्व्यवहारं कुर्वन्त उपासते समीपे तिष्ठन्ति तदानीं कश्चिच्छास्त्राभिज्ञो ब्राह्मण आगत्य कस्मिंश्चिद्यज्ञे प्रातरनुवाकोपाक णादूर्ध्वं भाषमाणं वाग्व्यवहारं कुर्वन्तं ब्रह्माणं दृष्ट्वा वाक्यमेतदुवाच—अ यज्ञस्यार्धमन्तरगुरिति। ऋत्विग्यजमाना एकं यज्ञभागमन्तरितं कृतवन्त इ तथा सति यथा लोके कश्चिदेकपात्पुरुषो द्वितीयं पादं संकुचितं कृत्वा रितेनैकेनैव पादेन यन्मार्गे गच्छन्भ्रेषं भूमौ पातं न्येति नितरामेति यथा कश्चिद्रथ एकचक्रो भूमौ प्रवर्तमानो भ्रेषं प्राप्नोति, एवमेव मौनरहितेन ब्रह्म युक्तः स यज्ञो भ्रेषं न्येति। तं च यज्ञभ्रेषमनु पश्चाद्यजमानो भ्रेषं न्येति।

इत्थं वाग्व्यवहारे बाधमुक्त्वा मौनं विधत्ते—

तस्माद्ब्रह्मोपाकृते प्रातरनुवाके वाचंयमः स्यादोपांश्वन्तर्यामयोर्होमादुपाकृतेषु पवमानेष्वोदृचोऽथ यानि स्तोत्राणि सशस्त्राण्या तेषां वषट्कारााद्वाचंयम एव स्यात्तद्यथोभयतःपात्पुरुषो यन्नुभयतश्चक्रो वा रथो वर्तमानो न रिष्यत्येवमेव स यज्ञो न रिष्यति यज्ञस्यारिष्टिमनु यजमानो न रिष्यति ॥ ३३ ॥ इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यस्माद्भाषणे बाधोऽस्ति तस्माद्ब्रह्मा प्रातरनुवाकोपाकरणादूर्ध्वं वाचंयमो मौनी स्यात् । कियन्तं कालमिति तदुच्यते । उपांश्वन्तर्यामयोर्ग्रहयोरा होमाद्धोमसमाप्तिपर्यन्तं तथा पवमानस्तोत्रेषु त्रिष्वप्यध्वर्युणोपाकृतेष्वनुज्ञातेषु सत्सु, ओदृच उत्तम(मा)समाप्तिकालीना येयमृगस्ति तत्समाप्तिपर्यन्तम् । वाचंयमः स्यादित्यनुवर्तते । अथानन्तरं यान्यन्यान्याज्यादिस्तोत्राणि शस्त्रसहितानि सन्ति तेषामा वषट्काराद्वौषडिति मन्त्रोच्चारणपर्यन्तं तत्तत्स्तोत्रप्रारम्भादूर्ध्वं तदा तदा वाचंयम एव स्यात् । तथा सति लोके यथोभयतःपात्पादद्वयोपेतः पुरुषो यन्मार्गे गच्छन्न रिष्यति न विनश्यति तथा चोभयतश्चक्रश्चक्रद्वयोपेतो [रथो] मार्गे प्रवर्तमानो न विनश्यत्येवमेव मौनिना ब्रह्मणा युक्तः स यज्ञो न विनश्यति । यज्ञस्यारिष्टिं विनाशाभावमनु यजमानोऽपि न रिष्यति न विनश्यति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्यायेऽष्टमः खण्डः ॥८॥ (३३) [१८६] ।

---

अथ ब्रह्मणः कांश्चित्कर्तव्यविशेषान्विधातुं चोद्यमुद्भावयति—

तदाहुर्यद्ग्रहान्मेऽग्रहीत्प्राचारीन्म आहुतीर्मेऽहौषीदित्यध्वर्यवे दक्षिणा नीयन्त उदगासीन्म इत्युद्गात्रेऽन्ववोचन्मेऽशंसीन्मेऽयाक्षीन्म इति होत्रे किंस्विदेव चकुषे ब्रह्मणे दक्षिणा नीयन्तेऽकृत्वाऽहोस्विदेव हरता इति, इति ।

तत्तास्मिन्ब्रह्मणि चोद्यमाहुः । किं चोद्यमिति तदुच्यते । यजमानेनाध्वर्यवे यदा दक्षिणा नीयन्ते प्रदीयन्ते तदानीं यजमानस्यायमभिप्रायः—असावध्वर्युर्मे मदर्थं ग्रहानैन्द्रवायवादीनग्रहीत् । तथा मे मदर्थं प्राचारीत्, ग्रहप्रचारं कृतवान् । तथा मे मदर्थमाहुतीरहौषीत्, हुतवानिति । यदोद्गात्रे दक्षिणा नीयन्ते तदानीमयमभिप्रायः—असावुद्गाता मे मदर्थमुदगासीत्, औद्गात्रं कृतवानिति । यदा होत्रे दक्षिणा नीयन्ते तदानीमयमभिप्रायः—अयं होता मे मदर्थमन्ववोचत्पुरोनुवाक्यादीनामनुवचनं कृतवान् । तथा मे मदर्थमशंसीत्, शंसनं कृतवान् । तथा मे मदर्थमयाक्षीत्, याज्यां पठितवानिति । एवं तेन तेन कृतं कार्यं स्मृत्वा यस्माद्दक्षिणां ददाति तस्माद्ब्रह्मणेऽपि तत्कृतं कार्यं स्मृत्वा दक्षिणा दातव्या । तथा सति किंस्विदेव । किं नाम कार्यं चक्रु(क्रु)षे कृतवते



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ब्रह्मणे यजमानेन दक्षिणा नीयन्त आहोस्विदकृत्वैव । अथवा किमपि कार्यमकृत्वा हर्ता एव ब्रह्मा दक्षिणां हरेत । एतच्चायुक्तमिति चोद्यम् ।

तस्योत्तरमाह—

यज्ञस्य हैव भिषग्यद्ब्रह्मा यज्ञायैव तद्भेषजं कृत्वा हरति, इति ।

यो ब्रह्माऽस्त्येष यज्ञस्य भिषक्चिकित्सकः । तत्तस्मात्कारणाद्यज्ञायैव भेषजं कृत्वा यज्ञस्याङ्गवैकल्यरोगं शमयित्वा दक्षिणां हरति । तस्माद्धोत्रादिवदुपकारित्वादयं दक्षिणाया योग्य एव ।

पक्षान्तररूपेण ब्रह्मणो दक्षिणाधिक्यं दर्शयति—

अथो यद्भूयिष्ठेनैव ब्रह्मणा छन्दसां रसेनाऽऽर्त्विज्यं करोति यद्ब्रह्मा तस्माद्ब्रह्माऽर्धभाग्घ वा एष इतरेषामृत्विजामग्र आस यद्ब्रह्माऽर्धमेव ब्रह्मण आसार्धमितरेषामृत्विजाम्, इति ।

अपि यो ब्रह्माऽस्ति भूयिष्ठेनैवातिबहुलेनैव च्छन्दसां रसेन वेदसारभूतेन व्याहृतिप्रणवरूपेण ब्रह्मणा मन्त्रेणैव यद्यस्मात्कारणादार्त्विज्यं करोति तस्मात्कारणादुपकारबाहुल्यादयं ब्रह्मेति विशिष्टेन नाम्ना व्यवह्रियत इति शेषः । किंच यो ब्रह्माऽस्त्येषोऽग्रे प्रथममेवेतरेषामृत्विजामर्धभाग्घ वा अर्धप्रयोगं भजत्येव । वेदत्रये यावान्प्रयोगो विततोऽस्ति स च सर्वोऽपीतरैर्ऋत्विग्भिर्वाचाऽनुष्ठीयते । ब्रह्मणा तु मनसेत्येतावानेव विशेषः । प्रयोगस्तूभयत्र समान एव । अयमेवार्थोऽर्धमेवेत्यादिना स्पष्टी क्रियते । ब्रह्मणो यज्ञस्यार्धमेव मनसाऽनुष्ठीयमानमितरेषामृत्विजां होत्रादीनां वाचाऽनुष्ठीयमानमर्धं तस्मादुपकारबाहुल्यं सिद्धम् ।

पूर्ववद्व्याहृतिप्रायश्चित्तमुक्तं तत्कर्तृत्वं ब्रह्मणो विधत्ते—

तस्माद्यदि यज्ञ ऋक्त आर्तिः स्याद्यदि यजुष्टो यदि सामतो यद्यविज्ञाता सर्वव्यापद्वा ब्रह्मण एव निवेदयन्ते तस्माद्यदि यज्ञ ऋक्त आर्तिर्भवति भूरिति ब्रह्मा गार्हपत्ये जुहुयाद्यदि यजुष्टो भुव इत्याग्नी-

१ क. ख. ङ. ट. 'रतैव' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



धीयेऽन्वाहार्यपचने वा हविर्यज्ञेषु यदि सामतः स्वरित्याहवनीये यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति सर्वा अनुद्रुत्याऽऽहवनीय एव जुहुयात्, इति।

यस्माद्ब्रह्मा यज्ञभारमर्धं वहति भिषक्त्वेन यज्ञवैकल्यं परिहर्तुं च शक्नोति तस्माद्यदृगादिभ्यः किंचिद्वैकल्यं भवेत्तदानीमितरे सर्वे ते तस्मै ब्रह्मण एव तद्वैकल्यं निवेदयन्ते। तस्मादितरैर्निवेदितत्वात्स ब्रह्मा पूर्वोक्तप्रकारेण तत्तत्प्रायश्चित्तं जुहुयात्।

ब्रह्मणः कर्तव्यान्तरं दर्शयति—

स प्रस्तोतोपाकृते स्तोत्र आह ब्रह्मन्स्तोष्यामः प्रशास्तरिति स भूरिति ब्रह्मा प्रातःसवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति भुव इति माध्यंदिने सवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति स्वरिति तृतीयसवने ब्रूयादिन्द्रवन्तः स्तुध्वमिति भूर्भुवः स्वरित्युक्थ्ये वाऽतिरात्रे वा ब्रूयादिन्द्रवन्तः स्तुध्वमिति, इति।

अध्वर्युणा स्तोत्र उपाकृते प्रारब्धमनुज्ञाते सति प्रस्तोता स्तोत्रसाधने साम्नि प्रथमस्य प्रस्तावभागस्य मा(गा)ता प्रस्तोतृनामक ऋत्विग्ब्रह्माणं प्रत्यनुज्ञामनेन मन्त्रेण प्रार्थयेत्। ब्रह्मन्नित्यादिर्मन्त्रः। हे प्रशास्तरस्माकं प्रशात(स)नस्याऽऽज्ञापनस्य कर्तर्हे ब्रह्मंस्त्वदनुज्ञया वयं स्तोष्याम इति। ततस्तेन प्रार्थितो ब्रह्मा भूरित्येतां प्रथमां व्याहृतिमुक्त्वा ह उद्गातार इन्द्रविषयस्तुतिपराः सन्तः स्तुध्वं स्तोत्रं कुरुतेति ब्रूयात्। एवमितरत्रापि योज्यम्।

ब्रह्मणा प्रयुक्तस्यानुज्ञानमन्त्रस्याभिप्रायं दर्शयति—

स यदाहेन्द्रवन्तः स्तुध्वमित्यैन्द्रो वै यज्ञ इन्द्रो यज्ञस्य देवता सेन्द्रमेव तदुद्गीथं करोतीन्द्रान्मा गा।दिन्द्रवन्तः स्तुध्वमित्येवैनांस्तदाह तदाह ॥ ३४॥ इति।

स ब्रह्मेन्द्रवन्तः स्तुध्वमिति यद्वाक्यमाह तस्याभिप्राय उच्यते। यज्ञः सोमयाग ऐन्द्रो वा इन्द्रसंबन्ध एष। इन्द्रो हि तस्य यज्ञस्य देवताऽतस्तदु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्गीथं सामगैः क्रियमाणमुद्गानं सेन्द्रमिन्द्रसहितमेव करोति । इन्द्र(द)मुद्गीथमिन्द्रान्मा गान्माऽपगच्छतु । तस्माद्ध उद्गातारो यूयमिन्द्रवन्त इन्द्रविषयतात्पर्यवन्त एवं भूत्वा स्तुध्वमित्यनेनैव प्रकारेणैनानुद्गातॄन्प्रति ब्रह्मा तद्वाक्यमाह । अभ्यासोऽध्यायपरिसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चविंशाध्याये नवमः खण्डः ॥ ९ ॥ (३४) [१८७] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
पञ्चविंशोऽध्यायः ॥ २५ ॥

---

इत्यैतरेयब्राह्मणे पञ्चमपञ्चिका समाप्ता ॥

( पञ्चिकाङ्काः—५ । अध्यायाङ्काः—२५ । खण्डाङ्काः—१८७ ) ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ षष्ठपञ्चिकारम्भः ।

## षड्विंशोऽध्यायः ।

अथाग्निहोत्रं पयसः प्रशंसा
तद्दोहनापत्तिविनिष्कृतिश्च ।
तस्य प्रशंसाऽप्युदिते च होमो
ब्रह्मर्त्विजो व्याहृतयोऽप्यधीताः ॥

ब्रह्मणः कर्तव्यविधानेन ग्रावस्तुदूत्बुद्धिस्थस्तस्याग्निष्टोमे कर्तव्यं विधातुमुपाख्यानमाह—

देवा ह वै सर्वचरौ सत्रं निषेदुस्ते ह पाप्मानं नापजघ्निरे तान्होवाचार्बुदः काद्रवेयः सर्प ऋषिर्मन्त्रकृदेका वै वो होत्राऽकृता तां वोऽहं करवाण्यथ पाप्मानमपहानिष्यध्व इति ते ह तथेत्यूचुस्तेषां ह स्म स मध्यंदिने मध्यंदिन एवोपोदासर्पद्ग्राव्णोऽभिष्टौति, इति ।

पुरा कदाचिद्देवाः सर्वचरुनामके देशविशेषे सत्रं किंचिदनुष्ठितवन्तः । ते देवास्तेन सत्रेण स्वकीयं पाप्मानं दारिद्र्यहेतुं नापजघ्निरे न नाशितवन्तः । तान्पापक्षयरहितान्देवानर्बुदनामकः कश्चिदृषिरागत्योवाच । कीदृशोऽर्बुदः । काद्रवेयः कद्रुनामधारिण्याः स्त्रियाः पुत्रः । सर्पः सर्पजातीयदेहधारी । ऋषिरतीन्द्रियार्थद्रष्टा । मन्त्रकृत् । करोतिधातुस्तत्र दर्शनार्थः । मन्त्रस्य प्रैते वदन्तु प्र वयं वदामेत्यादिसूक्तस्य द्रष्टा । तेनार्बुदेन किमुक्तमिति तदुच्यते । हे देवा एका वै वो होत्रैकैव होतृवेदोत्पन्ना क्रिया वो युष्माकमकृता नानुष्ठिता तद्वैकल्येन पापक्षयो नाऽऽसीत् । तां क्रियां वो युष्मदर्थमहं करवाण्यनन्तरं पाप्मानं यूयमपहनिष्यध्व इत्येतदृषिवाक्यं देवा अङ्गी चक्रुस्ततः सोऽर्बुदस्तेषां देवानां सत्रे प्रतिदिनं मध्यंदिनसमय एवोप समीपमुत्सुकः सन्नागच्छत् । आगत्य च ये सोमाभिषवार्था ग्रावाणः पाषाणाः सन्ति तान्पूर्वोक्तेन सूक्तेनाभिष्टौत्यभितः स्तुतिं कृतवान् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इदानीं ग्रावस्तुत ऋत्विजस्ते(स्त्वे)तत्सूक्तेन ग्राव्णामभिष्टवं विधत्ते—

तस्मान्मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टुवन्ति तदनुकृति, इति ।

यस्मादर्बुदेनाभिष्टुतिः कृता तस्मात्सोमप्रयोगेषु सर्वेषु तत्तन्मध्यंदिने काल एव प्रैते वदन्त्यवर्ति सूक्तेन ग्राव्णामभिष्टवमृत्विजः कुर्युः । तदनुकृतीति क्रियाविशेषणम् । तस्यार्बुदस्यानुकृत्य(तिरा)नुरूपं(प्यं) यथा भवति तथेत्यर्थः ।

अर्बुदस्य वृत्तान्तं लोकप्रसिद्ध्या द्रढयति—

स ह स्म येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति, इति ।

स तु ह सोऽर्बुदाख्यः सर्पदेहो महर्षिर्येन मार्गेणोपोदासर्पत्तत्समीपं प्राप्य बिलादुद्गम्याऽऽगच्छत्तद्ध तस्मिन्नेव देश एतर्हीदानीमप्यर्बुदोदासर्पणीत्यनेन नामधेयेन युक्ता प्रपन्मार्गोऽस्ति । प्रपद्यते गम्यतेऽनयेति प्रपत् ।

अथाभिष्टवकाले ग्रावस्तुत उष्णीषेण नेत्रवेष्टनं विधत्ते—

तान्ह राजा मदयांचकार ते होचुराशीविषो वै नो राजानमवेक्षते हन्तास्योष्णीषेणाक्ष्यावपिनह्यामेति तथेति तस्य होष्णीषेणाक्ष्यावपिनह्युस्तस्मादुष्णीषमेव पर्यस्य ग्राव्णोऽभिष्टुवन्ति तदनुकृति, इति ।

ग्राव्णामभिपवार्थमर्बुदाख्ये सर्परूपे महर्षौ समागते सति तदीयाविषदृष्ट्याऽवलोकितः सोमो राजा दृष्ट्यारक्तः स्वयमपि विषयुक्तः सन्समीपवर्तिदेवान्मदयांचकारोन्मत्तान्परवशान्कृतवान् । तदानीं ते देवाः परस्परमिदमूचुः— आशीविषः सर्परूपोऽयमर्बुदो नोऽस्माकं राजानं विषदृष्ट्याऽवेक्षते हन्त कष्टमेतत्संपन्नमतस्तत्परिहाराय केनचिदुष्णीषेण शिरोवेष्टनसाधनेनाल्पवस्त्रेणास्यार्बुदस्याक्ष्यावपिनह्याम चक्षुषोर्बन्धनं करवामेति विचार्य त्रिः प्रदक्षिणं तस्य मुखमुष्णीषेण वेष्टयित्वा तदीयचक्षुषोर्बन्धनं कृतवन्तः । यस्माद्देवैरेवं कृतं तस्मादृत्विजोऽप्युष्णीषमेव पर्यस्य परितो मुखं वेष्टयित्वा ग्राव्णः सोमाभिषवार्थान्पाषाणानभिष्टुवन्ति । तस्यार्बुदस्यानुकृतिः सादृश्यं यथा भवति तथेत्यनेनाभिप्रायेण वेष्टनम् ।

१ क. ख. झ ट 'र्बुदसर्पिणी' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अथ ग्रावस्तुतः पूर्वोक्तसूक्तादन्या अप्यृचो विधत्ते—

तान्ह राजा मदयामेव चकार ते होचुः स्वेन वै नो मन्त्रेण ग्राव्णोऽभिष्टौति हन्तास्यान्याभिर्ऋग्भिर्मन्त्रमापृणचामेति तथेति तस्य हान्याभिर्ऋग्भिमन्त्रमापपृचुस्ततो हैनान्न मदयांचकार तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति शान्त्या एव, इति ।

पुनरपि सोमो राजा तान्देवान्पूर्ववन्मदयांचकारैव। ततस्ते देवाः परस्परमूचुः—दृष्टिविषपरिहारेऽप्ययं सर्पदेह ऋषिः स्वकीयेनैव सूक्तरूपेण मन्त्रेण ग्राव्णोऽभिष्टौत्यतो मन्त्रसंबद्धेन विषेणास्माकमुन्मादो जायते । हन्त कष्टमेतत् । अतो मन्त्रगतविषपरिहारायास्यार्बुदस्य मन्त्रसूक्तमन्याभिराप्यायस्व समेतु त इत्यादिभिर्ऋग्भिरापृणचाम । पृची संपर्के इति धातुः । सर्वतः संपृक्तं करवाम । तदेतत्सर्वं देवा अङ्गीकृत्य तथैव चक्रुः । ततः मा(त ऋ)गन्तरसंपर्काचत्सूक्तगतोग्रत्वे(त्वेऽ)सत्येता(ना)न्देवान्सोमो राजा न मदयांचकारोन्मादं नाकरोत् । तस्मात्कारणादर्बुदस्य मन्त्रसूक्तमन्याभिराप्यायस्वेत्यादिभिराभिष्टवकाले संपृक्तं कुर्युः । तच्च शान्त्यर्थमेव भवति ।

देवानामभिष्टवकृतां पापशान्तिं दर्शयति—

ते ह पाप्मानमपजघ्निरे तेषामन्वपहतिं सर्पाः पाप्मानमपजघ्निरे त एतेऽपहतपाप्मानो हित्वा पूर्वां जीर्णां त्वचं नवयैव प्रयन्ति, इति ।

ते देवा अर्बुदानुष्ठितेनाभिष्टवेन दारिद्र्यादिहेतुं पाप्मानं नाशितवन्तः । तेषां देवानामपहतिं पापविनाशमनु पश्चादर्बुदसंबन्धिनः सर्पाः सर्वेऽपि स्वकीयं पाप्मानं नाशितवन्तः । ये सर्पाः स्वशरीरगतां पूर्वसिद्धां जीर्णां त्वचं हित्वा नवयैव नूतनयैव त्वचा युक्ताः प्रयन्ति सर्वतः प्रसर्पन्त्येते नूतनत्वग्युक्ताः सर्पा अपहतपाप्मान इत्युच्यन्ते ।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद ॥ १ ॥ २।ते ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षड्विंशाध्याये प्रथमः खण्डः ॥ १ ॥ [ १८८ ] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ प्रश्नोत्तराभ्यामाभिष्टवगतानामृचां संख्यां विधत्ते—

तदाहुः कियतीभिरभिष्टुयादिति शतेनेत्याहुः शतायुर्वै पुरुषः शतवीर्यः शतेन्द्रिय आयुष्येवैनं तद्वीर्य इन्द्रिये दधाति, इति ।

शतसंख्याकासु नाडीषु संचारादिन्द्रियाणां तदीयवीर्यस्य च शतसंख्या। तत्संख्याकानामृचां पाठेनैनं यजमानं दीर्घायुष्यादिगुणयुक्तं करोति ।

पक्षान्तरं विधत्ते—

त्रयस्त्रिंशत्या वेत्याहुस्त्रयस्त्रिंशतो वै स देवानां पाप्मनोऽपाहंस्त्रयस्त्रिंशद्वै तस्य देवा इति, इति ।

अथवा त्रयस्त्रिंशत्या, ऋचां त्रयस्त्रिंशत्संख्ययाऽभिष्टव इत्याहुः । तत्र हेतुरुच्यते । देवानां संबन्धिनी या त्रिंशदस्त्यस्याः सकाशात्सोऽर्बुदः पाप्मनोऽपाहन्विनाशितवान्। तस्यार्बुदस्य समीपस्था देवतास्त्रयस्त्रिंशद्वै। अष्टौ वसव एकादश रुद्रा द्वादशाऽऽदित्याः प्रजापतिश्च वषट्कारश्चेत्येवं देवसंख्या द्रष्टव्या।

पक्षान्तरं विधत्ते—

अपरिमिताभिरभिष्टुयादपरिमितो वै प्रजापतिः प्रजापतेर्वा एषा होत्रा यद्ग्रावस्तोत्रीया तस्यां सर्वे कामा अवरुध्यन्ते स यदपरिमिताभिरभिष्टौति सर्वेषां कामानामवरुद्ध्यै, इति ।

एतावत्य एवेति संख्यानिर्बन्धरहिता अपरिमिताः। प्रजापतेरपरिमितमहिमत्वाद्ग्रावस्तोत्रसंबन्धिन्या होत्रा( तृ )वेदोत्पन्नायाः क्रियायाः प्रजापतिसंबद्धत्वादपरिमितत्वं युक्तम् । तस्यां च क्रियायां सर्वे कामाः स्वाधीना भवन्ति। अतोऽपरिमिताभिरभिष्टवः सर्वकामप्राप्त्यै संपद्यते ।

वेदनं प्रशंसति—

सर्वान्कामानवरुन्धे य एवं वेद, इति ।

तृतीयस्य पक्षस्य मुख्यत्वं दर्शयति—

तस्मादपरिमिताभिरेवाभिष्टुयात्, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रश्नोत्तराभ्यामभिष्टवे प्रकारविशेषं विधत्ते—

तदाहुः कथमभिष्टुयादित्यक्षरशा३ः, चतुरक्षरशा३ः, पच्छा३ः, अर्धर्चशा३ः, ऋक्शा३ः, इति तद्यदृक्शो न तदवकल्पतेऽथ यत्पच्छो नो एव तदवकल्पतेऽथ यदक्षरशश्चतुरक्षरशो वि तथा छन्दांसि लुप्येरन्बहूनि तथाऽक्षराणि हीयेरन्नर्धर्चश एवाभिष्टुयात्प्रतिष्ठाया एव, इति ।

तत्त्राभिष्टवे ब्रह्मवादिनः। प्रश्नमाहुः केन प्रकारेणाभिष्टुयादिति कियन्तः प्रकाराः संभाव्यन्त इति वा काङ्क्षायां ते प्रकारा उपन्यस्यन्ते—अक्षरशोऽभिष्टुयादित्येकः प्रकारः।प्रत्यक्षरमवसायावसायाभिष्टुयादित्यर्थः। अक्षरचतुष्टयेऽवसानं द्वितीयः प्रकारः। पादेऽवसानं तृतीयः प्रकारः। अर्धर्चेऽवसानं चतुर्थः। ऋचि सामाप्तायामवसानं पञ्चमः। प्लुतयः सर्वा विचारार्थाः। किं प्रत्यक्षरमवसानमुताक्षरचतुष्टयेऽवसानमुत पादेऽवसानमाहोस्विदर्धर्चेऽवसानमथवा कृत्स्नायामृच्यवसानमिति संशयः। तत्र पक्षान्तराणि दूषयित्वाऽर्धर्चपक्ष एव स्वीकार्यः। कथमिति तदुच्यते। यदि ऋची(ऋच्यवसानमि)ति पक्षस्या(स्त्व)-त्यन्तं नावकल्पते न संभवति। अध्ययनवैपरीत्यप्रसङ्गात्। अध्ययनकालेऽर्धर्चेऽवसानं कुर्वन्ति न तु कृत्स्नामृचं मध्येऽवसानरहितां पठन्ति। पादावसानपक्षेऽपि स एव दोपः। एकैकाक्षरचतुरक्षरपक्षयोर्दोषान्तरमप्यस्ति। तथा पक्षद्वयाङ्गीकारे छन्दांसि विलुप्येरन्। कथं विलोप इति तदुच्यते। तथा सत्यक्षरावसानपक्षे बहून्यक्षराणि हीयेरन्विनश्येयुः। संहिताकालीनस्य द्वित्वादेरभावात्। ततश्छन्दोभङ्गः। अर्धर्चपक्षे तु यथाध्ययनमेवाभिष्टवान्न कोऽपि दोपः। तस्मादयमेव पक्षः सिद्धान्तः। अर्धर्चयोर्द्वित्वात्पक्षद्वयसादृश्येन प्रतिष्ठार्थमेतत्संपद्यते।

इममर्धर्चपक्षं प्रशंसति—

द्विप्रतिष्ठो वै पुरुषश्चतुष्पादाः पशवो यजमानमेव तद्द्विप्रतिष्ठं चतुष्पात्सु पशुषु प्रतिष्ठापयति तस्मादर्धर्चश एवाभिष्टुयात्, इति ।

अर्धर्चयोर्द्वित्वाद्यजमानसाम्यमृचां पादचतुष्टयोपेतत्वात्पशुसाम्यम् ।

१ क. ट. ऋक्त इति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अथ मध्यंदिनकालीनमभिष्टवं प्रश्नोत्तराभ्यां प्रशंसति—

तदाहुर्यन्मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टौति कथमस्येतरयोः सवनयोरभिष्टुतं भवतीति यदेव गायत्रीभिरभिष्टौति गायत्रं वै प्रातःसवनं तेन प्रातःसवनेऽथ यज्जगतीभिरभिष्टौति जागतं वै तृतीयसवनं तेन तृतीयसवने, इति ।

तत्तत्राभिष्टवे चोद्यमाहुः । यस्मात्कारणादयं ग्रावस्तुत्तत्प्रयोगसंबन्धि माध्यंदिन एव सवने ग्राव्णामभिष्टवं करोति । एवं सति केन प्रकारेण ग्रावस्तुतः प्रातःसवनतृतीयसवनयोरभिष्टवः सिध्यतीति प्रश्नः । ऋक्षु गायत्रीजगतीछन्दोद्वयं तद्द्वाराऽन्ययोरपि सवनयोरभिष्टवसिद्धिरित्युत्तरम् ।

वेदनं प्रशंसति—

एवमु हास्य मध्यंदिने मध्यंदिन एव ग्राव्णोऽभिष्टुवतः सर्वेषु सवनेष्वभिष्टुतं भवति य एवं वेद, इति ।

एवमु हानेनैव गायत्रीजगतीछन्दोद्वारेण ।

अथ ग्रावस्तुतः संप्रैषनिरपेक्षत्वं प्रश्नोत्तराभ्यां दर्शयति—

तदाहुर्यदध्वर्युरेवान्यानृत्विजः संप्रेष्यत्यथ कस्मादेष एतामसंप्रेषितः प्रतिपद्यत इति मनो वै ग्रावस्तोत्रीयाऽसंप्रेषितं वा इदं मनस्तस्मादेष एतामसंप्रेषितः प्रतिपद्यते ॥ २ ॥ इति ।

तत्तत्र ग्रावस्तुद्विषये प्रश्नमाहुः । यस्मात्कारणादध्वर्युः सर्वानन्यानृत्विजः संप्रेष्यत्येव न तूदास्ते । तथा सत्यृत्विगन्तरवद्ग्रावस्तुदध्वर्युणा संप्रेषणीयः तच्च नास्ति । कस्मात्कारणादसंप्रेषित एव ग्रावस्तुदेतामृचं प्रारभत इति प्रश्नस्याभिप्रायः । तत्रेदमुत्तरम्—येयमृग्ग्रावस्तोत्रसंबन्धिनी विद्यते सेयं मनःस्वरूपा । मनश्चेदमिन्द्रियान्तरेण केनाचिदप्यसंप्रेषितमेव प्रवर्तते । तस्मादेष ग्रावस्तुत्संप्रैषनिरपेक्ष एवैतां स्तोत्रीयामृचं प्रतिपद्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षड्विंशाध्याये द्वितीयः खण्डः ॥ २ ॥ [१८९] ।

---

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ग्रावस्तुत ऋत्विजः कर्तव्यमभिधाय सुब्रह्मण्याख्यस्य ऋत्विजः कर्तव्यं निरूपयति —

वाग्वै सुब्रह्मण्या तस्यै सोमो राजा वत्सः सोमे राजनि क्रीते सुब्रह्मण्यामाह्वयन्ति यथा धेनुमुपह्वयेत्तेन वत्सेन यजमानाय सर्वान्कामान्दुहे, इति ।

सुब्रह्मण्याशब्देनेन्द्राऽऽगच्छ हरिव आगच्छेत्यादिनिगद उच्यते । सा च सुब्रह्मण्या वागेव शब्दरूपैव सती धेनुसदृशी । तस्याः सुब्रह्मण्याया धेनोः सोमो राजा वत्सस्थानीयस्तस्मात्सोमक्रयादूर्ध्वमृत्विजस्तत्तत्प्रयोगेषु सुब्रह्मण्यामाह्वयेयुरुक्तनिगदं पठेयुरित्यर्थः । यथा लोके दोहनार्थं कांचिद्धेनुं तदीयवत्सप्रदर्शनेन समीपं प्रत्याह्वयते तद्वदेतद्द्रष्टव्यम् । एतेनाऽऽह्वानेन यजमानार्थं सर्वान्कामान्दुहे संपादयति ।

वेदनं प्रशंसति—

सर्वान्हास्मै कामान्वाग्दुहे य एवं वेद, इति ।

प्रश्नोत्तराभ्यां सुब्रह्मण्यां प्रशंसति—

तदाहुः किं सुब्रह्मण्यायै सुब्रह्मण्यात्वमिति वागेवेति ब्रूयाद्वाग्वै ब्रह्म च सुब्रह्म चेति, इति ।

तत्तत्र सुब्रह्मण्याख्ये निगदरूपे मन्त्रे नामनिमित्तं पृच्छन्ति । वागेवेति तदुत्तरम् । वाग्वा इत्यादि तदुपपादनम् । ब्रह्म वेदो वाग्वै वागात्मक एव । तस्मिन्नपि वेदे सुष्ठु ब्रह्म सारभूतं वेदवाक्यं तद्रूपेयं वाग्देवता । तस्मात्सारभूतस्य निगदस्य सुब्रह्मण्येति नामधेयम् । पुंलिङ्गशब्दाभिधेयस्य निगदस्य सुब्रह्मण्येति स्त्रीलिङ्गशब्देनाभिधानं वाग्रूपत्वविवक्षयेति ।

एतमर्थं प्रश्नोत्तराभ्यां दर्शयति—

तदाहुरथ कस्मादेनं पुमांसं सन्तं स्त्रीमिवाऽऽचक्षत इति वाग्घि सुब्रह्मण्येति ब्रूयात्तेनेति, इति ।

पुनरपि प्रश्नोत्तराभ्यां सुब्रह्मण्याह्वानस्य देशविशेषं निरूपयति—

तदाहुर्यदन्तर्वेदीतर ऋत्विज आर्त्विज्यं कुर्वन्ति बहिर्वेदि सुब्रह्मण्या कथमस्यान्तर्वेद्यार्त्विज्यं कृतं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भवतीति वेदेर्वा उत्करमुत्किरन्ति यदेवोत्करे तिष्ठ-न्नाह्वयतीति ब्रूयात्तेनेति, इति ।

अध्वर्युहोतृप्रभृतयः सर्वेऽप्यृत्विजो वेदिमध्य एवाऽऽर्त्विज्यं कुर्वन्ति । सुब्रह्मण्या वेदेर्बहिर्भागे सुब्रह्मण्याख्येन ऋत्विजाऽऽहूयते । तथा सति केन प्रकारेणास्य सुब्रह्मण्या( ण्य )नाम्न ऋत्विजो वेदिमध्य आर्त्विज्यं कृतं स्यादिति प्रश्नः । तस्येदमुत्तरम्--वेदेः सकाशादुत्करमुद्धर्तव्यं पांसुमुत्किरन्त्युद्धृत्य बाह्यदेशं वेदेरुत्तरभागे प्रक्षिपन्ति । तत्र कृतं सुब्रह्मण्याह्वानं वेदिमध्य एव कृतं भवेत् । यस्मादेव कारणादयं सुब्रह्मण्या(ण्य) उत्करदेशे तिष्ठन्सुब्रह्मण्यामाह्वयति तेन कारणेनेत्युत्तरवादिनो वचनम् ।

सुब्रह्मण्याह्वानस्योत्करदेशं विधाय पुनः प्रश्नोत्तराभ्यां प्रशंसति--

तदाहुरथ कस्मादुत्करे तिष्ठन्सुब्रह्मण्यामाह्वयतीत्यृषयो वै सत्रमासत तेषां यो वर्षिष्ठ आसीत्तमब्रुवन्सुब्रह्मण्यामाह्वय त्वं नो नेदिष्ठाद्देवान्ह्वयिष्यसीति वर्षिष्ठमेवैनं तत्कुर्वन्त्यथो वेदिमेव तत्सर्वां प्रीणाति, इति ।

आहवनीयदेशान्परित्यज्य सुब्रह्मण्याह्वानस्योत्करदेशस्वीकारे किं कारणमिति प्रश्नः । तस्येदमुत्तरम्--ऋषयो हि पुरा सत्रमासत । तेषामृषीणां मध्ये यो वर्षिष्ठोऽतिशयेन वृद्ध आसीत्तं प्रत्येवमब्रुवन् । हे महर्षे सुब्रह्मण्यामाह्वय नोऽस्माकं मध्ये त्वमेव नेदिष्ठाद्वयोवृद्धत्वेन देवलोकप्राप्तेः प्रत्यासन्नत्वे सत्यन्तिकतमत्वाद्देवान्ह्वयिष्यस्याह्वातुं समर्थोऽसि । एवमृषिभिरुक्तत्वादत्राप्युत्करदेशे तिष्ठन्तं सुब्रह्मण्याह्वानकर्तारमेनं वर्षिष्ठमेवातिशयेन वृद्धमेव कुर्वन्ति । उत्करस्य वेदिगतपांसुरूपत्वात्तत्सामीप्ये सति वेदिं सर्वां निरवशेषां प्रीणाति तोषयति ।

अथ सुब्रह्मण्याख्यस्यर्त्विजः समीपे दक्षिणात्वेन वृषभानयनं प्रश्नोत्तराभ्यां निरूपयति--

तदाहुः कस्मादस्मा ऋषभं दक्षिणामभ्याजन्तीति वृषा वा ऋषभो योषा सुब्रह्मण्या तन्मिथुनं तस्य मिथुनस्य प्रजात्या इति, इति ।

तत्तास्मिन्सुब्रह्मण्यस्य विषये प्रश्नमाहुः । तस्मै सुब्रह्मण्याय ऋषभं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दक्षिणां कृत्वाऽभ्याजन्ति समीपमानयन्ति तत्र किं कारणमिति प्रश्नाभिप्रायः । तस्येदमुत्तरम्—योऽयं दक्षिणात्वेन नीयमान ऋषभः सोऽयं वृषा वै सेचनसमर्थः पुरुषस्वरूप एव । सुब्रह्मण्या तु स्त्रीलिङ्गशब्दाभिधेयत्वाद्योपिद्रूपा। तदुभयं मिलित्वा मिथुनं भवति । तस्य मिथुनस्य प्रजात्यै प्रजोत्पादनार्थमृषभानयनमित्युत्तरवादिनोऽभिप्रायः ।

सुब्रह्मण्यस्य कर्तव्यमुक्त्वाऽऽग्नीध्रस्यर्त्विजः कर्तव्यं विधत्ते—

उपांशु पात्नीवतस्याऽऽग्नीध्रो यजति रेतो वै पात्नीवत उपांश्विव वै रेतसः सिक्तिः, इति ।

पात्नीवताख्यो यो ग्रहविशेषस्तस्य मन्त्र उपांशु शनैरुच्चार्याऽऽग्नीध्रो यजेत् । योऽयं पात्नीवतग्रहः स रेतसः स्वरूपम् । लोकेऽपि रेतसः सिक्तिः सेचनमुपांश्विव वै ध्वनिमन्तरेण रहस्येव क्रियतेऽतस्तत्साम्यार्थमुपांशुत्वं युक्तम् ।

अत्र पात्नीवतग्रहे सोमस्याग्ने वीहीत्येतमनुवषट्कारं निषेधति—

नानुवषट्करोति संस्था वा एषा यदनुवषट्कारो नेद्रेतः संस्थापयानीत्यसंस्थितं वै रेतसः समृद्धं तस्मान्नानुवषट्करोति, इति ।

सर्वत्र ग्रहेषु वषट्कारानुवषट्काराभ्यां हूयते । अत्र तु पात्नीवतग्रहे वषट्कारहोम एक एव न त्वितरः । तत्र हेतुः संस्था वा इत्यादिः । योऽयमनुवषट्कारोऽस्ति सोऽयं संस्था वै ग्रहस्य समाप्तिरेव । तथा सति स पात्नीवतग्रहरूपं रेतो नेत्संस्थापयानि सर्वथा समाप्तिं न करवाणीत्यभिप्रेत्य तत्समाप्तेर्भीतो भवेत् । असंस्थितमसमाप्तमनुपरतं रेतसः सेचनमपत्योत्पत्त्या समृद्धं भवति । तस्मादेव नानुवषट्कुर्यात् । तथा च यज्ञगाथां पठन्ति—

ऋतुयाजान्द्विदेवत्यान्यश्च पात्नीवतो ग्रहः ।
आदित्यग्रहसावित्रौ तान्स्म माऽनुवषट्कृथाः ॥ इति ।

अथ पात्नीवतग्रहभक्षणे देशं विधत्ते—

नेष्टुरुपस्थ आसीनो भक्षयति पत्नीभाजनं वै नेष्टाऽग्निः पत्नीषु रेतो दधाति प्रजात्या अग्निनैव तत्पत्नीषु रेतो दधाति प्रजात्यै, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



योऽयमाग्नीध्रः पात्नीवतं यजति सोऽयं नेष्टुरुपस्थे समीप आसीनः सं भक्षयेत् । नेष्टृनामक ऋत्विक्पत्नीभाजनं वै पत्नीस्थानीयः । नेष्टा पत्नीमुदानयत्येवं नेष्टृपत्न्योरानयनद्वारा संबन्धश्रवणात् । अतस्तत्समीपे भक्षणे सत्यग्निरूप आग्नीध्रः पत्नीषु रेतः स्थापयति । तत्र(च) प्रजननाय संपद्यते । तदेतेनानुष्ठानेन यजमानोऽप्यग्निनैवाग्न्यनुग्रहेणैव पत्नीषु रेतोऽवस्थापयति । तदीप्रजात्यै संपद्यते ।

वेदनं प्रशंसति—

प्रजायते प्रजया पशुभिर्य एवं वेद, इति ।

अथ सुब्रह्मण्याविषये कंचिद्विशेषं विधत्ते—

दक्षिणा अनु सुब्रह्मण्या संतिष्ठते वाग्वै सुब्रह्मण्याऽन्नं दक्षिणाऽन्नाद्य एव तद्वाचि यज्ञमन्ततः प्रतिष्ठापयन्ति प्रतिष्ठापयन्ति ॥ ३ ॥ इति ।

दक्षिणासु नीतासु ता दक्षिणा अनु पश्चात्सुब्रह्मण्या संतिष्ठते समाप्यते सुब्रह्मण्याया वाग्रूपत्वाद्दक्षिणायाश्चान्नरूपत्वादन्ततः समाप्तिवेलायामिमं यज्ञमन्नाद्ये वाचि द्वयोरेवैतयोः प्रतिष्ठापयन्ति प्रतिष्ठितं कुर्वन्ति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षड्विंशाध्याये तृतीयः खण्डः ॥ ३ ॥ [ १९० ] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
षड्विंशोऽध्यायः ॥ २६ ॥

---

## अथ सप्तविंशोऽध्यायः ।

---

ग्रावस्तोतोष्णीषसमावेष्टितमूर्धा
मन्त्रैरन्यैरर्बुदसूक्तं विपृणक्ति ।
कियत्यो वाऽभिष्टवनीयाः कथमेताः
सुब्रह्मण्याह्वानमितीह प्रवदन्ति ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ग्रावस्तुत्सुब्रह्मण्याख्ययोर्ऋत्विजोः कर्तव्यमुक्त्वा मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकनाम्नां होत्रकाणां शस्त्राणि विधातुमाख्यायिकामाह—

देवा वै यज्ञमतन्वत तांस्तन्वानानसुरा अभ्यायन्यज्ञवेशसमेषां करिष्याम इति तां(ता॑न्)दक्षिणत उपायन्यत एषां यज्ञस्य तनिष्ठममन्यन्त ते देवाः प्रतिबुध्य मित्रावरुणौ दक्षिणतः पर्यौहंस्ते मित्रावरुणाभ्यामेव दक्षिणतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना मित्रावरुणाभ्यामेव दक्षिणतः प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मान्मैत्रावरुणं मैत्रावरुणः प्रातःसवने शंसति मित्रावरुणाभ्यां हि देवा दक्षिणतः प्रातःसवनेऽसुररक्षांस्यपाघ्नते, इति ।

यदा देवा यज्ञमकुर्वत तदा तान्कुर्वाणान्देवानसुरा अभित आगच्छन् । असुरशब्देन रक्षांस्यप्युपलक्ष्यन्ते । एषां देवानां यज्ञवेशसं यज्ञविघातं करिष्याम इत्यसुराणामभिप्रायः । एषां देवानां संबन्धिनो यज्ञोपलक्षितस्य देवयजनदेशस्य यतो यस्मिन्दक्षिणदेशभागे तनिष्ठमतिशयेन तनुरूपमत्यन्तदुर्बलं स्थानमिदमित्यसुरा अमन्यन्त । सर्वेषामृत्विजामाहवनीयादिदेशेष्ववस्थितत्वेन संदसो दक्षिणभागे रक्षकाभावाद्दुर्बलस्थानमित्यसुराणां बुद्धिरासीत् । दक्षिणतस्तस्मिन्सदसो दक्षिणभागे तान्देवानसुरा उपायन्प्राप्तवन्तः । ते देवास्तस्कररूपेण समागतानसुरान्प्रतिबुध्य तस्मिन्दक्षिणतो मित्रावरुणौ द्वौ देवौ पर्यौहन्रक्षकत्वेनावस्थापितवन्तः । ततस्ते देवा मित्रावरुणाभ्यामेव धानुष्काभ्यामस्यन्तशूराभ्यां दक्षिणदेशे प्रातःसवनकाले तानसुरान्रक्षांसि चापाघ्नतापसारितवन्तः । तथैवेदानींतना अपि यजमानाः प्रातःसवनकाले दक्षिणदेशे मित्रावरुणाभ्यामेव देवाभ्यामसुरान्रक्षांसि चापसारयन्ति । तस्मादपसारणार्थं मित्रावरुणदेवताकं शस्त्रमा नो मित्रावरुणेत्यादिकं मैत्रावरुणाख्य ऋत्विक्प्रातःसवने शंसेत् । यस्माद्देवा मित्रावरुणाभ्यामपसारितवन्तस्तस्मान्मैत्रावरुणं शस्त्रं युक्तम् ।

१ ख. स देशो द° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उपाख्यानमुखेन मैत्रावरुणस्य शस्त्रं विधाय तथैव ब्राह्मणाच्छंसिनः श- विधत्ते—

ते वै दक्षिणतोऽपहता असुरा मध्यतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्रं मध्यतोऽदधुस्त इन्द्रेणैव मध्यतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतयजमाना इन्द्रेणैव मध्यतः प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मादैन्द्रं ब्राह्मणाच्छंसी प्रातःसवने शंसतीन्द्रेण हि देवा मध्यतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत, इति।

ते दक्षिणदेशादपसारिता असुराः प्राचीनवंशस्य सदसश्च मध्ये यज्ञं प्राविशन्। आयाहि सुषुमाहित इत्यादिकमिन्द्रदेवताकं शस्त्रम्। अन्यत् वद्व्याख्येयम्।

इदानीमच्छावाकस्य शस्त्रं विधत्ते—

ते वै मध्यतोऽपहता असुरा उत्तरतो यज्ञं प्राविशंस्ते देवाः प्रतिबुध्येन्द्राग्नी उत्तरतः पर्यौहंस्त इन्द्राग्निभ्यामेवोत्तरतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतयजमाना इन्द्राग्निभ्यामेवोत्तरतः प्रातःसवनेऽसुररक्षांस्यपघ्नते तस्मादैन्द्राग्नमच्छावाकः प्रातःसवने शंसतीन्द्राग्निभ्यां हि देवा उत्तरतः प्रातःसवनेऽसुररक्षांस्यपाघ्नत, इति।

इन्द्राग्नी आगतं सुतमित्यादिकमैन्द्राग्नं शस्त्रम्। अन्यत्पूर्ववद्व्याख्येयम्।

प्रातःसवनाभिमानी देवोऽग्निरित्येतमर्थं दर्शयति—

ते वा उत्तरतोऽपहता असुराः पुरस्तात्पर्यद्रवन्समनीकतस्ते देवाः प्रतिबुध्याग्निं पुरस्तात्प्रातःसवने पर्यौहंस्तेऽग्निनैव पुरस्तात्प्रातःसवनेऽसुररक्षांस्यपाघ्नत तथैवैतयजमाना अग्निनैव पुर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्तात्प्रातःसवनेऽसुररक्षांस्यपघ्नते
तस्मादाग्नेयं प्रातःसवनम्, इति ।

त इन्द्राग्निभ्यामुत्तरतोऽपसारिता असुराः समनीकतः संग्रामार्थं समीचीनसैन्यैर्युक्ताः पुरस्ताद्यज्ञभूमेः पूर्वस्यां दिशि पर्यद्रवन्परितः प्राप्ताः । ते देवाः प्रतिबुध्येत्यादि पूर्ववत् । यस्मात्पूर्वस्यां दिशि रक्षकोऽग्निस्तस्मादिदं प्रातःसवनमग्निसंबद्धं द्रष्टव्यम् ।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद, इति ।

प्रातःसवनाभिमानिनमग्निं प्रशस्य तृतीयसवनाभिमानिनो विश्वान्देवान्प्रशंसति—

ते वै पुरस्तादपहता असुराः पश्चात्परीत्य प्राविशंस्ते देवाः प्रतिबुध्य विश्वान्देवानात्मानं पश्चात्तृतीयसवने पर्यौहंस्ते विश्वैरेव देवैरात्मभिः पश्चात्तृतीयसवनेऽसुररक्षांस्यपाघ्नत तथैवैतद्यजमाना विश्वैरेव देवैरात्मभिः पश्चात्तृतीयसवनेऽसुररक्षांस्यपघ्नते तस्माद्वैश्वदेवं तृतीयसवनम्, इति।

अग्निना प्राच्या दिशोऽपसारिता असुरा रक्षांसि च प्रतीच्यां दिशि परितो गत्वा यज्ञभूमिं प्राविशन् । देवाश्च प्रतिबुध्य विश्वान्देवांस्तृतीयसवनवेलायां प्रतीच्यां दिशि रक्षार्थं प्रेषितवन्तः । आत्मानमिति । विश्वेषां देवानां विशेषेण ये प्रेरका देवास्तेषामात्मभूतान्स्वशरीरवदत्यन्तमाप्तान्विश्वान्देवानित्यर्थः । तैर्विश्वैर्देवैरितरदेवात्मभूतैरसुराणां तृतीयसवनेऽपहतत्वादिदं तृतीयसवनं वैश्वदेवम् ।

वेदनं प्रशंसति—

अप पाप्मानं हते य एवं वेद, इति ।

पुनरपि प्रदेशान्तरे प्रवेशशङ्कां वारयितुमसुराणां सर्वात्मना विनाशं दर्शयति—

ते वै देवा असुरानेवमपाघ्नत सर्वस्मादेव



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यज्ञात्ततो वै देवा अभवन्पराऽसुराः, इति ।

उक्तक्रमेण सर्वतोऽपसारितेष्वसुरेषु देवाः शत्रुरहिता अभवन् । असुराश्च पराभूताः ।

वेदनं प्रशंसति—

भवत्यात्मना पराऽस्य द्विषन्पाप्मा
भ्रातृव्यो भवति य एवं वेद, इति ।

आत्मना स्वेनैव रूपेण शत्रुरहितेन सुखी भवति । द्वेषी तु पाप्मा पराभवति ।

उपाख्यानमुपसंहरति—

ते देवा एवं कल्प्तेन यज्ञेनापासुरान्पा
प्मानमघ्नताजयन्स्वर्गं लोकम्, इति ।

एवं पूर्वोक्तप्रकारेण क्लृप्तेन मित्रावरुणादिभिर्दक्षिणादिदेशविशेषेषु रक्षितो यो यज्ञस्तेन पापरूपानसुरानपहत्य देवाः स्वर्गं लोकं प्राप्नुवन् ।

वेदनं तत्पूर्वकमनुष्ठानं च प्रशंसति—

अप ह वै द्विषन्तं पाप्मानं भ्रातृव्यं
हते जयति स्वर्गं लोकं य एवं वेद यश्चैवं
विद्वान्सवनानि कल्पयति ॥ ४ ॥ इति ।

सवनगतानां होत्रकाणां मैत्रावरुणादिशस्त्रसंपादनमेव सवनकल्पनम् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-
भाष्ये सप्तविंशाध्याये प्रथमः खण्डः ॥ १ ॥ ४ [१९१] ।

---

अथ तेषां होत्रकाणामहर्गणेषु शस्त्रेषु प्रकारविशेषं विधत्ते—

स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवनेऽ-
हरेव तदह्नोऽनुरूपं कुर्वन्त्यवरेणैव तदह्ना परमहरभ्या-
रभन्ते, इति ।

पृष्ठ्यषड(ड)हादिष्वहर्गणेषु बहून्यहानि विद्यन्ते । तेषु प्रातःसवने द्वितीं-

१ क. ख. °ना स्वेन स्वे° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्याह्नो यः स्तोत्रियस्तृचस्तं तृचं प्रथमेऽहनि स्तोत्रियस्य तृचस्यानुरूपं र्युः। सामगा यस्मिंस्तृचे स्तोत्रं कुर्वन्ति स तृचः स्तोत्रियः। तस्य स्तोत्रि-स्य च्छन्दोदेवतादिना सदृशोऽन्यो यस्तृचः सोऽनुरूपः। तथा सति सर्वे-हःस्वेकैकस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति ते सर्वे तृचाः स्तोत्रियाः। त्र सर्वत्रोत्तरादिनगतं स्तोत्रियं पूर्वदिने स्तोत्रियस्यानन्तरभाविनमनुरूपं र्यात्। अयं च नियमो होत्रकाणां शस्त्रेषु प्रातःसवने द्रष्टव्यः। एवं सत्युत्त-महरेव पूर्वस्याह्नो रूपं कुर्वन्ति। तत्तथा सत्यनन्तरेणैवातीतेनैव पूर्वेणाह्ना पर-त्तरमहरभिमुखीकृत्याऽऽरभन्त उपक्रमन्ते।

माध्यंदिनसवनेऽप्यस्य न्यायस्य प्रसक्तौ तं निषेधति—

**अथ तथा न मध्यंदिने श्रीर्वै पृष्ठानि तानि तस्मै न तत्स्थानानि यत्स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्युः, इति।**

अथ प्रातःसवनानन्तरं माध्यंदिने तथा न तेन पूर्वोक्तप्रकारेण न कुर्या-दिति शेषः। तत्र हेतुः—श्रीर्वै पृष्ठानीति। यानि मध्यंदिनसवने पृष्ठस्तो-त्राणि तानि श्रीर्वै संपद्रूपाण्येव। श्रीरूपत्वेन सामगैः स्तुतत्वात्। न हि श्रीरूपाणां स्वतन्त्राणामन्यानुवृत्तित्वलक्षणमनुरूपत्वं युक्तम्। तस्माच्चानि पृष्ठ-स्तोत्राणि तस्मै तस्मिं माध्यंदिने सवने तत्स्थानानि प्रातःसवनस्थानानि न भवन्ति। तत्सदृशानि न भवन्तीत्यर्थः। प्रातःसवने ह्युत्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्तोत्रियस्यानुरूपं कुर्वन्ति। यद्यस्मात्कारणादत्रापि तथा कुर्युस्ता-दृशं कारणं नास्ति तुल्यच्छन्दस्त्वादीनामभावात्। तस्मात्पृष्ठस्तोत्राणां पूर्वो-त्तरदिनेषु सादृश्याभावात्प्रातःसवनन्यायोऽत्र न घटते।

माध्यंदिनसवनन्यायं तृतीयसवनेऽतिदिशति—

**तथैव विभक्त्या तृतीयसवने न स्तोत्रियं स्तोत्रि-यस्यानुरूपं कुर्वन्ति ॥ ५ ॥ इति।**

विभक्तिशब्दः प्रकारवाची। तेनैव माध्यंदिनोक्तप्रकारेण तृतीयसवनेऽप्यु-त्तरदिनगतं स्तोत्रियं पूर्वदिनगतस्य स्तोत्रियस्यानुरूपं न कुर्वन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्म-णभाष्ये सप्तविंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (५) [१९२]।

---

१ ट. °दिनस्तो°। २ ख. °स्मिन्मध्यं°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



होत्रकाणां स्तोत्रियानुरूपमुक्त्वाऽऽरम्भणीया ऋचो विधत्ते—

अथात आरम्भणीया एव, इति।

अथ स्तोत्रियानुरूपानन्तरं यस्माच्छस्त्रस्योत्तरभाविन आरम्भो युक्तोऽतोऽस्मात्कारणादारम्भणीया ऋचो विधीयन्ते। एवकारोऽहर्गणेषु चोदकप्राप्ताया ऋचो व्यावृत्त्यर्थः।

तत्र मैत्रावरुणाख्यस्य होत्रकस्याऽऽरम्भणीया(यां) दर्शयति—

ऋजुनीती नो वरुण इति मैत्रावरुणस्य मित्रो नयतु विद्वानिति प्रणेता वा एष होत्रकाणां यन्मैत्रावरुणस्तस्मादेषा प्रणेतृमती भवति, इति।

ऋजुनीतीत्यस्यामृचि मित्रो नयत्विति द्वितीयः पादः। तत्र नयत्विति प्रणेतृवाचकं पदं दृश्यते। मैत्रावरुणश्च होत्रकाणां प्रणेता प्रवर्तकस्तस्मादेषा प्रणेतृवाचि(च)कशब्दवती भवति, तच्च युक्तमित्यर्थः।

अन्यस्याऽऽरम्भणीयं(यां) विधत्ते—

इन्द्रं वो विश्वतस्परीति ब्राह्मणाच्छंसिनो हवामहे जनेभ्य इतीन्द्रमेवैतयाऽहरहर्निह्वयन्ते, इति।

इन्द्रं व इत्यस्यामृचि हवामह इति द्वितीयः पादः। तत्राऽऽह्वानवाचिनः शब्दस्य विद्यमानत्वादेतयर्चा प्रतिदिनमिन्द्रं नितरामाह्व(ह्व)यन्ते।

वेदनं प्रशंसति—

न हैषां विहवेऽन्य इन्द्रं वृङ्क्ते यत्रैवं विद्वान्ब्राह्मणाच्छंस्येतामहरहः शंसति, इति।

एवं विद्वानिन्द्राह्वानप्रतिपादिकेयमृगिति विद्वान्यत्र शंसति तस्मिन्नेषां यजमानानां संबन्धिनि विहवे विशेषेणाऽऽह्वानयुक्ते यज्ञेऽन्यः कश्चिच्छत्रुरिन्द्रं न ह नैव वृङ्क्ते वर्जयत्येतदीये यज्ञ इन्द्रागमनं निराकर्तुं न शक्नोतीत्यर्थः।

अन्यस्याऽऽरम्भणीयां विधत्ते—

यत्सोम आ सुते नर इत्यच्छावाकस्येन्द्राग्नी अजोहवुरितीन्द्राग्नी एवैतयाऽहरहर्निह्वयन्ते न हैषां

---

ऋजुनीती नो वरुणः०—१–९०–१। इन्द्रं वो विश्वतस्परि०—१–८–१०। यत्सोम आ सुते नरः०—७-९४–१०।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


विह्वेऽन्य इन्द्राग्नी वृङ्क्ते यत्रैवं विद्वानच्छावाक एतामहरहः शंसति, इति ।

यत्सोम इत्यस्यामृचीन्द्राग्नी इति द्वितीयः पादः । अजोहवुरिति होमार्थ आह्वानार्थो वा धातुः । अन्यत्पूर्ववद्व्याख्येयम् ।

उक्तानामारम्भणीयानामृचां त्रयं प्रशंसति—

ता वा एताः स्वर्गस्य लोकस्य नावः संपारिण्यः स्वर्गमेवैताभिर्लोकमभिसंतरन्ति ॥ ६ ॥ इति ।

ताः पूर्वोक्ता ऋजुनीती इन्द्रं वो यत्सोम इत्येतास्तिस्रः स्वर्गप्राप्तये नौस्थानीयाः सम्यक्पारं नयन्तीति संपारिण्यः । यथा नावा नदीं तरति तथैताभिर्ऋग्भिः स्वर्गं लोकमभिलक्ष्य नदीस्थानीयं प्रौढं मार्गं सम्यक्तरन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तविंशाध्याये तृतीयः खण्डः ॥ ३॥ (६) [१९३] ।

---

होत्रकाणां शस्त्रारम्भणसाधनभूता ऋचो विधाय समाप्तिसाधनभूता ऋचो विधत्ते—

अथातः परिधानीया एव, इति ।

अथ शस्त्रमारम्भानन्तरं यस्मात्परिधानं समापनमपेक्षितं तस्मात्परिधानीया ऋचो विधीयन्ते । एवकारः प्रकृतव्यावृत्त्यर्थः ।

एकस्य स्तोत्रकस्य परिधानीयां विधत्ते—

ते स्याम देव वरुणेति मैत्रावरुणस्येषं स्वश्च धीमहीत्ययं वै लोक इषमित्यसौ लोकः स्वरित्युभावेवैतया लोकावारभन्ते, इति ।

ते स्यामेत्यस्यामृचीषं स्वश्चेति तृतीयः पादः । तत्रेषमित्यनेन पदेनाभीष्टत्वादयं लोको विवक्षितः । स्वरित्यनेन पदेनासौ स्वर्गलोकः । तथा सति लोकद्वयं धीमहि ध्यायेमेति मन्त्रेऽभिधानादेतयर्चा द्वावपि लोकावारभन्ते प्राप्नुवन्ति ।

---

ते स्याम देव वरुण०—७—६६—९ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अन्यस्य परिधानीयां विधत्ते—

व्यन्तरिक्षमतिरदिति ब्राह्मणाच्छंसिनो विवत्तृचं स्वर्गमेवैभ्य एतया लोकं विवृणोति, इति ।

यस्मिंस्तृचे व्यन्तरिक्षमित्यृगेषा श्रूयते सोऽयं विशब्दत्वाद्विवत्तृचशब्दे धीयते। तेन तृचेन साध्यो यः स्वर्गो लोकस्तमेतया व्यन्तरिक्षमित्यृचा मानेभ्यो विवृणोति विवृतद्वारं करोति ।

तस्यामृचि द्वितीयतृतीयपादौ पठति—

मदे सोमस्य रोचना । इन्द्रो यदभिनद्वलमिति, इति ।

तस्या ऋचोऽयमर्थः । इन्द्रो देवः सोमस्य रोचना रुचिं प्राप्येति सतो मदे हर्षे सत्यन्तरिक्षं व्यतिरत् विशेषेण यजमानानां गमनयोग्यं रोत । यद्यस्मात्कारणाद्वलनामानमसुरमभिनद्विदारितवांस्तस्मादन्तरि सुगमः ।

अत्र वलभेदनमभिप्रेत्य तामृचं प्रशंसति—

सिषासवो वा एते यद्दीक्षितास्तस्मादेषा वलवती भवति, इति ।

ये दीक्षिताः सन्ति ते सिषासवो लुब्धकामाः फलार्थिनस्तस्मात्कार गेषा वलवती वलनामकासुरभेदप्रतिपादिका कर्तव्या भवति ।

यद्यपीयमृक्परिधानीया न भवति तथाऽप्येतदादिके तृचेऽन्ति ऋचः परिधानीयात्वात्तत्प्रदर्शनाय तृच उपक्रान्तस्तस्मिन्प्रथमामृचं व्याख्याय द्वितीयामृचमनूद्य व्याचष्टे—

उद्गा आजदङ्गिरोभ्य आविष्कृण्वन्गुहा सतीः । अर्वाञ्चं नुनुदे वलमिति सनिमेवैभ्य एतयाऽवरुन्धे, इति ।

अङ्गिरोभ्यो महर्षिभ्यः सतीर्विद्यमाना गा उदाजदूर्ध्वं प्रेरितवान् कुर्वन्गुहा वलस्यासुरस्य संबन्धि गूढं स्थानमाविष्कृण्वन्प्रकटीकुर्वन् । अर्वाञ्चं मतिनीचं वलनामकमसुरं नुनुदे विनाशितवान् । अयमर्थः । वलनाम कश्चिदसुरो महर्षीणां गा अपहृत्य कस्मिंश्चिद्बिलेऽवस्थाप्य पाषाणेन पि

व्यन्तरिक्षमतिरत्०—८—१४—७ । उद्गा आजदङ्गिरोभ्यः०—८—१४—८।

१ ख. 'शब्दाद्वि' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्वारमाच्छाद्यावस्थितस्तं वृत्तान्तमिन्द्रोऽवगत्य गुहाद्वारमुद्घाट्य वलनामानमसुरमपनुद्य तत्रावस्थिता महर्षीणां गा विलादुद्धृत्य महर्षिभ्यो दत्तवानिति । अयमर्थः शाखान्तरे विस्पष्टमाम्नायते—'इन्द्रो वलस्य बिलमपौर्णोत् । स य उत्तमः पशुरासीत् । तं पृष्ठं प्रतिसंगृह्योदक्खिदत्तं सहस्रं पशवोऽनूदायन्स उन्नतोऽभवत्' इति । एतया तृचगतया द्वितीययर्चा सनिमेव लाभमेवैभ्योऽवस्तंये संपादयति ।

अथ तृतीयामृचं परिधानीयां विवक्षुः प्रथमपादमनूद्य व्याचष्टे—

**इन्द्रेण रोचना दिव इति स्वर्गो वै लोक इन्द्रेण रोचना दिवः, इति ।**

दिवः स्वर्गविशेषा इन्द्रेण देवेन रोचना रोचमाना दीप्तियुक्ताः कृता इति शेषः । अनेन पादेन स्वर्गलोकवर्णनं विवक्षितम् । इन्द्रेणेत्यादिकस्यार्थस्य तत्र विद्यमानत्वात् ।

द्वितीयतृतीयपादावनुवदति—

**दृह्ळानि दृंहितानि च । स्थिराणि न पराणुद इति, इति ।**

तस्मिन्स्वर्गे यानि दृह्ळानि प्रकाशरूपाणि नक्षत्राणि यानि च पूर्वमदृढान्यपि दृंहितानीन्द्रेण दृढीकृतानि तानि सर्वाण्यपि स्थिराणि कृत्वा न पराणुद इन्द्रो न विनाशितवान् ।

**स्वर्ग एवैतया लोकेऽहरहः प्रतितिष्ठन्तो यन्ति, इति ।**

अस्यामृचि स्थिराणां स्वर्गस्थानानां नक्षत्रादिशरीराणां श्रूयमाणत्वादेतयर्चा परिधाने सति प्रतिदिनं स्वर्ग एव लोके प्रतिष्ठां प्राप्तवन्तो यन्ति वर्तन्ते ।

अन्यस्य परिधानीयां विधत्ते—

**आऽहं सरस्वतीवतोरित्यच्छावाकस्य वाग्वै सरस्वती वाग्वतोरिति हैतदाहेन्द्राग्न्योरवो वृण इत्येतद्ध वा इन्द्राग्न्योः प्रियं धाम यद्वागिति प्रियेणैवैनौ तद्धाम्ना समर्धयति, इति ।**

इन्द्रेण रोचना दिवः०—८–१२–९ । आऽहं सरस्वतीवतोः०—८–३८–१० ।

१ ख. °तु । मय उ° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



आऽहमित्यादिः प्रथमः पाद इन्द्राग्न्योरित्यादिर्द्वितीयः पादः। तस्यार्थं स्यायमर्थः। अहमनुष्ठाता सरस्वतीवतोः सरस्वतीयुक्तयोरिन्द्राग्न्योर्देवयोः संबन्धि यदवः सुरक्षितं स्थानमस्ति तदावृणे सर्वतः प्रार्थयति। अत्र प्रथमपादे सरस्वतीशब्देन वेदशास्त्रस्वरूपा वागेव विवक्षिताऽतः सरस्वतीवतोरित्येवंरूपो मन्त्रो वाग्वतोरित्येतमेवार्थमाह। द्वितीयपादे त्ववःशब्देन सुरक्षितमिन्द्राग्निदेवतयोर्यत्प्रियं धाम विवक्षितं तद्वाग्रूपमेव। वाग्व्यवहारे तयोरत्यन्तप्रीतिमत्त्वात्। तस्मादेतामृचं पठन्नेव त्विन्द्राग्नी प्रियेणैव धाम्ना स्थानेनैव समर्धयति समृद्धौ करोति।

वेदनं प्रशंसति—

प्रियेण धाम्ना समृध्यते य एवं वेद ॥ ७ इति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तविंशाध्याये चतुर्थः खण्डः॥४॥ (७) [१९४]।

———

अथ परिधानीयां स्तोतुमुपक्रमते—

उभय्यः परिधानीया भवन्ति होत्रकाणां प्रातःसवने च माध्यंदिने चाहीनाश्चैकाहिकाश्च, इति।

होत्रकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां सवनद्वये परिधानीया द्विविधा भवन्ति। कथं तदुच्यते। अहीना अहर्गणेषु विहिता ऐकाहिका एकाहे प्रकृतिरूपे विहिता इत्येवं द्वैविध्यम्।

तत्र होत्रकविशेषस्य परिधानीयाविशेषं दर्शयति—

तत ऐकाहिकाभिरेव मैत्रावरुणः परिदधाति तेनास्माल्लोकान्न प्रच्यवते, इति।

ततस्तासूभयविधासु मैत्रावरुणाख्यर्त्विगैकाहिकाभिरेव परिदध्यात्। ते स्याम देव वरुणेति प्रकृतौ प्रातःसवने मैत्रावरुणस्य परिधानीया विहिता। माध्यंदिनसवने नू ष्टुत इन्द्र नू गृणान इत्येषा विहिता। अहीने विकृतिरूपेऽपि सवनद्वये तदेव परिधानीयाद्वयं मैत्रावरुणस्य द्रष्टव्यम्। कथमिति तदुच्यते। अहर्गणस्य प्रातःसवने हि मैत्रावरुणस्य प्रति वां सूर उदित इत्यस्य पर्यायतृचस्यान्त्या ते स्याम देव वरुणेत्येषा परिधानीया। ऐकाहिकाभि

१ ख. °स्याय°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सैव परिधानीया भवति । तथा हि । प्रकृतौ मैत्रावरुणस्य प्र मित्रयोर्वरुणयोरिति नवाऽऽयातं मित्रावरुणेति याज्येति सूत्रकारवचनान्नवानामन्त्या सैवेत्यैकाहिकाभिरेव मैत्रावरुणः परिदधातीत्येतदुपपन्नं भवति । तथा माध्यंदिनसवनेऽप्या सत्यो यात्वित्यहीनसूक्तमिति वक्ष्यति । याऽहीनसूक्तान्त्या साऽहीनस्य तत्र परिधानीया। अहीनसूक्तान्तं हि माध्यंदिनसवने मैत्रावरुणशस्त्रं तस्य नू ष्टुत इन्द्र नू गृणान इत्येषाऽन्त्या । तथा प्रकृतावपि सैव परिधानीया। तथा हि । कया नश्चित्र आभुवत्कया त्वं न ऊत्या कस्तमिन्द्र त्वा वसुं सद्यो ह जात एवा त्वामिन्द्रोशन्नु पु णः सुमना उपाक इति याज्येति सूत्रकारवचनादेवा त्वामिन्द्र वज्रिन्नत्रेत्येतस्यैकादशर्चस्यान्त्या नू ष्टुत इन्द्र नू गृणान इत्येषैवेति मैत्रावरुणस्य प्रातःसवने माध्यंदिनसवने चैकाहिकाभिः परिधानमुपपन्नं भवति । ऐकाहिकाभिरेवेत्येवकारोऽन्यशङ्काव्यावृत्त्यर्थः । या ऐकाहिकाः परिधानीयास्ता एव चाहर्गणे मैत्रावरुणस्य परिधानीया न त्वन्या इत्यर्थः। यद्यपि मैत्रावरुणस्य प्रकृतौ सवनयोरुभयोर्द्वे एव परिधानीये तथाऽपि प्रयोगबहुत्वापेक्षमैकाहिकाभिरिति बहुवचनम् । तेन मैत्रावरुणस्य प्रकृतिविकृत्योः परिधानीयाभेदराहित्येनायं मैत्रावरुणोऽस्माल्लोकात्कदाचिदपि न प्रच्यवते ।

मैत्रावरुणस्य प्रकृतिविकृत्योः परिधानीयामेकामुक्त्वाऽच्छावाकस्य प्रकृतिविलक्षणं सवनद्वये परिधानीयाद्वयं दर्शयति—

**अहीनाभिरच्छावाकः स्वर्गस्य लोकस्याऽऽप्त्यै, इति ।**

योऽयमच्छावाकः सोऽयमहीनगताभिर्ऋग्भिः परिदध्यान्न त्वैकाहिकाभिः । तथा हि । आऽहं सरस्वतीवतोरित्यच्छावाकस्येति पूर्वस्मिन्खण्डे विहितत्वात्प्रातःसवन एषाऽहर्गणसंबन्धिनी परिधानीया । ऐकाहिके तु गोमद्धिरण्यवदित्येषैव परिधानीया माध्यंदिनेऽच्छावाकस्य नूनं सा त इत्यहर्गणगता परिधानीया । एकाहे तु शुनं हुवेमेति मध्यंदिने परिधानीया । एवं सत्यच्छावाकस्यैकाहिकपरिधानीयापरित्यागेनोपरितनस्याहर्गणस्य संबन्धिन्याः परिधानीयायाः स्वीकार उपरि च स्वर्गलोकप्राप्त्यै संपद्यते ।

अथ ब्राह्मणाच्छंसिनः परिधानीयां( या ) दर्शयति—

**उभयीभिर्ब्राह्मणाच्छंसी तेनो स उभौ व्यन्वारभमाण एतीमं चामुं च लोकमथो मैत्रावरुणं चाच्छा-**

---

१ क. ख. झ. ट. 'न्यत्र श' ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वाकं चाथो अहीनं चैकाहं चाथो संवत्सरं चाग्नि-
ष्टोमं चैवमु स उभौ व्यन्वारभमाण एति, इति।

योऽयं ब्राह्मणाच्छंसी सोऽयमुभयविधाभिरैकाहिकाभिरही[न]
ऋग्भिः परिदध्यात्। प्रातःसवने प्रकृतौ स न इन्द्रः शिवः सखेति
नीया। विकृतौ तु इन्द्रेण रोचना दिव इति पूर्वखण्डेऽभिहिता। माध्
वने प्रकृतौ विकृतौ चैवेदिन्द्रं वृषणं वज्रबाहुमित्येकैव परिधानीया।
सत्यस्य ब्राह्मणाच्छंसिनः प्रातःसवनेऽच्छावाकसाम्यं माध्यंदिने स
वरुणसाम्यं संपन्नम्। तेनो तेनैवैकाहिकाहीनगतोभयविधशंसनेनैव
णाच्छंसी भूलोकस्वर्गलोका उभावपि व्यन्वारभमाणो विविधं
गच्छति वर्तत इत्यर्थः। प्रातःसवने प्रकृतिविकृत्योः परिधानीयावि
श्लोकद्वयस्य पृथगेव स्पर्शः। माध्यंदिनसवने प्रकृतिविकृत्योः परिधा
श्लोकद्वयस्य सहस्पर्श इत्येवं विविधस्पर्शो व्यन्वारम्भणशब्देन वि
अथो अपि चायं ब्राह्मणाच्छंसी मैत्रावरुणं चाच्छावाकं चोभावृत्विजौ
रभमाण एति विविधमुपस्पृशन्वर्तते। कथमिति तदुच्यते। यथा मैत्राव
प्रकृतिविकृत्योः परिधानीयैक्यं तथा ब्राह्मणाच्छंसिनोऽपि माध्यं
तदैक्यम्। यथाऽच्छावाकस्य प्रकृतिविकृत्योः परिधानीयावैलक्षण्यं
णाच्छंसिनः प्रातःसवने तद्वैलक्षण्यमिति। मैत्रावरुणाच्छावाकविषयो
धस्पर्शस्तथैवाहीनैकाहविषयेऽपि विविधस्पर्श ऊहनीयः। कथमिति
प्रातःसवनेऽहीनैकाहयोर्वैलक्षण्येन स्पर्शः। माध्यंदिने सवने साह
इत्युभयविधत्वम्। तथा संवत्सरं गवामयनमूलप्रकृतिपूर्वमग्निष्टोमं च
स्पृशति। अहीनैकाहस्पर्शवदेतदुभयस्पर्शस्य योजनीयत्वात्।

इत्थं होत्रकाणां सवनद्वयगताः परिधानीयाः प्रशस्य तृतीयसवनग
धानीयाः प्रशंसति—

अथ तत ऐकाहिका एव तृतीयसवने होत्रकाणां
परिधानीया भवन्ति प्रतिष्ठा वा एकाहः प्रति-
ष्ठायामेव तद्यज्ञमन्ततः प्रतिष्ठापयन्ति, इति।

एकाहे मूलप्रकृतौ ज्योतिष्टोमे होत्रकाणां या एव परिधानीयास्ता
गणे तृतीयसवने द्रष्टव्याः। तथा हि। आवां राजानाविति नित्यमेका
वचनान्मैत्रावरुणस्याऽऽवां राजानाविति सूक्तस्यान्त्या परिधानीया

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तथा ब्राह्मणाच्छंसिनोऽप्यच्छा म इन्द्रमिति नित्यमैकाहिकमिति वचनादच्छा म इन्द्रमिति सूक्तस्यान्त्या परिधानीया भवति । तथाऽच्छावाकस्य ऋजुर्जनित्रीति नित्यान्यैकाहिकानीति वचनात्सं वां कर्मणेति सूक्तस्यान्त्या परिधानीया भवति । योऽयमेकाहः स मूलप्रकृतित्वात्प्रतिष्ठा सर्वासां विकृतीनामाधारः । अतस्तैनैकाहिका(क)परिधानीयाशंसनेन यज्ञमन्ततोऽवसानकाले प्रतिष्ठायां सर्वाधारे प्रतिष्ठापयन्ति ।

इत्थं परिधानीयाः प्रशस्य प्रातःसवनगतानां याज्यादीनां मध्येऽवसानाभावं विधत्ते—

**अनवानं प्रातःसवने यजेत्,** इति ।

अनवानमनुच्छ्वासो मध्ये यथा भवति तथा याज्यां पठेत् ।

स्तोमवृद्धौ नियमविशेषं विधत्ते--

**एकां द्वे न स्तोममतिशंसेत्तद्यथाऽभिहेषते पिपासते क्षिप्रं प्रयच्छेत्तादृक्तदथो क्षिप्रं देवेभ्योऽन्नाद्यं सोमपीथं प्रयच्छानीति क्षिप्रं हास्मिँल्लोके प्रतितिष्ठति,** इति ।

त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिण(न)वत्रयस्त्रिंशादयः स्तोमा विहिताः । विहितस्य सप्तदशस्तोमस्य विवृद्ध्याऽष्टादशादिस्तोमा निष्पाद्यन्ते । तथा विहितस्यैकविंशस्य विवृद्ध्या द्वाविंशादयः स्तोमाः संपद्यन्ते । अनेनैव दृष्टान्तेन शंसनेऽप्याधिक्यं प्रसक्तम् । यथा वाव स्तोत्रमेवं शस्त्रमिति न्यायात् । स त(न्त्व)त्र प्राकृताः स्तोमाः स्तोमे वर्धमाने सति तां स्तोमगतामृक्संख्यामतिक्रम्य शंसनं तदातिशंसनं यदा क्रियते तदानीमेकस्या द्वयोर्वा ऋचोरभ्यनुज्ञा ने(न) त्वधिकानामृचानाम् । अक्षरार्थस्तु—यदा स्तोममतिशंसेत्स्तोमसंख्यामतिक्रम्य शंसनं कुर्यात्तदानीमेकां द्वे वाऽतिक्रम्य [न] शंसेत् । किंत्वेकयैव वा द्वाभ्यामेव वाऽतिशंसेत् । तथा च सूत्रकार आह—'अतिशंसनमेकया द्वाभ्यां वा प्रातःसवने' इति । ततोऽधिकानां शंसनाभावे युक्तिर्दृष्टान्तमुखेनोच्यते । तत्रायं दृष्टान्तोऽवगन्तव्यः । यथा लोकेऽभिहेषते घासार्थमाभिमुख्येन हेषाशब्दं कुर्वतेऽश्वाय पिपासतेऽत्यन्तं तृषार्ताय पुरुषोऽन्नाद्यं पानीयं क्षिप्रं प्रयच्छेत्तादृगेव तद्दग्बाहुल्याभावेनातिशंसनम् । अथो अपि च क्षिप्रमेव देवेभ्यः सोमपानरूपमन्नाद्यं प्रयच्छती(च्छानी)त्यभिप्रेत्य ऋग्बाहुल्येन विलम्बमकृत्वैकया द्वाभ्यां वाऽतिशंसनं कुर्यात् । तथा सति क्षिप्रं शीघ्रमेवास्मिँल्लोके प्रतिष्ठितो भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सवनान्तरयोरुक्तवैपरीत्यं विधत्ते—

अपरिमिताभिरुत्तरयोः सवनयोरपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याऽऽप्त्यै, इति ।

इयत्य एवेत्येवं नियमरहिताभिर्बह्वीभिर्ऋग्भिरतिशंसनं सवनद्वये कु स्वर्गस्य लोकस्येयत्तारहितत्वात् । [ स्वर्ग ]प्राप्त्यर्थमिदमतिशंसनं सं यत्रातिशंसनं कर्तव्यं भवति तत्र तदर्थमृचामागमनं कर्तव्यम् ।

तासामृचां देशविशेषं दर्शयति—

कामं तद्धोता शंसेयद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः प्राणो वै होताऽङ्गानि होत्रकाः समानो वा अयं प्राणोऽङ्गान्यनुसंचरति तस्मात्त-त्कामं होता शंसेयद्धोत्रकाः पूर्वेद्युः शंसेयुर्यद्वा होता तद्धोत्रकाः, इति ।

अहर्गणेषु वर्तमानादिनात्पूर्वेद्युर्मैत्रावरुणादयो होत्रका यत्सूक्तं शंसेयु सूक्तं परेद्युर्होता काममविशङ्क्यैव शंसेत् । यदि होतुरतिशंसनं प्रसक्तं त पूर्वेद्युर्होत्रकैः शस्तात्सूक्तादृच आनेतव्याः । यदि तु होत्रकाणामतिशंसनं तदानीं पूर्वेद्युर्होता यत्सूक्तं शंसति तस्मात्सूक्ताद्धोत्रकैरपेक्षिता ऋचं व्याः । होतुः प्राणस्थानीयत्वाद्धोत्रकाणां हस्तपादाद्यवयवस्थानीयत्वात्प सूक्तादृगानयने सत्ययं प्राणः सर्वेष्ववयवेषु पक्षपातमन्तरेण तुल्य एवा रति । तस्मा[त्त]त्काममित्युक्तार्थोपसंहारः ।

इत्थं परिधानीयाप्रसङ्गेन वृद्धिस्थयाज्याया अनवानत्वमतिशंसनं च याथ प्रकृतामेव परिधानीयास्तुतिमनुसरति—

सूक्तान्तैर्होता परिदधदेत्यथ समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्त्यात्मा वै होताऽङ्गानि होत्रकाः समाना वा इमेऽङ्गानामन्तास्तस्मात्समान्य एव तृतीयसवने होत्रकाणां परिधानीया भवन्ति भवन्ति ॥ ८ ॥ इति ।

सूक्तानामन्तिमा ऋचः सूक्तान्तास्ताभिर्ऋग्भिर्होता परिदध

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कुर्वन्नतिवर्तते । अथ होतुरनन्तरं होत्रकाणामुच्यते । तेषां तृतीयसवने परिधानीयाः समान्यस्तुल्या एव भवन्ति । एकाहे याः परिधानीयास्ता एवाहर्गणेषु भवन्ति । तथा च पूर्वमुक्तम्—'ऐकाहिका एव तृतीयसवने' इति । तदेवात्र होत्रा सह प्रशंसार्थमनूद्यते । योऽयं होता सोऽयमात्मा वै देह एव। होत्रकास्तु हस्तपादाद्यवयवाः । तेषां च हस्तादीनामन्ताः समानास्तुल्या एव दृश्यन्ते । दक्षिणहस्तस्यान्तो यादृशः पञ्चाङ्गुल्युपेतस्तादृश एव वामहस्तस्यान्तोऽपि । एवं पादयोः स्तनकर्णादियुग्मयोस्तुल्यान्तत्वं द्रष्टव्यम् । तस्मात्समान्य इत्युपसंहारः । पदाभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तविंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (८) [१९५] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अथाष्टाविंशोऽध्यायः ।

---

प्रातःसवने होत्रकशस्त्राण्यनुरूपो
यस्मिन्नेव स्तुवने(?) स्तोत्रिय एषः ।
आरम्भाद्या आहवनीयाः परिधाया-
वृद्धे स्तोमे स्यादतिशंसार्थतृचश्च ॥

अथोन्नीयमानसूक्तानि विधातुमुपक्रमते—

**आ त्वा वहन्तु हरय इति प्रातःसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धाः, इति ।**

यदा चमसा उन्नीयन्ते सोमेन पूर्यन्ते तदानीमध्वर्युणा प्रेषितो मैत्रावरुण आ त्वा वहन्त्विति सूक्तमनुब्रूयात् । तस्मिन्सूक्ते स्थिता ऋचो वृषशब्देन पीतशब्देन सुतशब्देन मदशब्देन च युक्ताः । तच्च(त्र) द्वितीयपादे वृषणं सोमपीतये इति वृषशब्दपीतशब्दौ विद्येते । चतुर्थ्यामृचि सुते हि त्वा हवामहे इति श्रवणात्सुतशब्दो विद्यते । अष्टमायामृचीन्द्रो मदाय गच्छतीति मदशब्दो

आ त्वा वहन्तु हरयः०—१-१६-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विद्यते। यद्यप्येते शब्दाः सर्वास्वृक्षु न सन्ति तथाऽपि क्वचिच्छ्रवणात्सर्वा अपि च्छत्रिन्यायेन तैः शब्दैर्युक्ता भवन्ति। वर्षणक्षम इन्द्रः सोमं पीत्वा माद्यतीत्यस्यार्थस्योक्तशब्दचतुष्टयेन प्रतीयमानत्वाद्विवक्षितार्थानुकूल्येन रूपसमृद्धत्वम्।

देवताद्वारा ता ऋचः प्रशंसति—

ऐन्द्रीरन्वाहैन्द्रो वै यज्ञः, इति।

इन्द्र त्वा सूरचक्षस इन्द्रं सुखतमे रथ इति श्रवणादिन्द्रदेवताका ऋचः सोमयागश्चेन्द्रदेवताकोऽतस्तत्र ता युज्यन्ते।

छन्दोद्वारा प्रशंसति—

गायत्रीरन्वाह गायत्रं वै प्रातःसवनम्, इति।

प्रातःसवनस्य गायत्रीछन्दस्कत्वात्तच्छन्दस्का ऋचस्तत्र योग्याः।

ऋक्संख्याद्वारा प्रशंसति—

नव न्यूनाः प्रातःसवनेऽन्वाह न्यूने वै रेतः सिच्यते, इति।

माध्यंदिनसवने दशसंख्याका वक्ष्यन्ते तां संख्यामपेक्ष्यात्र या नवसंख्याकास्ता एकयर्चा न्यूनाः। लोकेऽपि न्यूने स्वल्पे गर्भधारणस्थाने रेतः सिच्यतेऽतो न्यूनत्वमत्र युक्तम्।

अथ माध्यंदिने सवनेऽसावि देवं गोऋजीकमन्ध इत्येतत्सूक्तगता दशसंख्याका ऋचो विधत्ते—

दश मध्यंदिनेऽन्वाह न्यूने वै रेतः सिक्तं मध्यं स्त्रियै प्राप्य स्थविष्ठं भवति, इति।

लोके स्वल्पे गर्भस्थाने सिक्तं रेतः स्त्रीशरीरस्य मध्यस्थानं प्राप्य गर्भरूपेण स्थविष्ठमतिस्थूलं भवति। अतो रेतःसेकस्थानीयाया अत्र गर्भस्थानीयसंख्याधिक्यं युक्तम्।

तृतीयसवन इहोपयात शवसो नपात् इत्येतत्सूक्तगता नवसंख्याका ऋचो विधत्ते—

नव न्यूनास्तृतीयसवनेऽन्वाह न्यूनाद्वै प्रजाः प्रजायन्ते, इति।

---

१ ख. क्ष. ट. °ति मध्यं°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



[...]र्वदशसंख्यापेक्षयाऽत्र न्यूनत्वम् । लोके हि न्यूनादल्पाद्योनिद्वारात्प्रौढाः उत्पद्यन्ते । अतो गर्भोत्पादनार्थं मन्त्रन्यूनत्वं युक्तम् । एतेषु सूक्तेषु मत-[...]स्ति । संपूर्णसूक्तानुवचनमित्येकं मतम् । प्रतिसूक्तं सप्तानामेवर्चामनुवचनं-[...] द्वितीयं मतम् ।

[...]त्र प्रथमं मतं प्रशंसति—

तद्यदेतानि केवलसूक्तान्यन्वाह यजमानमेव तद्गर्भं भूतं प्रजनयति यज्ञाद्देवयोन्यै, इति ।

[...]केवलशब्दः संपूर्णवाची । तदनुवचनेन संपूर्णगर्भं प्राप्तं यजमानमेव यज्ञरू-[...]पयोन्यै देवसंबन्धियोनिस्थानादुत्पादयति । अतः संपूर्णानुवचनं युक्तम् । द्वितीयं मतं दर्शयति—

ते हैके सप्त सप्तान्वाहुः सप्त प्रातःसवने सप्त माध्यंदिने सप्त तृतीयसवने यावत्यो वै पुरोनुवाक्यास्तावत्यो याज्याः सप्त वै प्राञ्चो यजन्ति सप्त वषट्कुर्वन्ति तासामेता पुरोनुवाक्या इति वदन्तः, इति ।

[...]ते प्रसिद्धा ऋत्विज एके केचित्तत्तद्यज्ञेषु यथोक्तसूक्तगता ऋचः प्रतिसूक्तं [...]संख्याका एवान्वाहुर्न तु संपूर्णसूक्तानि । तस्यैव व्याख्यानं सप्त प्रातःस[...] इत्यादि । यावत्य इत्यादिना तदीया युक्तिरुच्यते । पूरोनुवाक्यानां [...]यानां च संख्या प्रायेण समानैव दृश्यते । तथा सत्यत्र सप्तसंख्याका [...]त्विजो होता मैत्रावरुणो ब्राह्मणाच्छंसी नेष्टा पोताऽऽग्नीध्रोऽच्छावाकश्चेत्येते [...]मुखा यजन्ति याज्याः पठन्ति । तस्यैव व्याख्यानं सप्त वषट्कुर्वन्तीति । [...]नां सप्तभिः पठ्यमानानां याज्यानां[नामे]ताः सूक्तगताः सप्तसंख्याका ऋचः [...]नुवाक्या भवन्तीत्येके तादृशीं युक्तिं वदन्तः सप्त सप्तान्वाहुरित्यन्वयः । [...]तादिदं मतं दूषयति—

तत्तथा न कुर्याद्यजमानस्य ह ते रेतो विलुम्प-न्त्यथो यजमानमेव यजमानो हि सूक्तम्, इति ।

[...]सप्त सप्तेति यन्मतं तत्तथा न कुर्यात् । ते सप्तसंख्यावादिनः संपूर्णसूक्ता-[...]द्यजमानस्य प्रजोत्पादकं रेतो विनाशयन्ति । अथो अपि च यजमानमेव

---

१ क. ख. ङ. °नत्वमि° । -

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विनाशयन्ति। सूक्तस्य यजमानरूपत्वेन संपूर्णसूक्तविलोप एव यजमान-विलोपः।

परमते दोषं दर्शयित्वा स्वमते गुणं दर्शयति---

नवभिर्वा एतं मैत्रावरुणोऽस्माल्लोकादन्तरिक्षलोकमभिप्रवहाति दशभिरन्तरिक्षलोकादमुं लोकमभ्यन्तरिक्षलोको हि ज्येष्ठो नवभिरमुष्माल्लोकात्स्वर्गं लोकमभि, इति।

प्रथमसूक्तगताभिर्नवभिर्ऋग्भिरेतं यजमानं भूलोकादन्तरिक्षलोकमभिलक्ष्य नयति। द्वितीयसूक्तगताभिर्दशभिर्ऋग्भिरन्तरिक्षलोकादमुं लोकं नाकपृष्ठाख्यं लोकमभिलक्ष्य नयति। अन्तरिक्षस्य यः समीपवर्ती स्वर्गाभासो नाकपृष्ठाख्यो लोकः स च प्रवृद्धादन्तरिक्षाज्ज्येष्ठोऽतिप्रवृद्धस्तं दशभिः प्राप्य तस्मान्नाकपृष्ठाख्यादमुष्मात्स्वर्गाल्लोकादुपरितनं बहुभोगयुक्तं स्वर्गं लोकं तृतीयसूक्तगताभिर्नवभिर्ऋग्भिर्यजमानमभिवहाति।

स्वमते गुणान्दर्शयित्वा तद्राहित्यं परमते दर्शयति---

न ह वै ते यजमानं स्वर्गं लोकमभि वोढुमर्हन्ति ये सप्त सप्तान्वाहुः, इति।

ये पूर्वपक्षिणः प्रतिसूक्तं सप्तसंख्याका एवान्वाहुस्ते संख्यान्यूनत्वात्पूर्वोक्तरीत्या स्वर्गं प्रति यजमानं वोढुं नार्हन्ति।

स्वमतं निगमयति---

तस्मात्केवलश एव सूक्तान्यनुब्रूयात् ॥ ९ ॥ इति।

केवलशः प्रतिसूक्तं संपूर्णमेवेत्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्येऽष्टाविंशाध्याये प्रथमः खण्डः॥ १ ॥ ( ९ ) [ १९६ ]।

---

अथ प्रस्थितयाज्याविषयं चोद्यमुद्भावयति---

अथाऽऽह यदैन्द्रो वै यज्ञोऽथ कस्माद्द्वावेव प्रातःसवने प्रस्थितानां प्रत्यक्षादैन्द्रीभ्यां यजतो होता चैव ब्राह्मणाच्छंसी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चेदं ते सोम्यं मध्विति होता यजतीन्द्र त्वा वृषभं वयमिति ब्राह्मणाच्छंसी नानादेवत्याभिरितरे कथं तेषामैन्द्र्यो भवन्तीति, इति ।

अथोक्थीयमानसूक्तनिर्णयानन्तरं कश्चिद्ब्रह्मवादी चोद्यमाह । यस्मात्कारणाद्यज्ञ ऐन्द्रो वा इन्द्रदेवताक एव । तथैवं सति सर्वेषामृत्विजामिन्द्रदेवताका एव याज्या अपेक्षिताः । अत्र तु प्रस्थितसोमानां यागे प्रातःसवनकालीने होतृब्राह्मणाच्छंसिनौ द्वावेव प्रत्यक्षाच्छ्रोत्रप्रत्यक्षेण वा श्रूयमाणाभ्यामिन्द्रदेवताकाभ्यामृग्भ्यां यजतो न त्वितरे । इदं ते सोम्यमिति होतुर्याज्या । तस्यास्तृतीयपादे जुषाण इन्द्रेति प्रत्यक्ष एवेन्द्रशब्दः श्रूयते । इन्द्र त्वा वृषभं वयमिति ब्राह्मणाच्छंसिनो याज्या । तत्र स्पष्ट एवेन्द्रशब्दः । इतरे पञ्चर्त्विजो नानादेवत्याभिर्ऋग्भिर्यजन्ति । तेषामृत्विजां ता ऋचः कथमिन्द्रदेवताका भवन्तीति चोद्यम् ।

तत्र पञ्चानामृत्विजां याज्यास्विन्द्रदेवताकत्वं संपादनीयम् । तत्रैकस्यां याज्यायां तत्संपादयति—

मित्रं वयं हवामह इति मैत्रावरुणो यजति वरुणं सोमपीतय इति यद्वै किंच पीतवत्पदं तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति, इति ।

मैत्रावरुणस्य मित्रं वयमिति येयं याज्या तस्यां वरुणमित्यादिके द्वितीयपादे पीतवत्पिबतिधातुयुक्तं यत्किंचित्पदमस्ति तदिन्द्रसंबन्धि रूपमिन्द्रस्य सोमपानप्रियत्वात् । तेन हि पीतवत्पदेनेन्द्रं परितोषयति ।

पोतुर्याज्याया ऐन्द्रत्वं दर्शयति—

मरुतो यस्य हि क्षय इति पोता यजति स सुगोपातमो जन इतीन्द्रो वै गोपास्तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति, इति ।

मरुत इत्यस्यां याज्यायां तृतीयपादे गोपाशब्देनेन्द्रोऽभिधीयते । गोप्तृत्व रक्षकत्वमिन्द्रसंबन्धि रूपं तेनेन्द्रस्य प्रीतिः ।

---

इदं ते सोम्यं मधु०—८-६६-८ । इन्द्र त्वा वृषभं वयं०—३-४०-१ । मित्रं वयं हवामहे०—१-२३-४ । मरुतो यस्य हि क्षये०—१-८६-१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नेष्टुर्याज्याया ऐन्द्रत्वं संपादयति —

अग्ने पत्नीरिहाऽऽवहेति नेष्टा यजति त्वष्टारं सोमपीतय इतीन्द्रो वै त्वष्टा तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति, इति ।

अग्ने पत्नीरित्यस्या याज्यायास्तृतीयपादे यस्त्वष्टा स एवेन्द्रः । शत्रूणां तनूकरणादिन्द्रस्य त्वष्टृत्वम् ।

आग्नीध्रस्य याज्याया ऐन्द्रत्वं संपादयति—

उक्षान्नाय वशान्नायेत्याग्नीध्रो यजति सोमपृष्ठाय वेधस इतीन्द्रो वै वेधास्तदैन्द्रं रूपं तेनेन्द्रं प्रीणाति, इति ।

उक्षान्नायेति याज्याया द्वितीयपादे यो वेधाः स एवेन्द्रः । इन्द्रस्य जगद्व्यवस्थाविधायकत्वेन वेधःशब्दवाच्यत्वात् ।

अच्छावाकस्य याज्याया ऐन्द्रत्वं संपादयति—

प्रातर्यावभिरागतं देवेभिर्जेन्यावसू । इन्द्राग्नी सोमपीतय इति स्वयं समृद्धाऽच्छावाकस्य, इति ।

हे इन्द्राग्नी जेन्यावसू जेन्यं जेतव्यं वसु धनं ययोस्तौ तादृशौ भूत्वा प्रातर्यावभिः प्रातःसवनगामिभिर्देवेभिर्देवैः सह सोमपीतये सोमपानार्थमागतमागच्छतम् । अस्यामृचीन्द्रागी(ग्नि)श्रवणेऽपीन्द्रशब्दस्य प्रत्यक्षस्य विद्यमानत्वात्स्वयमेवेन्द्रत्वाय समृद्धा संपूर्णा न त्वैन्द्रत्वं संपादनीयमस्ति ।

ऋचां संपादितमैन्द्रत्वं निगमयति —

एवमु हैता ऐन्द्र्यो भवन्ति, इति ।

तास्वृक्षु देवतान्तरप्रीतिं दर्शयति—

यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति, इति ।

मित्रावरुणौ मरुतोऽग्निर्वेधा इन्द्राग्नी इत्येताभिर्नानादेवताभिर्युक्ता ऋच इति यदस्ति तेनेन्द्रव्यतिरिक्ता देवतास्तोषयति ।

तत्रत्यं छन्दः प्रशंसति—

यद्उ गायत्र्यस्तेनाऽऽग्नेय्यः, इति ।

---

अग्ने पत्नीरिहाऽऽवह०—१–२२–९ । उक्षान्नाय वशान्नाय०—८–४३–११ । प्रातर्यावभिरागतं०—८–३८–७ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अग्निगायत्र्योः प्रजापतिमुखजत्वसंबन्धाद्गायत्रीछन्दसां तासामग्निदेवताकत्वं संपद्यते ।

उक्तां प्रशंसां निगमयति—

एतदु हैताभिस्त्रयमुपाप्नोति ॥ १० ॥ इति ।

एताभिर्ऋग्भिरेतदु ह पूर्वोक्तमेव त्रयं त्रिविधदेवतासंबन्धत्वं प्राप्नोति । तत्र तत्र प्रतीयमाननानाविधदेवताकत्वं पूर्वोक्तरीत्या संपादितमैन्द्रत्वं गायत्रीद्वारेणाऽऽग्नेयत्वं चेति त्रयं वेदितव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्याये द्वितीयः खण्डः ॥२॥ (१०) [१९७]।

---

अथ माध्यंदिन उन्नीयमानसूक्तं विधत्ते—

असावि देवं गोऋजीकमन्ध इति मध्यंदिन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धाः, इति ।

माध्यंदिने सवनेऽध्वर्युणा प्रेषितोऽसावि देवमित्यादिकं सूक्तमनुब्रूयात् । तत्रत्या ऋचो वृषपीतसुतमदशब्दोपेताः पूर्वत्र दश मध्यंदिनेऽन्वाहेति संख्यैवोक्ता न तु सूक्तं दर्शितम् । अत्र त्वसावि देवमिति सूक्तं प्रदर्श्यते । अस्य सूक्तस्य द्वितीयस्यामृचि वृषणो नृपाच इति वृषण्वच्छब्दः श्रुतस्तृतीयस्यामृचि रथ्यो न धेनेति धेनाशब्दः पिबतिधात्वर्थः । तेन पीतवत्त्वम् । धेट्पाने इति हि धातुः । असावीति सुनोतिधातोः श्रूयमाणत्वात्सुतवत्त्वम् । प्रथमाया ऋचोऽवसानेऽन्धसो मदेष्विति मद्वत्त्वं श्रुतम् । रूपसमृद्धत्वं पूर्ववद्योज्यम् ।

देवताद्वारा छन्दोद्वारा च ता ऋचः प्रशंसति—

ऐन्द्रीरन्वाहैन्द्रो वै यज्ञस्त्रिष्टुभोऽन्वाह त्रैष्टुभं वै माध्यंदिनं सवनम्, इति ।

द्वितीयपादेऽन्यस्मिन्निन्द्र इति श्रवणादैन्द्रत्वम् । एवमृगन्तरेष्वप्युदाहरणीयम् । माध्यंदिनसवनस्य त्रैष्टुभत्वं प्रसिद्धम् ।

मद्वतीरिति यदुक्तं तस्याऽऽक्षेपमुद्भावयति—

तदाहुर्यत्तृतीयसवनस्यैव रूपं मद्वदथ कस्मान्मध्यं-

---

असावि देवं गोऋजीकमन्धः० —७-२१-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दिने मद्वतीरनु चाऽऽह यजन्ति चाऽऽभिरिति, इति।

तृतीयसवने सर्वेषां देवानां सोमपानादूर्ध्वं हर्षसंभवान्मद्वत्त्वं तृतीयसवनस्यैव रूपम् । तथा सति मध्यंदिने सवने मद्वतीनामृचामनुवचनमाभिर्मद्वतीभिर्यजनं च कस्मात्कारणादिति चोद्यम् ।

तस्योत्तरमाह—

मायन्तीव वै मध्यंदिने देवताः समेव तृतीयसवने मादयन्ते तस्मान्मध्यंदिने मद्वतीरनु चाऽऽह यजन्ति चाऽऽभिः, इति[1] ।

माध्यंदिने सवनेऽपि देवानां सोमपानसद्भावात्ता माद्यन्त्येव । तृतीयसवने तु निरवशेषाणां देवानां सोमपानसंपत्त्या संमादयन्ते संभूय हृष्यन्तीत्येतावानेव विशेषः । तस्मान्मादस्य हर्षस्य मध्यंदिनसवनेऽपि सद्भावात्तत्र मद्वतीरृचो मैत्रावरुणोऽन्वाह । होत्रादयश्च सप्तर्त्विज आभिर्मद्वतीभिर्यजन्ति ।

अथ ताः प्रस्थितयाज्या विधत्ते—

ते वै खलु सर्व एव माध्यंदिने प्रस्थितानां प्रत्यक्षादैन्द्रीभिर्यजन्ति, इति ।

ते होत्रादयः सप्तर्त्विजः सर्वेऽपि माध्यंदिने सवने प्रस्थितसोमानां संबन्धिनीभिः प्रत्यक्षात्प्रत्यक्षेण पठ्यमानेनैवेन्द्रशब्देन प्रयुक्ताभिरिन्द्रदेवताकाभिर्ऋग्भिर्यजेयुः ।

तेषु सप्तस्व[ त्वि ]क्षु मध्ये होतृमैत्रावरुणब्राह्मणाच्छंसिनां त्रयाणां संबन्धिनीषु याज्यासु न केवलमैन्द्रत्वं किंतु अभितृण्णवत्त्वम[पीत्य]परं विशेषं दर्शयति—

अभितृण्णवतीभिरेके, इति ।

अभिपूर्वस्य तृदिधातो रूपं यास्वस्ति ता अभितृण्णवत्यः ।

तत्र होतुर्याज्यां दर्शयति—

पिबा सोममभि यमुग्र तर्द इति होता यजति, इति ।

पिबा सोममभि यमुग्र०—६—१७—१ ।

1 ख. झ. °ति । मध्यं° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्राभिशब्दस्य तर्दशब्दस्य [च] विद्यमानत्वादभितृण्णवत्त्वम् ।

मैत्रावरुणस्य याज्यां दर्शयति—

स ईं पाहि य ऋजीषी तरुत्र इति मैत्रावरुणो यजति, इति ।

स ईं पाहीत्यस्या ऋचश्चतुर्थे पादेऽभितृन्धि वाजानिति श्रवणादभितृण्णवत्त्वम् ।

ब्राह्मणाच्छंसिनो याज्यां दर्शयति—

एवा पाहि प्रत्नथा मन्दतु त्वेति ब्राह्मणाच्छंसी यजति, इति ।

एवा पाहीत्यस्यामृचि चतुर्थपादेऽभि गा इन्द्र तृन्धीति श्रवणादभितृण्णवत्त्वम् । एतांस्त्रीनृत्विजोऽभिप्रेत्याभितृण्णवतीभिरेक इत्युक्तम् ।

पोतुर्याज्यां दर्शयति—

अर्वाङेहि सोमकामं त्वाऽऽहुरिति पोता यजति, इति ।

नेष्टुर्याज्यां दर्शयति—

तवायं सोमस्त्वमेह्यर्वाङिति नेष्टा यजति, इति ।

अच्छावाकस्य याज्यां दर्शयति—

इन्द्राय सोमाः प्रदिवो विदाना इत्यच्छावाको यजति, इति ।

आग्नीध्रस्य याज्यां दर्शयति—

आपूर्णो अस्य कलशः स्वाहेत्याग्नीध्रो यजति, इति ।

उक्तानां सप्तानां याज्यानां मध्ये पिबा सोमं स ईं पाह्येवा पाहीति तिस्र ऋचोऽभितृण्णवत्त्वेन प्रशंसति—

तासामेता अभितृण्णवत्यो भवन्तीन्द्रो वै प्रातः-

---

स ईं पाहि य ऋजीषी तरुत्रः०—६–१७–२ । एवा पाहि प्रत्नथा मन्दतु०—६–१७–३ । अर्वाङेहि सोमकामं त्वाऽऽहुः०—१–१०४–९ । तवायं सोमस्त्वमेह्यर्वाङ्०—३–३५–६ । इन्द्राय सोमाः प्रदिवो विदानाः०—३–३६–२ । आपूर्णो अस्य कलशः स्वाहा०—३–३२–१५ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सवने न व्यजयत स एताभिरेव माध्यंदिनं सवनमभ्यतृणदभ्यतृणत्तस्मादेता अभितृण्णवत्यो भवन्ति ॥ ११ ॥ इति ।

अभिपूर्वतर्दन(तृदि)धातुयुक्तत्वादभितृण्णवत्त्वं यथा भवति तथैव धात्वर्थसंभवादप्यभितृण्णवत्त्वं द्रष्टव्यम् । कथमेतदिति तदुच्यते । इन्द्रः पुरा प्रातःसवने समाप्ते सति तावता न व्यजयत विजयं न प्राप्तवान् । मध्यंदिनसवनस्य गुरुत्वेन गलितत्वात् । तदानीमिन्द्रस्तस्य माध्यंदिनसवनस्य स्थितिसिद्ध्यर्थं पिबा सोमेत्यादिभिरेताभिर्ऋग्भिर्माध्यंदिनसवनमभितः प्रथमतृतीययोर्मध्ये तृणत्तर्दनमकरोत् । दृढबन्धेन स्थितिं कृतवानित्यर्थः । तस्मात्तर्दनस्यार्थेन युक्तत्वादेतासां तिसृणामभितृण्णवत्त्वम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (११) [१९८] ।

अथ तृतीयसवन उन्नीयमानसूक्तं विधत्ते—

इहोप यात शवसो नपात इति तृतीयसवन उन्नीयमानेभ्योऽन्वाह वृषण्वतीः पीतवतीः सुतवतीर्मद्वती रूपसमृद्धास्ता ऐन्द्रार्भव्यो भवन्ति, इति ।

अध्वर्युणा चमसोन्नयनकाले प्रेषितो मैत्रावरुण इहोप यातेति सूक्तमनुब्रूयात् । तत्रत्या ऋचो वृषपीतसुतमदशब्दोपेता आ तक्षत वृषण इति वृषशब्दः सुषुतस्य पीतिरिति सुनोतिधातुना पिबतिधातुना च योगोऽस्ति मदास इति मदिधातुयोगः । तत्रत्या ऋच ऐन्द्रार्भव्यः । इन्द्रश्च ऋभवश्च तासां देवताः सौधन्वना ऋभवो मद(गम)न्त्विन्द्रमिति तत्र श्रवणात् ।

ऋभुदेवताप्रसङ्गेन तृतीयसवनगते पवमानस्तोत्रे किंचिच्चोद्यमुद्भावयति—

तदाहुर्यन्नाऽऽर्भवीषु स्तुवतेऽथ कस्मादार्भवः पवमान इत्याचक्षत इति, इति ।

तच्चास्मिन्नृभुसंबन्धविषये चोद्यमाहुः । यस्मात्कारणादृभुदेवतास्वृक्षु सामगास्तृतीयसवने पवमानस्तोत्रेण न स्तुवते किंतु स्वादिष्ठया मदिष्ठयेत्यस्याम्

इहोप यात शवसो नपातः०—४—३५—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवताकास्वेव स्तुवते । अथैवं सति कस्मात्कारणात्पवमानस्तोत्रस्याऽऽर्भवत्व-माचक्षत इति चोद्यम् ।

तस्योत्तरमाह—

प्रजापतिर्वै पित ऋभून्मर्त्यान्सतोऽमर्त्यान्कृत्वा तृतीयसवन आभजत्तस्मान्नाऽऽर्भवीषु स्तुवतेऽथाऽऽर्भवः पवमान इत्याचक्षते, इति ।

पुरा प्रजापतिः पिता भूत्वा मर्त्यान्मनुष्यान्सत ऋभूनमर्त्यान्देवान्कृत्वा तृतीयसवन आभजद्भागिनोऽकरोत् । तदिदमुपाख्यानमार्भवं शंसतीत्यत्र प्रदर्शितम् । एवं च सत्यृभूणां स्तोत्रदेवतात्वाभावादार्भवीष्वृक्षूद्गातारो न स्तुवते । अथाप्यृभूणां तृतीयसवनसंबन्धसद्भावात्तृतीयसवनगतस्य पवमानस्तोत्रस्याप्यार्भवत्वं व्यवहरन्ति ।

प्रासङ्गिकं परिसमाप्य प्रकृत एव सूक्ते चोद्यमुद्भावयति—

अथाऽऽह यद्यथाछन्दसं पूर्वयोः सवनयोरन्वाह गायत्रीः प्रातःसवने त्रिष्टुभो माध्यंदिनेऽथ कस्माज्जागते सति तृतीयसवने त्रिष्टुभोऽन्वाहेति, इति ।

उन्नीयमानसूक्तविधानानन्तरं तत्र कश्चिद्ब्रह्मवादी चोद्यमाह । यद्यस्मात्कारणाद्यथाछन्दसं तत्र तत्रोचितं छन्दोऽनतिक्रम्य सवनद्वये गायत्रीस्त्रिष्टुभश्च क्रमेणान्वाह । तृतीयसवनं तु जगताम् । तथा सति जगतीमतिक्रम्येहोप यातेत्याद्यास्त्रिष्टुभः कस्मादनुब्रूत इति चोद्यम् ।

तत्रोत्तरं दर्शयति—

धीतरसं वै तृतीयसवनमथैतदधीतरसं शुक्रियं छन्दो यत्त्रिष्टुप्सवनस्य सरसताया इति ब्रूयादथो इन्द्रमेवैतत्सवनेऽन्वाभजतीति, इति ।

यदेतत्तृतीयसवनं तदेतद्धीतरसम् । तदीयो रसो गायत्र्या पी[illegible] सोमाहरणकाले । पद्भ्यां सवनद्वयं मुखेन तृतीयसवनं च गृहीत्वा तत्रत्यं रसं गायत्री पीतवती । तथा चान्यत्र श्रूयते—'पद्भ्यां द्वे सवने समगृह्णान्मुखेनैकं यन्मुखेन समगृह्णात्तदधयत्तस्माद्द्वे सवने शुक्रवती प्रातःसवनं माध्यंदिनं च तस्मात्तृतीयसवन ऋजीषमभिषुण्वन्ति धीतमिव हि मन्यन्ते' इति । तथैव त्रिष्टुप्छन्दो यदस्ति,

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एतदधीतरसमपीतरसम् । माध्यंदिनसवनसंबन्धित्वात् । अत एतच्छु[१]क्रियं रसस-द्युपेतं शुक्रियमतोऽस्य तृतीयसवनस्य सरसत्वार्थं त्रिष्टुभोऽन्वाहेत्युत्तरं ब्रूयात् । अथो अपि च तेन सरसत्वेनेन्द्रमेव तृतीयसवने भागवन्तं करोति । त्रिष्टुच्छन्दस ऐन्द्रत्वात् । तेनेन्द्रभाव(ग)त्वं युक्तम् ।

उक्तं चोद्यं समाधाय प्रस्थितयाज्याविषये चोद्यमुद्भावयति—

अथाऽऽह यदैन्द्रार्भवं वै तृतीयसवनमथ कस्मादेष एव तृतीयसवने प्रस्थितानां प्रत्यक्षादैन्द्रार्भव्या यजतीन्द्र ऋभुभिर्वाजवद्भिः समुक्षितमिति होतैव नानादेवत्याभिरितरे कथं तेषामैन्द्रार्भव्यो भवन्तीति, इति ।

अथोक्षीयमानसूक्तकथनानन्तरं कश्चिद्ब्रह्मवादी चोद्यमाह । यद्यस्मात्कारणात्तृतीयसवनमैन्द्रार्भवम् । तच्च पूर्वमुपपादितम् । एवं सत्येक एव होता प्रस्थितसोमानां प्रत्यक्षात्प्रत्यक्षेण मुख्येनैवेन्द्रशब्देन ऋभुशब्देन च युक्तयर्चा यजति । इन्द्र ऋभुभिरित्याद्या सेयमृगत्रगन्तव्या । होतैव तया यजति न त्वितरे षड्ऋत्विजः । ते तु नानाविधदेवताकाभिर्वक्ष्यमाणाभिर्ऋग्भिर्यजन्ति । तस्मात्कारणादेतत्संपन्नम् । किंच तेषां षण्णामृत्विजां संबन्धिन्यो याज्याः कथमैन्द्रार्भव्यो द्विविधदेवताका भवन्तीति चोद्यम् ।

तत्र होतुर्याज्याया ऐन्द्रार्भवत्वेने परितोषात्तां तथैवाङ्गीकृत्येतरेषां याज्यासु क्रमेणैन्द्रार्भवत्व( त्वं ) दर्शयितुकामः प्र[२]थमतो मैत्रावरुणस्य याज्यायां तद्दर्शयति—

इन्द्रावरुणा सुतपाविमं सुतमिति मैत्रावरुणो यजति युवो रथो अध्वरं देववीतय इति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

इन्द्रावरुणेत्यस्यां याज्यायां युवो रथ इत्यस्मिन्पादे देववीतय इति पदं विद्यते । देवानां वीतिः प्राप्तिर्देववीतिरिति तस्य समासः । तस्य समासे षष्ठीबहुवचनान्तेन शब्देन बहून्येव रूपाणि प्रतीयन्ते । तत्र बहुत्वमृभूणां स्वरूपं

इन्द्रावरुणा सुतपाविमं०—६-६८-१० ।

१ ख. °क्रिय° । २ क. ट. °त्वेनाप° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मनुष्यरूपाणामृभुशब्दवाच्यानां महर्षीणां बहुत्वात् । तस्मादर्थत ऋभुसद्भावा-दिन्द्रशब्दस्य च साक्षाच्छ्रवणादियमैन्द्रार्भवी ।

ब्राह्मणाच्छंसिनो याज्यायामार्भवत्वं संपादयति—

इन्द्रश्च सोमं पिबतं बृहस्पत इति ब्राह्मणाच्छंसी यजत्या वां विशन्त्विन्दवः स्वाभुव इति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

इन्द्रश्चेत्यादियाज्यायामा वां विशन्त्वित्यस्मिन्पादे विशन्त्वित्यादीनि बहुवचनान्तानि पदानि श्रूयन्ते । तैरभिधेयं बहुत्वमृभूणां स्वरूपम् ।

पोतुर्याज्यायामार्भवत्वं दर्शयति—

आ वो वहन्तु सप्तयो रघुष्यद इति पोता यजति रघुपत्वानः प्र जिगात बाहुभिरिति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

आ वो वहन्त्विति याज्यायां रघुपत्वान इत्यस्मिन्पादे बहुवचनान्तैः पदैरभिधेयं बहुत्वमृभूणां स्वरूपम् ।

नेष्टुर्याज्यायामार्भवत्वं दर्शयति—

अमेव नः सुहवा आ हि गन्तनेति नेष्टा यजति गन्तनेति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

अमेव न इति याज्यायां तस्मिन्नेव पादे गन्तनेति पदस्य गच्छतेत्यर्थे सति लोण्मध्यमपुरुषबहुवचनान्तेन प्रतीतं बहुत्वमृभूणां स्वरूपम् ।

अच्छावाकस्य याज्यायामार्भवत्वं दर्शयति—

इन्द्राविष्णू पिबतं मध्वो अस्येत्यच्छावाको यजत्यावामन्धांसि मदिराण्यग्मन्निति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

---

इन्द्रश्च सोमं पिबतं बृहस्पते०—४–५०–१० । आ वो वहन्तु सप्तयः०—१–८५–६ । अमेव नः सुहवा आ हि गन्तन०—२–३६–३ । इन्द्राविष्णू पिबतं मध्वो अस्य०—६–७०–७ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इन्द्राविष्णू इत्यस्यां याज्यायामावामित्यस्मिन्पादे बहुवचनान्तैरन्धांसं दिभिः पदैः प्रतीतं बहुत्वमृभूणां स्वरूपम् ।

आग्नीध्रस्य याज्यायामार्भवत्वं दर्शयति—

इमं स्तोममर्हते जातवेदस इत्याग्नीध्रो यजति रथमिव सं महेमा मनीषयेति बहूनि वाऽऽह तदृभूणां रूपम्, इति ।

इमं स्तोममित्यस्यां याज्यायां रथमिवेत्यस्मिन्पादे महेमेत्युत्तमपुरुषबहुवच नान्तेन पदेन प्रतीयमानं बहुत्वमृभूणां स्वरूपम् ।

उक्तमर्थमुपसंहरति—

एवमु हैता ऐन्द्रार्भव्यो भवन्ति, इति ।

उक्तेन प्रकारेण याज्यास्वृभूसंबन्धसंपादनादिन्द्रसंबन्धस्य च साक्षा श्रूयमाणत्वादेता ऋच ऐन्द्रार्भव्यः संपद्यन्ते ।

इन्द्रस्यर्भूणां चोक्तसंबन्धेन प्रीतेः सिद्धत्वादितरदेवतानामपि याज्याभिः प्रीतिं दर्शयति—

यन्नानादेवत्यास्तेनान्या देवताः प्रीणाति, इति ।

इन्द्रवरुणबृहस्पत्यादिनानाविधदेवतायुक्ता ऋच इति यदस्ति तेन का नान्या इन्द्रादृभुभ्यश्च व्यतिरिक्ता देवतास्तोषयति ।

याज्यास्ववस्थितं छन्दः प्रशंसति—

यद्ु जगत्प्रासाहा जागतं वै तृतीयसवनं तृतीयसवनस्यैव समृद्ध्यै ॥ १२ ॥ इति ।

जगच्छब्देन जगतीछन्दोऽभिधीयते । प्रासाहशब्दो बाहुल्यवाची । जगत् प्रासाहा बहुला यासूक्तासु प्रस्थितयाज्यासु ता जगत्प्रासाहाः । तृतीयसवनं जागतमिति प्रसिद्धम् । अतो यदु यदेव जगतीबाहुल्यं तेन तृतीयसवनस्य समृ द्धिर्भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण भाष्येऽष्टाविंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (१२) [ १९९ ]

---

इमं स्तोममर्हते जातवेदसे०— १-९४-१ ।

---

१ क. 'ध श्रुतत्वा' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



होत्रकाणां प्रस्थितयाज्याः सवनत्रयेऽभिधाय परस्परं साम्यं वैषम्यं च विवेक्तुं प्रश्नमुद्भावयति—

**अथाऽऽह यदुक्थिन्योऽन्या होत्रा अनुक्था अन्याः कथमस्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्तीति, इति ।**

होत्रकाणां याज्याकथनानन्तरं कश्चिद्ब्रह्मवादी चोद्यमाह । होत्रकाणां क्रिया होत्राशब्देन विवक्षिताः । तास्वन्याः काश्चित्क्रिया उक्थिन्यः शस्त्रयुक्ताः । अन्या इतराः क्रिया अनुक्थाः शस्त्ररहिता मैत्रावरुणो ब्राह्मणाच्छंस्यच्छावाक इत्येतेषां त्रयाणां शस्त्रसद्भावादेतदीयाः क्रिया उक्थिन्यः । नेष्टृपोत्रादीनां शस्त्र-राहित्यात्तदीयाः क्रिया अनुक्थाः । एवं वैषम्ये स्पष्टे सत्यस्य यज्ञस्य यजमानस्य वा संबन्धिन्य एता होत्राः सर्वा उक्थिन्यः शस्त्रयुक्ता भूत्वा समा वैषम्यरहिता अत एव समृद्धाः संपूर्णाः कथं भवन्तीति चोद्यम् ।

तस्योत्तरमाह—

**यदेवैनाः संप्रगीर्य होत्रा इत्यचाक्षते तेन समाः, इति ।**

यदेव यस्मादेव कारणादेता मैत्रावरुणादिक्रियाः पोतृनेष्ट्रादिक्रियाश्च संप्रगीर्य संभूय प्रकर्षेणोक्त्वा होत्रा इतिशब्देन याज्ञिका आचक्षते तेन समाः । यथा लोके छत्रयुक्तास्तद्रहिताश्च संभूय च्छत्रिण इत्येकेनैव शब्देन व्यवह्रियन्ते । एवमत्रापि शस्त्रयुक्ता मैत्रावरुणादयः शस्त्ररहिताः पोतृनेष्ट्रादयश्च संभूयैकेनैव होत्रकशब्देन व्यवह्रियन्ते । अतः शस्त्रिभिः समभिव्याहारादशस्त्रिणामप्युपचरितं शस्त्रित्वम् । तेन होत्रकशब्दव्यवहारैक्येन(ण) समा भवन्ति । न चैतावता स्वाभाविकं शस्त्रित्वाशस्त्रित्ववैषम्यमपगच्छति ।

तदेतद्वैषम्यं दर्शयति—

**यदुक्थिन्योऽन्या होत्रा अनुक्था अन्यास्तेनो विषमाः, इति ।**

उशब्दोऽपिशब्दार्थः । तेनोक्थित्वानुक्थित्वधर्मद्वयेन विषमा अपि भवन्ति । सत्यपि वैषम्य औपचारिकोक्थित्वेन साम्यं यदुपपादितं तदुपसंहरति—

**एवमु हास्यैता उक्थिन्यः सर्वाः समाः समृद्धा भवन्ति, इति ।**

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



होत्रकेषु चोद्यान्तरमुद्भावयति—

अथाऽऽह शंसन्ति प्रातःसवने शंसन्ति माध्यंदिने होत्रकाः कथमेषां तृतीयसवने शस्तं भवतीति, इति ।

अग्निष्टोमे मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां सवनद्वये शंसनं विहितं तद्दृष्टान्तेन तृतीयसवनेऽपि शंसनमपेक्षितम् । तच्च न विहितम् । तथा सति कथं तृतीयसवने शस्तं भवति शंसनं सिध्यतीति चोद्यम् ।

तस्योत्तरं दर्शयति—

यदेव माध्यंदिने द्वे द्वे सूक्ते शंसन्तीति ब्रूयात्तेनेति, इति ।

मैत्रावरुणस्य सद्यो ह जातो वृषभः कनीन इत्येकं सूक्तम् । एवा त्वामिन्द्र वज्रिन्निति द्वितीयम् । ब्राह्मणाच्छंसिन इन्द्रः पूर्भिदित्येकं सूक्तम् । उदु ब्रह्माणीति द्वितीयम् । अच्छावाकस्य भूय इदित्येकम् । इमामूष्विति द्वितीयम् । एवमेते त्रयो माध्यंदिने सवने प्रत्येकं द्वे द्वे सूक्ते शंसन्ति । तत्रैकं माध्यंदिनसवनार्थं द्वितीयं तु तृतीयसवनार्थमित्युपचारेण तत्रापि शंसनं सिध्यतीत्युत्तरं ब्रूयात् ।

तेष्वेव चोद्यान्तरमुद्भावयति—

अथाऽऽह यद्द्व्युक्थो होता कथं होत्रका द्व्युक्था भवन्तीति, इति ।

अथ तृतीयसवने शंसनसंपादनानन्तरं पुनरपि ब्रह्मवादी चोद्यान्तरमाह । यद्यस्मात्कारणाद्धोता द्व्युक्थः । द्वे उक्थे शस्त्रे यस्यासौ द्व्युक्थः । प्रातःसवन आज्यप्रउगे द्वे माध्यंदिनसवने मरुत्वतीयनिष्केवल्ये द्वे । तृतीयसवने वैश्वदेवाग्निमारुते द्वे । एवं स्थिते होतृदृष्टान्तेन होत्रकाणामप्युक्थद्वयोपेतत्वमपेक्षितम् । न चोक्थद्वयं विहितमस्त्यतस्तत्केन प्रकारेण सिध्यतीति चोद्यम् ।

तत्रोत्तरमाह—

यदेव द्विदेवत्याभिर्यजन्तीति ब्रूयात्तेनेति ॥ १३ ॥ इति ।

प्रस्थितयाज्यानां श्रूयमाणदेवतया संपाद्यमानदेवतया च द्विदेवत्यत्वं ताद्दशीभिर्ऋग्भिर्यस्माद्यजन्ति तेन द्विशस्त्रत्वम् । तत्रैका देवता याज्यार्था इतरा द्वितीया शस्त्रार्थेत्येवमुत्तरं ब्रूयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्याये पञ्चमः खण्डः ॥५॥ (१३) [१००] ।

---

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

सर्वत्र होत्रकशब्दव्यवहारसाम्येन शस्त्ररहितानामप्युपचरितमुक्थित्वमित्युक्तम् । इदानीं प्रकारान्तरेण तेषामुक्थित्वं संपादयितुं प्रश्नमुद्भावयति—

अथाऽऽह यदेतास्तिस्र उक्थिन्यो होत्राः कथमितरा उक्थिन्यो भवन्तीति, इति।

अथ मैत्रावरुणादीनां त्रयाणामुपचरितं द्वितीयशस्त्रसंपादनानन्तरं ब्रह्मवादी चोद्यमाह । यद्यस्मात्कारणादेताः पूर्वोक्ता होत्रा मैत्रावरुणादीनां क्रियास्तिस्र उक्थिन्यः शस्त्रोपेतास्तद्दृष्टान्तेनेतराः पोत्रादीनां क्रिया अपि शस्त्रयुक्ता इति वक्तव्यम् । न चात्र शस्त्रं विहितम् । अतः कथमेता उक्थिन्य इति प्रश्नः ।

तत्रोत्तरमाह—

आज्यमेवाऽऽग्नीध्रीयाया उक्थं मरुत्वतीयं पोत्रीयायै वैश्वदेवं नेष्ट्रीयायै ता वा एता होत्रा एवं न्यङ्गा एव भवन्ति, इति ।

होतुः प्रातःसवने यत्प्रथममाज्यशस्त्रं तदेवाऽऽग्नीध्रीयायै, आग्नीध्रेण क्रियमाणायाः क्रियाया उक्थं शस्त्रम् । एवं मरुत्वतीयवैश्वदेवयोरपि योज्यम् । तथा सति ता एवैता होत्रा होत्रकाणां क्रिया एवमुक्तेन प्रकारेण न्यङ्गास्तच्चिह्ना एव भवन्ति । अग्निमाग्नीध्रो यजति । आज्यशस्त्रं चाऽऽग्नेयम् । पोता मरुतो यजति । मरुत्वतीये च मारुतानि सूक्तानि शंसति । अग्ने पत्नीरिहाऽऽवहेति नेष्टा यजति । तत्र देवानामुशतीरित्यत्र देवानामिति श्रवणमस्ति । एवं त्रयाणामप्याग्नीध्रपोतृनेष्टृणामाग्नेयत्वमारुतत्ववैश्वदेवत्वचिह्नानि विद्यन्ते । तस्मादाज्यादिभिरुक्थैरितरेषामुक्थित्वम् ।

तेषामेव होत्रकाणामृतुयाजेषु कस्यचिद्विशेषस्य प्रश्नमवतारयति—

अथाऽऽह यदेकप्रैषा अन्ये होत्रका अथ कस्माद्द्विप्रैषः पोता द्विप्रैषो नेष्टेति, इति ।

प्रैषसूक्ते ये प्रैषा उक्ता नेष्टृपोतृव्यतिरिक्तानां होत्रकाणां तेषु प्रैषेष्वेकैक एव प्रैषः । पोतुर्नेष्टुश्च द्वौ द्वौ प्रैषौ । तथा च यज्ञसंप्रदायविदः पठन्ति—होपोनेग्नीब्राप्रहोपोनेच्छाध्वर्युगृहपतीति चेति । अस्यायमर्थः । तत्र नाम्नामाद्याक्षरणैते ऋतुपुरुषा निर्दिश्यन्ते । तथा च होता पोता नेष्टाऽऽग्नीध्रो ब्राह्मणाच्छंसी

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रशास्ता होता पोता नेष्टाऽच्छावाकोऽध्वर्युर्गृहपतिश्च क्रमेणोक्ताः। प्रैषसूक्ते द्वादश प्रैषाः क्रमेण सन्ति। तथा सति पोतुर्द्वितीयोऽष्टमश्च द्वौ प्रैषौ नेष्टुस्तृतीयो नवमश्च द्वौ प्रैषौ। होता यक्षन्मरुतः पोत्रादित्येकः प्रैषः। होता यक्षद्देवं द्रविणोदां पोत्राहतुभिरिति द्वितीयः। एतौ द्वौ पोतुः प्रैषौ। होता यक्षद्ग्रावो नेष्टेत्येकः। होता यक्षद्देवं द्रविणोदां नेष्ट्रादिति द्वितीयः। एतौ नेष्टुः प्रैषौ। इतरेषामाग्नीध्राच्छावाकादीनामेकैक एव प्रैषः। तथा सति पोतृनेष्ट्रोर्द्विप्रैषत्वे किं कारणमिति प्रश्नः।

तस्योत्तरमाह—

यत्रादो गायत्री सुपर्णो भूत्वा सोममाहरत्तदेतासां होत्राणामिन्द्र उक्थानि परिलुप्य होत्रे प्रददौ यूयं माऽभ्यह्वयध्वं यूयमस्यावेदिष्टेति ते होचुर्देवा वाचेमे होत्रे प्रभावयामेति तस्मात्ते द्विप्रैषे भवत ऋचाऽऽग्नीध्रीयां प्रभावयांचक्रुस्तस्मात्तस्यैकयर्चा भूयस्यो याज्या भवन्ति, इति।

यत्र यस्मिन्कालेऽदो गायत्री त्रिष्वपि च्छन्दःसु या शौर्ययुक्ता भूत् गायत्री सुपर्णो भूत्वा द्युलोकात्सोममाहरत्। सोऽयं वृत्तान्तः पूर्वमेवमाम्नातः तत्तस्मिन्काले केनापि निमित्तेन क्रुद्ध इन्द्र एतासां होत्राणामुक्थानि शस्त्राणि परिलुप्य होत्रे प्रददौ। होत्राशब्दः स्त्रीलिङ्गोऽपि पुरुषान्होत्रकानभिधत्ते। पोतृनेष्ट्राग्नीध्राणां होत्रकाणामाज्यमरुत्वतीयवैश्वदेवशस्त्राणि पूर्वमासन्। तानि इन्द्रस्तेभ्यो निवार्य दत्तवान्। ततो होता प्रतिसवनं शस्त्रद्वययुक्तो भूत् गायत्र्यां सोमेऽपहृते सति शोकाभिभूतमिन्द्रं सान्त्वयितुमृत्विजा(ग)ग्निन्यो देवताः सर्वा उपतस्थिरे।। पोतृनेष्ट्राग्नीध्रदेवतास्तु नाऽऽगताः। तत् कोपकारणम्। स च कुपित इन्द्रः शस्त्राणि निवार्य पुनरप्येवमुवाच। हे ग्नि(?) ध्रिकाः पोत्रादयो यूयं माऽभ्यह्वयध्वम्। शोंसावोमित्याह्वानमपि मा कुरुत दूरे युष्माकं शस्त्राणि। यतो यूयमस्य मम सान्त्वनं माऽवेदिष्ट न ज्ञातवन्तः निषेधार्थो माशब्दोऽत्रानुवर्तनीयः। इत्येवमिन्द्रेणोक्ते सति तत्समीपवर्तिनो देवा इन्द्रं संप्रार्थ्यैवमूचुः। इमे होत्रे एतौ पोतृनेष्टारौ शस्त्रशून्यावतिभीतौ केनापि प्रकारेणानुग्रहणीयौ। तस्माच्छस्त्राभावेऽपि वाचाऽधिकप्रैषरूप प्रभावयाम प्रकर्षेण भावितौ तोषितौ करवामेति। तस्मात्कारणात्ते होत्रे द्वि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भवतः । तौ होत्रकौ पोतृनेष्टारौ प्रैषद्वययुक्तौ भवतः । तथैवाऽऽग्नीध्रीयामाग्नीध्रक्रियामृचा कयाचिदधिकया प्रभावयांचक्रुः प्रभूतां कृतवन्तः । यस्मादेवं तस्मात्तस्याऽऽग्नीध्रस्यैकयर्चा याज्या भूयस्योऽत्यन्तमधिका भवन्ति । सप्तानामपि होत्रकाणां प्रस्थितयाज्यास्तिस्र एव भवन्ति । आग्नीध्रस्यैभिरग्ने सरथमित्येषाऽधिका । सा च पात्नीवतग्रहवर्तिनी । तथा च संप्रदायविद आहुः—

तिस्रः प्रस्थितयाज्यास्तु सप्तानामभवन्खलु ।
आग्नीध्रस्तिसृभिः सार्धमैभिरग्ने चतुर्थ्यभूत् ॥ इति ।

यद्यप्याग्नीध्रविषये ब्रह्मवादिना प्रश्नो न कृतस्तथाऽपि पोतृनेष्टृभ्यां समानयोगक्षेमत्वेन तद्वृत्तान्तोऽप्यभिहितः ।

होत्रकविषये प्रश्नान्तरमुद्भावयति—

अथाऽऽह यद्धोता यक्षद्धोता यक्षदिति मैत्रावरुणो होत्रे प्रेष्यत्यथ कस्मादहोतृभ्यः सद्भ्यो होत्राशंसिभ्यो होता यक्षद्धोता यक्षदिति प्रेष्यतीति, इति ।

अथ द्विप्रैषत्वनिमित्तकथनानन्तरं ब्रह्मवादिनां प्रश्नमाह । मैत्रावरुणः सर्वेषां होत्रादीनां प्रैषकर्ता । स च प्रैषसूक्तगतेषु सर्वेष्वपि मन्त्रेष्वादौ होता यक्षदित्येव तत्र तत्र पठति । तत्र होत्रे होतृकार्यार्थं तेन मन्त्रेण यत्प्रेष्यति तद्युक्तम् । मन्त्रादाववस्थितस्य होतृशब्दस्य तद्वाचकत्वात् । ये त्वहोतारो होतृव्यतिरिक्ताः सन्तो होत्राशंसिनो होत्रा होमस्तमाशंसन्ति [इति होत्राशंसिनः]। तेषां होतृनामरहितानां प्रैषेषु तत्र तत्र होता यक्षदिति कस्मात्कारणाद्धोतृशब्दं प्रयुङ्क्त इति प्रश्नः ।

तस्योत्तरमाह—

प्राणो वै होता प्राणः सर्व ऋत्विजः प्राणो यक्षत्प्राणो यक्षदित्येव तदाह, इति ।

योऽयं मुख्यो होता स प्राणस्वरूप एव । मृतदेहस्य होतृत्वाभावात् । तथाऽन्येषामपि सर्वेषामृत्विजां प्राण एव स्वरूपम् । तथा सति प्राणविवक्षया प्रयुक्तो होतृशब्दः सर्वेषूपपद्यते । होता यक्षद्धोता यक्षदित्युक्ते प्राणो यक्षत्प्राणो यक्षदित्येव मैत्रावरुणो ब्रूते । तस्माद्युक्तः सर्वेषु होतृशब्दप्रयोगः ।

१ ख. होता तमा° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



उद्गातृविषये प्रश्नोत्तरे दर्शयति—

अथाऽऽहास्त्युद्गातॄणां प्रैषा३ः, नाँ३ इति । अस्तीति ब्रूयाद्यदेवैतत्प्रशास्ता जपं जपित्वा स्तुध्वमित्याह स एषां प्रैषः, इति ।

होत्रादयो मैत्रावरुणेन प्रेषिताः स्वस्वव्यापारं कुर्वन्तीति तद्दृष्टान्तेनोद्गातॄणामपि प्रेषितत्वं युक्तम् । न चोद्गातृप्रैषाः प्रैषसूक्ते समाम्नाताः । तस्मादेषां प्रैषोऽस्ति न वेति संशयः । प्लुतिद्वयं विचारार्थम् । नकारस्य सानुनासिकत्वं छान्दसम् । अत्र प्रैषोऽस्तीत्येवमुत्तरं ब्रूयात् । प्रकर्षेण सर्वानृत्विजः शास्ति प्रेषणेन तत्तद्व्यापारे प्रवर्तयतीति प्रशास्ता मैत्रावरुणः । स च स्तुतदेवेन सवित्रा हिंकारादिमन्त्रजपं जपित्वा कृत्वाऽनन्तरं स्तुध्वमिति यदेवैतद्वचनं प्राह स एवैषामुद्गातॄणां प्रैषः ।

अच्छावाकविषये प्रश्नोत्तरे दर्शयति—

अथाऽऽहास्त्यच्छावाकस्य प्रवरा३ः, नाँ३ इति । अस्तीति ब्रूयाद्यदेवैनमध्वर्युराहाच्छावाक वदस्व यत्ते वाद्यमित्येषोऽस्य प्रवरः, इति ।

अच्छावाकव्यतिरिक्तानां वषट्कर्तॄणां प्रवरः प्रकर्षेण वरणमस्ति । तथा च सूत्रकार आह—' प्रवृत्ताहुतीर्जुह्वति वषट्कर्तारोऽन्येऽच्छावाकात्' इति । सूत्रान्तरेऽप्येवमुक्तम्—' प्रवृतः प्रवृतः प्रवृतहोमौ जुहोति ' इति । अतोऽन्येषां प्रवरसद्भावोऽवगतः । अच्छावाकस्य नावगतः । न्यायेन त्वितरदृष्टान्तेन प्रवरोऽपेक्षितः । अतोऽस्ति न वेति संशयः । तत्रास्तीत्युत्तरं ब्रूयात् । यद्यप्यन्येषामिव स्पष्टः प्रवरो नास्ति तथाऽपि पुरोडाशशकलं प्रत्तमिलाभि[1] रन्याऽऽसीनमच्छावाकमच्छावाक यत्ते तव वाद्यं वक्तव्यमस्ति तद्वदस्वेति सोऽयमच्छावाकसंबोधनेन प्रवरसमानत्वात्प्रवर इत्युच्यते ।

इत्थमग्निष्टोमसंस्थे होत्रकविषयव्यापारं परिसमाप्याधुनोक्थसंस्थेषु प्रश्नोत्तरे दर्शयति—

अथाऽऽह यदैन्द्रावरुणं मैत्रावरुणस्तृतीयसवने शंसत्यथ कस्मादस्याऽऽग्नेयौ स्तोत्रियानुरूपौ भवत

१ ख. झ. 'मिळाभि' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



इत्यग्निना वै मुखेन देवा असुरानुक्थेभ्यो निर्जघ्नुस्तस्मादस्याऽऽग्नेयौ स्तोत्रियानुरूपौ भवतः, इति ।

अच्छावाकप्रवरसंपादनानन्तरं ब्रह्मवादी प्रश्नमाह । मैत्रावरुणस्तृतीयसवन इन्द्रावरुणा युवमित्यादिकमैन्द्रावरुणं सूक्तं शंसति । तस्य शस्त्रादावेहूष्वित्याग्नेयं स्तोत्रिय आग्निरगामीत्याग्नेयोऽनुरूपः । तदेतद्व्यधिकरणत्वादयुक्तम् । ऐन्द्रावरुणाभ्यां स्तोत्रियानुरूपाभ्यां भवितव्यमिति प्रश्नः । अग्निनेत्यादिना तस्योत्तरम् । यदा देवा असुरानुक्थेभ्यो निर्जघ्नुर्निःशेषेण हतवन्तो दूरेऽपसारितवन्तस्तदानीमग्निमुखं प्रधानभूतं कृत्वा तन्मुखेन निःसारितवन्तः । एतद्वाग्निष्टोमं वै देवा अश्रयन्तेत्यादौ विस्पष्टमुदीरितम् । तस्मादसुरनिःसारणेऽग्नेर्मुख्यत्वादाग्नेयौ स्तोत्रियानुरूपौ युक्तौ ।

ब्राह्मणाच्छंस्यच्छावाकविषयप्रश्नोत्तरे दर्शयति—

अथाऽऽह यदैन्द्राबार्हस्पत्यं ब्राह्मणाच्छंसी तृतीयसवने शंसत्यैन्द्रावैष्णवमच्छावाकः कथमेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्तीतीन्द्रो ह स्म वा असुरानुक्थेभ्यः प्रजिगाय सोऽब्रवीत्कश्चाहं चेत्यहं चाहं चेति ह स्म देवता अन्ववयन्ति स यदिन्द्रः पूर्वः प्रजिगाय तस्मादेनयोरैन्द्राः स्तोत्रियानुरूपा भवन्ति यद्वहं चाहं चेति ह स्म देवता अन्ववयुस्तस्मान्नानादेवत्यानि शंसतः ॥ १४ ॥ इति ।

तृतीयसवने ब्राह्मणाच्छंसिनः प्र मंहिष्ठायेत्यैन्द्राबार्हस्पत्यं शस्त्रम् । तस्याऽऽदौ स्तोत्रियानुरूपावैन्द्रौ । वयमु त्वेति स्तोत्रियो यो न इदमित्यनुरूपः । तथाऽच्छावाकस्य ऋतुर्जनित्रीत्यादिकमैन्द्रावैष्णवं शस्त्रम् । तस्याऽऽदावैन्द्रौ स्तोत्रियानुरूपौ । अधा हीन्द्र गिर्वण इति स्तोत्रियः । इयन्त इन्द्र गिर्वण इत्यनुरूपः । तदेतद्वैयधिकरण्यमुपजीव्य पूर्ववत्प्रश्नः । इन्द्रो हेत्यादिकमुत्तरम् । इन्द्रः स्वयमुक्थेभ्यः शस्त्रेभ्यः सकाशादसुरान्प्राजिगाय प्रकर्षेण जितवान्प्राद्राव[य]दित्यर्थः । तदानीमिन्द्र इतरान्देवान्प्रति सहायमपेक्षमाणो युष्माकं मध्ये कश्चाहं चोभौ युद्धार्थं गच्छाव इत्यब्रवीत् । तदानीं देवानां मध्य एकैकोऽहं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



चाहं च तव सहायभूत इत्युक्त्वा देवतास्तमिन्द्रमन्ववयन्ति तस्य पृष्ठतो गच्छन्ति । यस्मात्स इन्द्रः सर्वेषां देवानां मध्ये स्वयं पूर्वगामी सन्नसुरानभिजिगाय तस्मादेनयोर्ब्राह्मणाच्छंस्यच्छावाकशस्त्रयोरप्यैन्द्राः स्तोत्रियानुरूपा युज्यन्ते। यदु यदप्येतदस्त्यहं चाहं च तव सहायभूत इति ब्रुवत्यो देवता इन्द्रमन्ववयुरन्वगच्छन् । तस्मात्कारणाद्देवतान्तराणामपीन्द्रवत्पूज्यत्वान्नानादेवताकानि सूक्तानि ब्राह्मणाच्छंस्यच्छावाकौ शंसतः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्याये षष्ठः खण्डः ॥ ६ ॥ (१४) [ १०१ ]।

---

अथ तेषामेव शस्त्राणां छन्दोदैवतविषये प्रश्नोत्तरे दर्शयति—

अथाऽऽह यद्वैश्वदेवं वै तृतीयसवनमथ कस्मादेतान्यैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्त इतीन्द्रमेवैतैरारभ्य यन्तीति ब्रूयादथो यज्जागतं वै तृतीयसवनं तज्जगत्काम्यैव तद्यत्किं चात ऊर्ध्वं छन्दः शस्यते तद्ध सर्वं जागतं भवत्येतानि चेदैन्द्राणि जागतानि सूक्तानि तृतीयसवन आरम्भणीयानि शस्यन्ते, इति ।

अथैन्द्रावरुणादिशस्त्रेष्वैन्द्रस्तोत्रियानुरूपवर्णनानन्तरं ब्रह्मवादी प्रश्नमाह। तृतीयसवनं वैश्वदेवं बहुदेवताकं यस्मात्तस्माद्वैश्वदेवान्येव सूक्तानि तत्रोचितानि। अथैवं सति तानि परित्यज्य कस्मात्कारणादेतान्यारम्भणीयानि सूक्तान्यैन्द्राणि शस्यन्ते। सति चैन्द्रत्वे त्रिष्टुभो युक्तत्वात्तत्परित्यागेन जागतानि कस्माच्छस्यन्ते । चर्षणीधृतमिति मैत्रावरुणस्य सूक्तम् । प्र मंहिष्ठायेति ब्राह्मणाच्छंसिनः सूक्तम् । ऋतुर्जनित्रीत्यच्छावाकस्य सूक्तम् । एतेषु सूक्तेष्वैन्द्रप्रश्नोत्तरमुच्यते। ऐन्द्रत्वे सत्येतैः सूक्तैरिन्द्रमेवाऽऽरभ्य प्रवृत्ता भवन्ति । इन्द्रो हि प्रारब्धस्याविघ्नेन समाप्तिकारीत्युत्तरं ब्रूयात् । अथो अपि च त्रिष्टुप्परित्यागेन जागतसूक्तमिति यदस्ति तत्तृतीयसवनस्य जागतत्वाज्जगत्काम्यैव जगत्कामनयैव प्रवृत्तिः कृता भवति। अपि च तथा सत्यत ऊर्ध्वमन्यदपि यत्किंचिच्छन्दः शस्यते तत्सर्वं जगतीछन्दस्कमेव संपद्यते ।

Digitized by Arya Samaj Foundation Chennai and eGangotri


आरम्भणीयानामैन्द्राणां सूक्तानां जागतत्वादस्य च्छन्दोन्तरस्य जागतत्वं संपद्यते तच्छन्दोन्तरं दर्शयति—

**अथैतत्त्रैष्टुभमच्छावाकोऽन्ततः शंसति सं वां कर्मणेति यदेव पनाय्यं कर्म तदेतदभिवदति, इति ।**

आरम्भणीयशंसनादूर्ध्वमच्छावाकोऽन्ततः शस्त्रस्यान्ते सं वां कर्मणेत्येतत्सूक्तं त्रिष्टुप्छन्दस्कं संसेत् । अत्रेन्द्राविष्णू संबोध्य वां युवामनेन कर्मणा संहिनोमि सम्यक्प्रीणयामीत्येतदुच्यते । तस्य च कर्मशब्दस्यार्थो यदेवेत्यादिनाऽभिधीयते । पनतिधातुः स्तुत्यर्थे वर्तते । पण व्यवहारे स्तुतौ च । पन चेति वैयाकरणैर्धातुषु पठ्यमानत्वात् । तथा सति पनाय्यं स्तुत्यं सोमपानाख्यं कर्म तदयं मन्त्रोऽभिवदति ।

सं वां कर्मणेत्येतत्प्रथमपादस्य पूर्वभागं व्याख्यायोत्तरभागमनूद्य व्याचष्टे—

**समिषेत्यन्नं वा इषोऽन्नाद्यस्यावरुद्ध्यै, इति ।**

इषाऽन्नेन युवामिन्द्राविष्णू संहिनोमीत्यन्वयः । अत्रान्नमेवेषेत्यस्य शब्दस्यार्थः । इष्, शब्दस्येष इति प्रथमाबहुवचनम् । तस्मादन्नवाचित्वे सत्येतच्छंसनमन्नाद्यस्य प्राप्तये भवति ।

अस्या ऋचश्चतुर्थपादमनूद्य व्याचष्टे—

**अरिष्टैर्नः पथिभिः पारयन्तेति स्वस्तिताया एवैतदहरहः शंसति, इति ।**

नोऽस्मानरिष्टैर्हिंसारहितैः पथिभिः स्वर्गमार्गैः पारयन्ता कर्मणः पारं फलरूपं नयन्ताविन्द्राविष्णू इत्यर्थः । एतस्य पादस्य शंसनं स्वस्तिताया एव क्षेमार्थमेव भवति । तस्मादच्छावाक एतद्वचनमहर्गणेषु प्रतिदिनं शंसति ।

परिधानीयानां छन्दसि प्रश्नोत्तरे दर्शयति—

**अथाऽऽह यज्जागतं वै तृतीयसवनमथ कस्मादेषां त्रिष्टुभः परिधानीया भवन्तीति वीर्यं वै त्रिष्टुब्वीर्य एव तदन्ततः प्रतितिष्ठन्तो यन्ति, इति ।**

तृतीयसवनस्य जागतत्वेन परिधानीया अपि जगत्य एव युक्ताः । एतत्परित्यागेन त्रिष्टुभां स्वीकारे प्रतिदिनं किं कारणमिति प्रश्नः । वीर्यमित्याद्युत्तरम् ।

---

सं वां कर्मणा०—६-६९-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्रिष्टुभो वीर्यस्वरूपत्वात्तया परिधाने सति शस्त्रस्यान्ते वीर्य एव प्रतिष्ठिताः सन्तो यन्ति वर्तन्ते ।

होत्रकाणां त्रयाणामुक्तास्त्रिष्टुभः परिधानीया उदाहृत्य प्रदर्शयति—

**इयमिन्द्रं वरुणमष्टमे गीरिति मैत्रावरुणस्य बृहस्पतिर्नः परिपातु पश्चादिति ब्राह्मणाच्छंसिन उभा जिग्यथुरित्यच्छावाकस्य,** इति ।

तदिदमन्तिमोदाहरणं व्याचष्टे—

**उभौ हि तौ जिग्यतुः,** इति ।

याविन्द्राविष्णू तावुभौ जिग्यतुर्युद्धे जयं प्रापतुरिति प्रसिद्धम् ।

ऋचः पूर्वार्धे उभा जिग्यथुरित्यमुमंशं व्याख्यायांशान्तरव्याख्यानं पठति—

**न पराजयेथे न पराजिग्य इति,** इति ।

तस्यार्धस्य कतरश्चनैनोरित्ययं शेषो ब्राह्मणेनानुदाहृतोऽप्यर्थाववोधाय द्रष्टव्यः । तस्य च सर्वस्यायमर्थः । हे इन्द्राविष्णू युवां न पराजयेथे कदाचिदपि पराजयं न प्राप्तवन्तौ । एनोरेनयोरिन्द्राविष्णवोर्मध्ये कतरश्चनैकोऽपि न पराजिग्ये पराजयं न प्राप । एकैकस्यापि यदा पराजयो नास्ति तदानीमुभयोर्मिलितयोः पराजयो नास्तीति किमु वक्तव्यमिति ।

उक्तस्यार्धस्य तात्पर्यं दर्शयति—

**न हि तयोः कतरश्चन पराजिग्ये,** इति ।

उत्तरार्धं पठति—

**इन्द्रश्च विष्णो यदपस्पृधेथा त्रेधा सहस्रं वि तदैरयेथामिति,** इति ।

यद्यदा हे विष्णो त्वं चेन्द्रश्च युवामुभावपस्पृधेथां स्पर्धामसुरैः सह युद्धं कृतवन्तौ तत्तदानीं सहस्रं त्रेधा विभज्यैरयेथां तं तं भागं तस्मै तस्मै स्वामिने समर्पितवन्तौ ।

तस्य तात्पर्यं दर्शयितुमितिहासमाह—

**इन्द्रश्च ह वै विष्णुश्चासुरैर्युयुधाते तान्ह स्म**

---

इयमिन्द्रं वरुणमष्टमे गीः०—७-८४-५ । ७-८६-५ । बृहस्पतिर्नः परिपातु०—१०-४२-११ । उभा जिग्यथुः०—६-७०-८ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जित्वोचतुः कल्पामहा इति ते ह तथेत्यसुरा ऊचुः सोऽब्रवीदिन्द्रो यावदेवायं विष्णुस्त्रिर्विक्रमते तावदस्माकमथ युष्माकमितरदिति स इमाँल्लोकान्विचक्रमेऽथो वेदानथो वाचं तदाहुः किं तत्सहस्रमितीमे लोका इमे वेदा अथो वागिति ब्रूयात्, इति ।

योऽयमिन्द्रो यश्च विष्णुस्तावुभावसुरैः सह युयुधाते युद्धं कृतवन्तौ । ततस्तावसुराञ्जित्वा तैः सहेदमूचतुः । हेऽसुरा वयं सर्वे कल्पामहै विभागं करवामहा इति । असुरास्तथेत्यङ्गी चक्रुः । तदानीमसुरैः सहेन्द्र एवमब्रवीत् । अयं विष्णुर्यावद्वस्तूद्दिश्य त्रिर्विक्रमते वस्तुजाते पादत्रयं प्रक्षिपति तावद्वस्तु सर्वमस्माकं भवतु । अथेतरदवशिष्टं युष्माकमस्त्विति । एवमसुरैः सह समयं कृत्वा स विष्णुरिमाँल्लोकांस्त्रीनप्येकेन पादेन विचक्रमे विक्रान्तवान् । लोकत्रयस्योपर्येकमेव पादं प्रक्षिप्तवान् । अथो तदनन्तरं वेदान्विचक्रमे सर्वेषां वेदानामुपर्येकं पादं प्रक्षिप्तवान् । अथो तदनन्तरं वाचं विचक्रमे सर्वस्या वाच उपरि तृतीयं पादं प्रक्षिप्तवान् । एवं पादत्रयेणाऽऽक्रान्तं सर्वमिन्द्राविष्ण्वोर्भाग आसीत् । एवं विभागे व्यवस्थिते सति तत्तन्मन्त्रार्थे ब्रह्मवादिनः प्रश्नमाहुः । त्रेधा सहस्रमिति मन्त्रे यदुक्तं तत्र सहस्रशब्देन किमुच्यत इति । इम इत्यादिकं तदुत्तरम् । य इमे त्रयो लोका ये चेमे वेदा या चेयं वाक्तदेतदपरिमितत्वस्योपलक्षकेण सहस्रशब्देन विवक्षितमित्युत्तरं ब्रूयात् । यद्यप्ययं मन्त्रस्तैत्तिरीयाणां सप्तमे काण्डेऽतिरात्रस्य यागे दक्षिणारूपगोसहस्रविषयत्वेनोदाहृतस्तथाऽप्यत्र सहस्रशब्दः सर्वजगद्विषयत्वेन श्रुत्येव व्याख्यायत इत्युभयार्थत्वमस्तु । यदुक्तमाश्वलायनेन—'उत्तमे शस्त्रे परिधानीयाया उत्तमे वचन उत्तमं चतुरक्षरं द्विरुक्त्वा प्रणुयात्' इति ।

तमेव चतुरक्षराभ्यासं विधत्ते—

ऐरयेथामैरयेथामित्यच्छावाक उक्थ्येऽभ्यस्यति स हि तत्रान्त्यो भवति, इति ।

उक्थ्यनामके क्रतावच्छावाक ऐरयेथामिति चतुरक्षरभागं द्विरभ्यस्येत् । स हि भागस्तत्राच्छावाकशस्त्रेऽन्त्यो भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अच्छावाकस्याभ्यासं विधाय होतुरभ्यासं विधत्ते—

अग्निष्टोमे होताऽतिरात्रे च स हि तत्रान्त्यो भवति, इति।

अहर्गणेषूक्थ्यसंस्थायां यथाऽच्छावाकस्यान्तिमे शस्त्रेऽभ्यासस्तथाऽग्निष्टोमसंस्थायामतिरात्रसंस्थायां होताऽन्तिमे शस्त्रेऽन्तिमं चतुरक्षरभागमभ्यस्येत्। स हि होता तत्रोभयत्रान्त्यः शंसिता भवति । अग्निष्टोमे यज्जरित्रे यज्जरित्रोमिति चतुरक्षराभ्यासः । अतिरात्रे तु धेहि चित्रं धेहि चित्रोमिति चतुरक्षराभ्यासः ।

षोडशिसंस्थायां विचारपूर्वकं चतुरक्षराभ्यासं विधत्ते—

अभ्यस्येत्षोळशिनी३ नाभ्यस्ये३त्, इति । अभ्यस्येदित्याहुः कथमन्येष्वहःस्वभ्यस्यति कथमत्र नाभ्यस्येदिति तस्मादभ्यस्येत् ॥ १५ ॥ इति ।

विचारार्थं प्लुतिद्वयम् । तत्राभ्यस्येदिति निर्णयमाहुः । तत्रेयमुपपत्तिः । इतरेष्वहःसु चतुरक्षरभागमभ्यस्यात्रैव परित्यागे कारणं नास्तीति। तस्मादित्युपसंहारः । सख्युः पदे सख्युः पदो३मिति चतुरक्षराभ्यासो द्रष्टव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (१५) [१०२]।

---

अच्छावाकविषये पुनरपि प्रश्नमुत्थापयति—

अथाऽऽह यन्नाराशंसं वै तृतीयसवनमथ कस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसतीति, इति ।

अथ चतुरक्षराभ्यासकथनानन्तरं ब्रह्मवादी प्रश्नमाह । यद्यस्मात्कारणात्तृतीयसवनं नाराशंसं वै नरा मनुष्या ऋभवोऽङ्गिरसो वा यत्र शस्यन्ते तन्नाराशंसम्। तत्संबन्धिनि तृतीयसवने सति त(क)स्मात्कारणादच्छावाकोऽन्ततस्तृतीयसवन[स्यान्ते] शिल्पाख्येषु शस्त्रेषु नाराशंससंबन्धरहिता ऋचः शंसति। ऋतुर्जनित्रीत्यादिकमच्छावाकः शंसति न च तत्र नराः शस्यन्ते तत्कथमुपपादितमिति प्रश्नः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्योत्तरमाह—

विकृतिर्वै नाराशंसं किमिव च वै किमिव च रेतो विक्रियते तत्तदा विकृतं प्रजातं भवत्यथैतन्मृद्विव च्छन्दः शिथिरं यन्नाराशंसमथैषोऽन्त्यो यदच्छावाकस्तद्दृह्ळतायै दृह्ळे प्रतिष्ठास्याम इति, इति ।

गर्भाशये निषिक्तस्य रेतसो विकृतिर्वै विकारपरिणा[1] – – – – नाराशंसं – – – परिणामक्रमेणैव भवति । लोके निषिक्तं रेतः किमिव च वै किमिव च क्रमेण किंचित्किंचिदेव विक्रियते । तथा च गर्भोपनिषदि—['एकरात्रोषितं कलिलं] भवति सप्तरात्रोषितं बुद्बुदं भवत्यर्धमासाभ्यन्तरेण पिण्डो भवति' इत्यादि । तत्तादृशं क्रमेण विक्रियमाणं रेतो यदा साकल्येन विकृतं विवृद्धं भवति तदा प्रजातं भवति पुत्रादिरूपेणोत्पद्यते। तस्मान्नाराशंसे तृतीयसवने विकारस्थानीयोऽन्तिमो भागः । तत्र संपूर्णतयोत्पत्त्यर्थमनाराशंसीनामृचां शंसनमित्यभिप्रायः । अथान्यदपि कारणमस्ति । यन्नाराशंसं छन्दो मनुष्यशंसनसंबन्धि च्छन्दोऽस्ति तन्मृद्विव मार्दवोपेतमेव । तस्यैव व्याख्यानं शिथिरमिति । शिथिलमदृढमित्यर्थः । अस्यापि च योऽच्छावाकोऽस्त्येषोऽन्त्य ऋत्विक् । न ह्येतदीयशंसनस्योपरि किंचिदन्यच्छंसनमस्त्यतोऽन्तिमत्वाद्दृढः । तस्माद्दृढतायै दार्ढ्यार्थं दृह्ळे(ढे) स्थाने प्रतिष्ठास्याम इत्यनेनाभिप्रायेण तासामनाराशंसीनामृचां शंसनमित्यर्थः ।

उपपादितमर्थमुपसंहरति—

तस्मादच्छावाकोऽन्ततः शिल्पेष्वनाराशंसीः शंसति दृह्ळतायै दृह्ळे प्रतिष्ठास्याम इति दृह्ळे प्रतिष्ठास्याम इति ॥ १६ ॥ इति ।

अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टाविंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (१६) [१०३] ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्येऽष्टाविंशोऽध्यायः ॥ २८ ॥

---

1 क. °णामो— — — नां ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथैकोनत्रिंशोऽध्यायः ।

---

उन्नीयमानसूक्तानि तथा प्रस्थितयाज्यकाः ।
प्रश्नोत्तराभ्यां संप्रोक्तः प्रयोगस्य च निर्णयः ॥

अथाहर्गणेषु होत्रकाणां माध्यंदिनीयशस्त्रक्लृप्तिर्वक्तव्या ।

तत्र प्रथमं तावत्सर्वत्र विहितमर्थमनूद्य प्रशंसति—

यः श्वःस्तोत्रियस्तमनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसंतत्यै, इति ।

अहर्गणेषु श्वः परेद्युर्यस्मिंस्तृचे सामगाः स्तोत्रं कुर्वन्ति तं स्तोत्रियं पूर्वेद्युर्होतारः शस्त्रेष्वनुरूपं कुर्वन्ति । एतच्च प्रातःसवन एव । तच्चानुरूपकरणमहीनस्य संतत्यै संपद्यते । अह्नां समूहरूपः क्रतुरहीनः । स चैकैकस्मिन्नहनि विच्छिन्नो मा भूदित्यहर्द्वयसंधानार्थं भविष्यत्यहनि स्तोत्रियस्य भूतेऽहन्यनुरूपत्वकरणम् । अह्नां भेदेऽपि फलैक्यात्समूहप्रयोग एक एव । ततः संततिरपेक्षिता । अयमर्थः सप्तविंशाध्याये व्याख्यातः—स्तोत्रियं स्तोत्रियस्यानुरूपं कुर्वन्ति प्रातःसवनेऽहरेव तदह्नोऽनुरूपं कुर्वन्तीति । तस्य व्याख्यानमिदं श्वःस्तोत्रिय इत्यभिमेतविशेषस्य विधानात् ।

अहर्भेदेऽपि प्रयोगैक्येन सांतत्यं दृष्टान्तेनोपपादयति—

यथा वा एकाहः सुत एवमहीनस्तद्यथैकाहस्य सुतस्य सवनानि संतिष्ठमानानि यन्त्येवमेवाहीनस्याहानि संतिष्ठमानानि घ्नन्ति तद्यच्छ्वःस्तोत्रियमनुरूपं कुर्वन्ति प्रातःसवनेऽहीनसंतत्या अहीनमेव तत्संतन्वन्ति, इति ।

एकस्मिन्नेवाहनि निष्पन्नो ज्योतिष्टोम एकाहः । स यथा सुतः सोमाभिषवेण कृत्स्नो निष्पादित एवमहीनोऽहर्गणोऽपि सोमाभिषवेण निष्पाद्यते । तावेव दृष्टान्तदार्ष्टान्तिकौ तद्यथेत्यादिना स्पष्टी क्रियेते । तत्तस्यैकाहस्य सुतस्य सोमाभिषवयुक्तस्यैव सतः क्रतोरवयवभूतानि प्रातर्माध्यंदिनतृतीयसवनानि संतिष्ठमानानि पृथक्पृथक्समाप्तियुक्तानि सन्ति यजमाना अनुतिष्ठन्त्येवमेवाहीनस्याहर्गणस्यैकस्यैव सतः क्रतोरवयवभूतान्यहानि पृथक्पृथक्समाप्तियु-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कानि यजमाना अनुतिष्ठन्ति । तथा सति यद्युत्तरदिनसंबन्धिनं स्तोत्रियं तृचं पूर्वदिने प्रातःसवनेऽनुरूपं तृचं कुर्वन्ति तदानीमहर्गणस्यैकस्य क्रतोः संततिमध्ये विच्छेदराहित्यं भवति । तस्मादन्यदिने गतस्यान्यदिने प्रयोगेणाहीनं क्रतुं संततं कुर्वन्ति ।

अथ माध्यंदिनीयशस्त्रक्तृप्तिं विधातुमाख्यायिकामाह—

ते वै देवाश्च ऋषयश्चाऽऽद्रियन्त समानेन यज्ञं संतनवामेति त एतत्समानं यज्ञस्यापश्यन्समानान्प्रगाथान्समानीः प्रतिपदः समानानि सूक्तानि, इति ।

ते वै प्रसिद्धा वस्वादयो देवाश्च विश्वामित्रप्रभृतय ऋषयश्चाऽऽद्रियन्त मनस्येवमादरमकुर्वन्तः(त) । कीदृश आदरः सोऽभिधीयते । समानेन सर्वेष्वेकविधानेन प्रयोगेण यज्ञमहीनं संतनवाम संततं करवामेति मनसि विचार्य ते द्विविधा देवा ऋषयश्चैतद्वक्ष्यमाणं मन्त्रजातं यज्ञस्याहीनस्य समानं सर्वेष्वहःसु सदृशमपश्यन् । किं किं सदृशमित्युच्यते । ये ककुत्संज्ञकाः प्रगाथा याश्च प्रतिपदः प्रारम्भणीया ऋचो यानि चाहीनसूक्तानि तेषां सर्वेषामहःसु सर्वेषु समानत्वमपश्यन् ।

साम्ये प्रयोजनं दृष्टान्तेन दर्शयति —

ओकःसारी वा इन्द्रो यत्र वा इन्द्रः पूर्वं गच्छत्यैव तत्रापरं गच्छति यज्ञस्यैव सेन्द्रतायै ॥ १७ ॥ इति ।

ओकांसि स्थानानि गृहाणि तेषु सरति सर्वदा संचरतीत्योकःसारी मार्जारः । वैशब्द उपमार्थः । यथा मार्जारः पूर्वस्मिन्दिने येषु गृहेषु संचरति तेष्वेव गृहेषु परेद्युरपि संचरति । एवमयमिन्द्रोऽप्यवगन्तव्यः । स चेन्द्रो यत्र वै येषु स्थानेषु पूर्वमहर्गच्छति तत्र तेष्वेव स्थानेष्वपरमहरागच्छत्येव । अतोऽहीनस्य यज्ञस्य सर्वस्यापि सेन्द्रत्वार्थं पूर्वोक्तं समानत्वमादरणीयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये प्रथमः खण्डः ॥१॥ (१७) [१०४] ।

---

अथ संपातनामकानि सूक्तान्याख्यायिकया दर्शयति—

तान्वा एतान्संपातान्विश्वामित्रः प्रथममपश्यत्तान्वि-

१ क. °म्येन प्र° । ख. ट. °म्येन प्र° । झ. °म्येतं प्र° ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



श्वामित्रेण दृष्टान्वामदेवोऽसृजतैवा त्वामिन्द्र वज्रि-न्नत्र यन्न इन्द्रो जुजुषे यच्च वष्टि कथा महामवृ-धत्कस्य होतुरिति तान्क्षिप्रं समपतद्यत्क्षिप्रं समप-तत्तत्संपातानां संपातत्वम्, इति ।

तान्वै शास्त्रप्रसिद्धानेवैतानत्रैवोदाहरिष्यमाणान्संपातनामकान्सूक्तविशे-न्विश्वामित्रो महर्षिः प्रथमं सृष्ट्यादावीश्वरानुग्रहेणापश्यन्मनसा वेदमध्ये ज्ञा-वान् ।विश्वामित्रेण सृष्टा ये सूक्तविशेषास्तानधीत्य वामदेवो महर्षिरसृजत स्व-कीयत्वेन लोके प्रकटीकृतवान् । ते सूक्तविशेषा उदाह्रियन्ते—एवा त्वामिन्द्रे-सूक्तम् । यन्न इन्द्र इति द्वितीयम् । कथा महामिति तृतीयम् । तांस्त्रीन्सूक्तविशे-न्वामदेवः क्षिप्रं समपतत् । कालविलम्बे सति विश्वामित्र आगत्य स्वकीयत्वं प्रकटी करिष्यतीति भीत्या स्वयं शीघ्रमेव समपतत्सम्यगध्येतॄञ्छिष्यान्प्राप्य न्स्वकीयत्वप्रसिद्ध्यर्थं बहूञ्छिष्यान्सहसाऽध्यापयामासेत्यर्थः । तत्तेषु सूक्ते-यद्यस्मात्कारणात्क्षिप्रं समपतत्तत्तस्मात्कारणात्सम्यक्पतनं प्रकटीकरणमेषां सूक्तानामिति व्युत्पत्त्या संपातनाम संपन्नम् ।

अथ सूक्तान्तराणां सृष्टिं दर्शयति—

स हेक्षांचक्रे विश्वामित्रो यान्वा अहं संपातानपश्यं तान्वामदेवोऽसृष्ट कानि न्वहं सूक्तानि संपातांस्त-त्प्रतिमान्सृजेयेति स एतानि सूक्तानि संपातांस्तत्प्रति-मानसृजत सद्यो ह जातो वृषभः कनीन इन्द्रः पूर्भि-दातिरद्दासमर्कैरिमामू षु प्रभृतिं सातये धा इच्छन्ति त्वा सोम्यासः सखायः शासद्वह्निर्दुहितुर्नप्त्यङ्गा-

---

एवा त्वामिन्द्र वज्रिन्०—४–१९–१ । यन्न इन्द्रो जुजुषे यच्च वष्टि०—४–२२–१ । कथा महामवृधत्कस्य होतुः०—४–२३–१ । सद्यो ह जातो वृषभः०—३–४९–१ । इन्द्रः पूर्भिदातिरद्दासमर्कैः०—३–३४–१ । इमामू षु प्रभृतिं सातये धाः०—३–३६–१ । इच्छन्ति त्वा सोम्यासः०—३–३०–१ । शासद्वह्निर्दुहितुः०—३–३१–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अभि तष्टेव दीधया मनीषामिति, इति ।

वामदेववृत्तान्तमवगत्य स विश्वामित्र ईक्षांचक्रे मनस्येवं विचारितवान् । यान्संपातानहमीश्वरानुग्रहेण दृष्टवानस्मि तानयं वामदेवोऽस्रष्ट गुरुद्रोहभीतिरहितः सन्स्वकीयत्वेन लोके प्रकटीकृतवान् । इतःपरं केषांचित्सूक्तानां मदीयत्वप्रसिद्धिरपेक्षिता । अतोऽहं कानि नाम सूक्तानि तत्प्रतिमान्पूर्वसूक्तसदृशान्संपातान्कृत्वा सृजेय लोके प्रकटी करवाणीति विचार्य विश्वामित्र एतानि वक्ष्यमाणानि सूक्तानि पूर्वसूक्तसदृशान्संपातान्कृत्वाऽसृजत प्रकटीकृतवान् । तेषु सद्यो ह जात इत्येकं सूक्तम् । इन्द्रः पूर्भिदिति द्वितीयम् । इमामू ष्विति तृतीयम् । इच्छन्ति त्वेति चतुर्थम् । शासद्वह्निरिति पञ्चमम् । अभि तष्टेवेति षष्ठम् । एतानि सूक्तानि विश्वामित्रसंबन्धित्वेन प्रसिद्धान्यभवन् ।

अथ भरद्वाजवसिष्ठनोधसां त्रयाणामृषीणां संबन्धीनि सूक्तानि दर्शयति—

य एक इद्धव्यश्चर्षणीनामिति भरद्वाजो यस्तिग्मशृङ्गो वृषभो न भीम उदु ब्रह्माण्यैरत श्रवस्येति वसिष्ठोऽस्मा इदु प्र तवसे तुरायेति नोधाः, इति ।

भरद्वाजो य एक इदित्येकं सूक्तमसृजत । वसिष्ठो यस्तिग्मशृङ्ग उदु ब्रह्माणीति सूक्तद्वयमसृजत । नोधा अस्मा इदु प्र तवस इत्येकं सूक्तमसृजत । एतेषां सर्वेषां सूक्तानां तत्र तत्र विनियोगो वक्ष्यते ।

इदानीमहीनसूक्तानि विधत्ते—

त एते प्रातःसवने षळहस्तोत्रियाञ्छस्त्वा माध्यंदिनेऽहीनसूक्तानि शंसन्ति, इति ।

ते प्रसिद्धा एते प्रयोगकाले संनिहिता होत्रका अहर्गणेषु प्रातःसवने षळहसंबन्धिनः स्तोत्रियांस्तृचाना नो मित्रावरुणा मित्रं वयमित्यादीन्सूत्रकारपठितांस्तृचाञ्शस्त्वा माध्यंदिने सवने त्वहीनसूक्तानि शंसेयुः ।

अभि तष्टेव दीधया०—३—३८—१ । य एक इद्धव्यश्चर्षणीनाम्०—६—२२—१ । यस्तिग्मशृङ्गो वृषभः—७—१९—[1] । उदु ब्रह्माण्यैरत श्रवस्य०—७—२४—१ । अस्मा इदु प्र तवसे तुराय०—१—६१—१ ।

१ ट. 'शान्क' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



कान्यहीनसूक्तानीत्याशङ्क्योदाहरति—

तान्येतान्यहीनसूक्तान्या सत्यो यातु मघवाँ ऋजीषीति सत्यवन्मैत्रावरुणोऽस्मा इदु प्र तवसे तुरायेन्द्राय ब्रह्माणि राततमा । इन्द्रब्रह्माणि गोतमासो अक्रन्निति ब्रह्मण्वद्ब्राह्मणाच्छंसी शासद्वह्निर्जनयन्त वह्निमिति वह्निवदच्छावाकः, इति ।

तानि पूर्ववाक्ये विहितान्यहीनसूक्तान्येतान्युदाह्रियन्ते । आ सत्यो यात्विति सत्यवत्सत्यशब्दोपेतं सूक्तं मैत्रावरुणः शंसेत् । अस्मा इदिति सूक्तम् । इन्द्राय ब्रह्माणीति चतुर्थः पादः । तत्र ब्रह्माणीति श्रुतत्वादिदं सूक्तं ब्रह्मण्वद्ब्रह्मञ्शब्दोपेतम् । तथा तत्रैव सूक्त इन्द्रब्रह्माणीति श्रुतत्वादिन्द्रब्रह्मण्वत्तदेतदुभयं ब्राह्मणाच्छंसी शंसेत् । शासद्वह्निरिति सूक्तं वह्निवद्वह्निशब्दोपेतम् । तस्मिन्सूक्ते जनयन्त वह्निमिति श्रुतत्वात् । तदेतदच्छावाकः शंसेत् ।

अथाच्छावाकविषयं प्रश्नमुद्भावयति—

तदाहुः कस्मादच्छावाको वह्निवदेतत्सूक्तमुभयत्र शंसति पराञ्चिषु चैवाहःस्वभ्यावर्तिषु चेति, इति ।

गवामयने हि द्विविधान्यहान्यावृत्तिरहितानि तत्सहितानि च वक्ष्यमाणानि चतुर्विंशादीन्यावृत्तिरहितानि । अभिप्लवषडहगतानि पृष्ठ्यषडहगतानि चाऽऽवृत्तिसहितानि । तयोः षडहयोरसकृदनुष्ठानस्य विहितत्वात् । एवं सति पराञ्चिष्वावृत्तिरहितेषु चतुर्विंशादिष्वहःसु वह्निवत्सूक्तमच्छावाकः शंसति । तथैवाभ्यावर्तिषु षडहगतेष्वहःसु च तत्सूक्तं शंसति । तत्रोभयत्र शंसने किं कारणमिति प्रश्नः ।

तस्योत्तरमाह—

वीर्यवान्वा एष बह्वृचो वह्निवदेतत्सूक्तं वहति ह वै वह्निर्धुरो यासु युज्यते तस्मादच्छावाको वह्निवदेतत्सूक्तमुभयत्र शंसति पराञ्चिषु चैवाहःस्वभ्याव-

---

आ सत्यो यातु मघ०—४–१६–१ । अस्मा इदु प्र तवसे०—१–६१–१ ।
इन्द्र ब्रह्माणि गोतमासो०—१–६१–१६ । शासद्वह्निर्जनयन्त०—३–३१–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्तिषु च, इति ।

एषोऽच्छावाको बह्वृचः । बहूनामृचामनेनाधीतत्वात् । तादृशोऽच्छावा-कत्वं पूर्वत्रैवमाम्नातम्—'तस्माद्यो ब्राह्मणो बह्वृचो वीर्यवान्स्यात्सोऽस्याच्छावाकीयं कुर्यात्' इति । बह्वृचत्वादेवायं वीर्यवाञ्शक्तिमान्यज्ञभारं वोढुं शक्तः । सूक्तं चैतद्वह्निशब्दोपेतत्वात्तस्य योग्यम् । लोकेऽपि वह्निर्वोढाऽश्वो बलीवर्दो वा यासु रथशकटसंबधिनीषु धूर्षु युज्यते बध्यते ता धुरो वहत्येव । तस्माद्यज्ञभारं वोढुं समर्थत्वादच्छावाक उभयत्र द्विविधेष्वप्यहःसु वह्निवत्सूक्तं शंसति ।

तत्राऽऽवृत्तिरहितेष्वहःसु पूर्वोक्तसूक्तानां शंसनं प्रशंसति—

तानि पञ्चस्वहःसु भवन्ति चतुर्विंशेऽभिजिति विषुवति विश्वजिति महाव्रतेऽहीनाहि ह वा एतान्यहानि न ह्येषु किंचन हीयते पराञ्चीनि ह वा एतान्यहान्यनभ्यावर्तीनि तस्मादेनान्येतेष्वहःसु शंसन्ति, इति ।

गवामयने चतुर्विंशाख्यमारम्भणीयं द्वितीयमहः । महाव्रताख्यमुपान्त्यमहः । विषुवदाख्यं मध्यवर्ति प्रधानमहः । अभिजिद्विश्वजिदाख्ये विषुवत उभयभागवर्तिनी द्वे अहनी । एतेषु पञ्चस्वहःसु तानि पूर्वोक्तान्यहीनसूक्तानि होत्रकाः शंसन्ति । एतेषामह्नामहीनत्वात्तानि सूक्तानि तत्र योग्यानि । यस्मादेतेष्वहःसु किमप्यङ्गं न हीयते तस्मादेतान्यहीनानि । किंचैतान्यहीनानि पराञ्चीनि सकृदेव प्रयोज्यानि न त्वावृत्तियुक्तानि । तस्यैव पदव्याख्यानमनभ्यावर्तीनीति । तस्मात्सकृदेव प्रयोज्यत्वात्तेष्वहःसु सामर्थ्यातिशयाय तानि सूक्तानि शंसेयुः ।

प्रकारान्तरेण सूक्तानि प्रशंसति—

यदेनानि शंसन्त्यहीनान्स्वर्गाँल्लोकान्सर्वरूपान्सर्वसमृद्धानवाप्नवामेति, इति ।

ये स्वर्गलोका अहीना भोग्यैर्वस्तुभिर्हीना न भवन्ति । अत एव सर्वसमृद्धा उत्तममध्यमाधमकर्मफलरूपत्वात्सर्वरूपा बहुविधा भवन्ति । ताँल्लोकान्प्राप्नवामेत्यनेनाभिप्रायेण तानि सूक्तानि शंसेयुः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुनरपि प्रकारान्तरेण प्रशंसति—

यदेवैनानि शंसन्तीन्द्रमेवैतैर्निह्वयन्ते यथ ऋषभं वाशितायै, इति।

एतानि सूक्तानि यदा शंसन्ति तदानीमेतैरिन्द्रमेव निह्वयन्ते नितरामाह्वयन्ति। गर्भग्रहणमिच्छन्ती धेनुर्वाशिता। तदर्थमृषभं पुंगवं यथाऽऽह्वयति तद्वदिन्द्राह्वानं द्रष्टव्यम्।

पुनरपि प्रकारान्तरेण सूक्तानि प्रशंसति—

यद्वेवैनानि शंसन्त्यहीनस्य संतत्या अहीनमेव तत्संतन्वन्ति ॥ १८ ॥ इति।

यद्वेव यस्मादेव कारणादेनानि सूक्तानि सर्वेष्वहःसु शंसन्ति तस्मादेव कारणादेतच्छंसनमहीनस्याहर्गणस्य संतत्यर्थं संपद्यते। तत्तेन शंसनेनाहीनमेवाहर्गणमेव संतन्वन्ति संततं कुर्वन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये द्वितीयः खण्डः॥ २ ॥ (१८) [१०५]।

---

अथ पूर्वोक्तानां संपातसूक्तानां विनियोगं दर्शयति—

ततो वा एतांस्त्रीन्संपातान्मैत्रावरुणो विपर्यासमेकैकमहरहः शंसति, इति।

ततो वै तस्मादेव पूर्वोक्ताच्चतुर्विंशादेरहःपञ्चकादन्यत्र षडहेष्विति शेषः। तेषु मैत्रावरुणस्त्रीन्संपाताख्यान्सूक्तविशेषान्विपर्यासं विपर्यस्य शंसेत्। स एव विपर्यास एकैकमहरह इत्यनेन स्पष्टी क्रियते। प्रतिदिनमेकैकसूक्तमित्यर्थः।

तदेवोदाहृत्य प्रदर्शयति—

एवा त्वामिन्द्र वज्रिन्नत्रेति प्रथमेऽहनि यन्न इन्द्रो जुजुषे यच्च वष्टीति द्वितीये कथा महामवृधत्कस्य होतुरिति तृतीये, इति।

---

एवा त्वामिन्द्र वज्रिन्नत्र—४-१९-१। यन्न इन्द्रो जुजुषे यच्च वष्टि०-४-२२-१। कथा महामवृधत्कस्य होतुः० — ४-२३-१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मैत्रावरुणवद्ब्राह्मणाच्छंसिनोऽपि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति—

त्रीनेव संपातान्ब्राह्मणाच्छंसी विपर्यासमेकैकमहरहः शंसतीन्द्रः पूर्भिदातिरद्दासमर्कैरिति प्रथमेऽहनि य एक इद्धव्यश्चर्षणीनामिति द्वितीये यस्तिग्मशृङ्गो वृषभो न भीम इति तृतीये, इति ।

तथाऽच्छावाकस्यापि सूक्तत्रयस्य विपर्यासेन शंसनं दर्शयति—

त्रीनेव संपातानच्छावाको विपर्यासमेकैकमहरहः शंसतीमामू षु प्रभृतिं सातये धा इति प्रथमेऽहनीच्छन्ति त्वा सोम्यासः सखाय इति द्वितीये शासद्वह्निर्दुहितुर्नप्त्यङ्गादिति तृतीये, इति ।

उक्तानां सूक्तानां मिलित्वा संख्यां दर्शयति—

तानि वा एतानि नव, इति ।

दिनविशेषेण सूक्तविशेषान्विधाय प्रतिदिनं शंसनीयानि सूक्तानि विधत्ते—

त्रीणि चाहरहः शस्यानि, इति ।

यानि प्रतिदिनं शंसनीयानि त्रीणि सूक्तानि तान्युपरितनखण्डे सद्यो ह जात इत्यादिना स्पष्टी करिष्यन्ते ।

दिनविशेषगतानि प्रतिदिनगतानि च मिलित्वा प्रशंसति—

तानि द्वादश संपद्यन्ते द्वादश वै मासाः संवत्सर संवत्सरः प्रजापतिः प्रजापतिर्यज्ञस्तत्संवत्सरं प्रजापतिं यज्ञमाप्नुवन्ति तत्संवत्सरे प्रजापतौ यज्ञेऽहरहः प्रतितिष्ठन्तो यन्ति, इति ।

तानि पूर्वोक्तानि नव त्रीणि च मिलित्वा द्वादश संपद्यन्ते । अतो माससं·

---

इन्द्रः पूर्भिदातिरद्दासमर्कैः०—३–३४–१ । य एक इद्धव्यश्चर्षणीनाम्०—६ २२–१ । यस्तिग्मशृङ्गो वृषभः०—७–१९–१ । इमामू षु प्रभृतिं सातये धाः०—३–३६–१ । इच्छन्ति त्वा सोम्यासः०—३–३०–१ । शासद्वह्निर्दुहितुः० ३–३१–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वत्सरतन्निर्मातृप्रजापतिद्वारा प्रजापतिसृष्टत्वेन प्रजापतिरूपो यो यज्ञस्तात् संवत्सरात्मकं प्रजापतिरूपं यज्ञमनुष्ठातारः प्राप्नुवन्ति । तत्तेन शंसनेन सं त्सरात्मकप्रजापतिरूपे यज्ञे प्रतिदिनं प्रतिष्ठिताः सन्तोऽनुतिष्ठन्ति ।

अथ पृष्ठ्यषडहस्योत्तरस्मिंस्त्र्यहे कासांचिदृचामावापं विधत्ते—

तान्यन्तरेणाऽऽवापमावपेरन्, इति ।

यानि विपर्यासेन शंसनीयानि नवसंख्याकानि सूक्तान्युक्तानि यानि च प्रतिदिनं शंसनीयानि त्रीण्युक्तानि तान्यन्तरेण तेषामुभयविधानामन्तराले स्थाने किंचिदावपनीयमृक्समूहमावपेरन् ।

कस्मिन्दिने का ऋच आवपनीया इत्याशङ्क्य तत्सर्वं विविच्य दर्शयति—

अन्यूङ्ख्या विराजो वैमदीश्च चतुर्थेऽहनि

पङ्क्तीः पञ्चमे पारुच्छेपीः षष्ठे, इति ।

उच्चारणविशेषोपेता ओंकारा न्यूङ्खाः । ते च पूर्वमेव मुखतो मध्यंदिने न्यूङ्खयतीत्यत्राभिहिताः । तानर्हन्तीति न्यूङ्ख्याः । तद्विपरीता अन्यूङ्ख्याः । विराजो विराट्छन्दस्का ऋचः । ताः पृष्ठ्यषडहस्य चतुर्थेऽहन्यावपनीयाः । न ते गिरो अपि मृष्येत्याद्याश्चतस्र ऋचः । प्र वो महे महिवृधे भरध्वमित्याद्यास्तिस्रः । एताः सप्त विराजः । त्रयाणां होत्रकाणां त्रयस्तृचा भवन्ति । प्रथममारभ्यैकस्तृचो मैत्रावरुणस्य । तृतीयमारभ्यैकस्तृचो ब्राह्मणाच्छंसिनः । पञ्चमीमारभ्यैकस्तृचोऽच्छावाकस्य । तदेवं सप्तस्वृक्षु त्रयस्तृचा विभज्य आवपनीयाः । सोऽयं विराजां प्रक्षेप एकः पक्षः । वैमदीरावपेरन्निति पक्षान्तरम् । विमदाख्येन महर्षिणा दृष्टा वैमद्यः । ताश्च यजामह इन्द्रमित्याद्याः सप्तर्चः । ता अपि पूर्ववत्त्रयस्तृचाः कर्तव्याः । पञ्चमेऽहनि यच्चिद्धि सत्य सोमपा इत्याद्याः पङ्क्तिच्छन्दस्काः सप्तर्चः पूर्ववदावपनीयाः । तथा षष्ठेऽहनि परुच्छेपेन दृष्टा इन्द्राय हि द्यौरित्याद्याः सप्तर्चः पूर्ववदावपनीयाः ।

स्तोमवृद्धावतिशंसनार्थमावपनीयानि सूक्तानि दर्शयति—

अथ यान्यहानि महास्तोमानि स्युः को अद्य नर्यो देवकाम इति मैत्रावरुण आवपेत वने न वा यो न्यधायि चाकन्निति ब्राह्मणाच्छंस्या

को अद्य नर्यो देवकामः०—४–२५–१ । वने न वा यो न्यधायि चाकन्०—१०–२९–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



याह्यर्वाङुप वन्धुरेष्ठा इत्यच्छावाकः, इति ।

अथ पूर्वोक्तविराडाद्यावापकथनानन्तरम् । अन्य आवाप उच्यत इति शेषः । यान्यहानि महास्तोमानि सप्तदशैकविंशादिस्तोमेभ्योऽधिकैश्चतुर्विंशादिस्तोमैर्युक्तानि स्युस्तेष्वहःसु स्तोमसंख्यामतिक्रम्याधिकानामृचां शंसनं कर्तव्यम् । तत्र मैत्रावरुणः को अद्येति सूक्तमावपेत । ब्राह्मणाच्छंसी वने नेति सूक्तमावपेत । अच्छावाक आ याहीति सूक्तमावपेत ।

तेषां सूक्तानां प्रशंसां दर्शयति—

एतानि वा आवपनान्येतैर्वा आवपनैर्देवाः स्वर्गं लोकमजयन्नेतैर्ऋषयस्तथैवैतद्यजमाना एतैरावपनैः स्वर्गं लोकं जयन्ति ॥ १९ ॥ इति ।

को अद्येत्यादीनि सूक्तान्यावपनान्यावापयोग्यानि । एतैर्देवानां स्वर्गजयाद्यजमानानामपि तैः स्वर्गजयो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (१९) [१०६] ।

---

एवं सावत्प्रसक्तानुप्रसक्तं परिसमाप्याधुना प्रस्तुतमारभते—

सद्यो ह जातो वृषभः कनीन इति मैत्रावरुणः पुरस्तात्सूक्तानामहरहः शंसति, इति ।

पूर्वत्र कीर्णि चाहरहः शस्यानीति यदुक्तं तस्यैवैतद्व्याख्यानम् । सद्यो ह जात इत्यादिकं मैत्रावरुणः स्वकीयस्य सूक्तस्य पुरस्तात्प्रतिदिनं शंसेत् । सूक्तानामिति बहुवचनं व्यत्ययेन द्रष्टव्यम् ।

उक्तसूक्तं प्रशंसति—

तदेतत्सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं लोकमजयन्नेतेन ऋषयस्तथैवैतद्यजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति, इति ।

स्वर्ग्यं स्वर्गाय हितम् । अन्यत्पूर्ववद्व्याख्येयम् ।

---

आ याह्यर्वाङुप वन्धुरेष्ठाः०—३—४३—१ । सद्यो ह जातो वृषभः कनीनः०—३—४८—१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऋषिसंबन्धेन पुनः प्रशंसति—

तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस, इति ।

तदु तत्तु सूक्तं विश्वामित्रेण दृष्टत्वाद्वैश्वामित्रम् । विश्वस्य मित्रमिति निरुक्त्या विश्वामित्रशब्दोऽभूत् ।

वेदनं तत्पूर्वमनुष्ठानं च प्रशंसति—

विश्वं हास्मै मित्रं भवति य एवं वेद येषां चैवं विद्वानेतन्मैत्रावरुणः पुरस्तात्सूक्तानामहरहः शंसति, इति ।

वृषभः कनीन इति योऽयं वृषभशब्दस्तदन्तर्गतं वकारव्यतिरिक्तऋषभशब्दमुपजीव्य प्रशंसति—

तदृषभवत्पशुमद्भवति पशूनामवरुद्ध्यै, इति ।

तत्सूक्तमृषभशब्दोपेतम् । वृषभस्य च पशुत्वात्सूक्तं पशुमद्भवति । अतः पशूनां प्राप्त्यै संपद्यते ।

ऋक्संख्यामुपजीव्य प्रशंसति—

तत्पञ्चर्चं भवति पञ्चपदा पङ्क्तिः पङ्क्तिर्वा अन्नमन्नाद्यस्यावरुद्ध्यै, इति ।

ऋग्गतया पञ्चसंख्यया पादपञ्चकोपेतपङ्क्तिच्छन्दःस्वरूपत्वम् । अन्नं च पञ्चसंख्योपेतत्वात्पङ्क्तिरेव । भक्ष्यं पेयं खाद्यं लेह्यं निगीर्थमित्येवमन्नस्य पञ्चसंख्या । तस्मादिदमन्नप्राप्त्यै संपद्यते ।

ब्राह्मणाच्छंसिनः सूक्तं विधत्ते—

उदु ब्रह्माण्यैरत श्रवस्येति ब्राह्मणाच्छंसी ब्रह्मण्वत्समृद्धं सूक्तमहरहः शंसति, इति ।

ब्रह्माणीति ब्रह्मशब्दयोगादिदं सूक्तं ब्रह्मण्वत् । समृद्धं समृद्धिकारणम् ।

तस्य प्रशंसां दर्शयति—

तदेतत्सूक्तं स्वर्ग्यमेतेन वै सूक्तेन देवाः स्वर्गं

उदु ब्रह्माण्यैरत श्र० आश्व० ७-२४-१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लोकमजयन्नेतेन ऋषयस्तथैवैतयजमाना एतेन सूक्तेन स्वर्गं लोकं जयन्ति, इति ।

पुनरप्यृषिसंबन्धेन प्रशंसति—

तद्ध वासिष्ठमेतेन वै वसिष्ठ इन्द्रस्य प्रियं धामोपागच्छत्स परमं लोकमजयत्, इति ।

वेदनं प्रशंसति—

उपेन्द्रस्य प्रियं धाम गच्छति जयति परमं लोकं य एवं वेद, इति ।

ऋक्संख्यामुपजीव्य प्रशंसति—

तद्वै षळृचं षड्वा ऋतव ऋतूनामाप्त्यै, इति ।

तस्य सूक्तस्य स्थानं विधत्ते—

तदुपरिष्टात्संपातानां शंसत्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति, इति ।

संपातसूक्तस्योपरिष्टात्तत्सूक्तं शंसेत् । तेन शंसनेन स्वर्गं लोकमाप्त्वैव देवपातादूर्ध्वभाविनीं स्वर्गप्राप्तिं संपाद्यैवेदानीमस्मिँल्लोके यजमानाः प्रतिष्ठिता भवन्ति ।

अच्छावाकस्य सूक्तं विधत्ते—

अभितष्टेव दीधया मनीषामित्यच्छावाकोऽहरहः शंसत्यभिवत्तत्यै रूपम्, इति ।

अभितष्टेत्यादिकं सूक्तमच्छावाकः प्रतिदिनं शंसेत् । तच्चाभिवदभिशब्दोपेतम् । अभिशब्दस्य चाभितः सर्वत इत्यस्मिन्नर्थे वर्तमानत्वात्सूक्तं तत्यै संततै विच्छेदराहित्यस्वरूपं भवति ।

तस्या ऋचस्तृतीयपादमनूद्य व्याचष्टे—

अभि प्रियाणि मर्मृशत्पराणीति यान्येव पराण्यहानि तानि प्रियाणि तान्येव तदभिमर्मृशतो यन्त्यभ्यारभमाणाः परो वा अस्माल्लोकात्स्वर्गो

---

अभितष्टेव दीधया मनीषां०—३–३८–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



लोकस्तमेव तदभिवदति, इति ।

अनयर्चा विश्वामित्रः प्रजापतिं तुष्टाव । तथा सत्यस्य पादस्यायमर्थः–पराण्युत्तराणि कर्माणि प्रजापतेः प्रियाण्यभिमर्मृशत्सर्वतः पुनः पुनः स्पृशन्नहं वर्त इति । यान्येवेत्यादिकं तद्व्याख्यानम् । वर्तमानादह्नः पराण्युत्तराणि यान्येवाहानि सन्ति तानि देवस्य प्रियाण्यतस्तेन पादपाठेन तान्येवाभिमर्मृशतोऽभितः पुनः [पुनः] स्पृशन्तः । तस्यैव व्याख्यानमभ्यारभमाणा इति । तादृशा यजमाना यन्ति वर्तन्ते । किंचास्माल्लोकात्परः स्वर्गो लोकस्तमेव लोकं तत्तेन परशब्देनाभिवदति ।

चतुर्थपादमनुवदति—

कवीँरिच्छामि संदृशे सुमेधा इति, इति ।

सुमेधाः शोभनया मेधया युक्तोऽहं संदृशे सम्यग्दर्शनाय कवीन्मेधाविनिच्छामि ।

तमेतं पादं व्याचष्टे—

ये वै ते न ऋषयः पूर्वे प्रेतास्ते वै कवयस्तानेव तदभ्याति वदति, इति ।

नोऽस्माकं संबन्धिनः पूर्वे ऋषयो ये ते प्रसिद्धाः प्रेताः परलोकं गतास्त एवात्र कवयः कविशब्देन विवक्षिताः । अतस्तानेवाभिलक्ष्य तत्तेन पादेनाभिवदाति अतिशयेन ब्रूते ।

ऋषिसंबन्धेन प्रशंसति—

तदु वैश्वामित्रं विश्वस्य ह वै मित्रं विश्वामित्र आस विश्वं हास्मै मित्रं भवति य एवं वेद, इति ।

पूर्ववद्व्याख्येयम् ।

अस्पष्टदेवताकमुपजीव्य प्रशंसति—

तदनिरुक्तं प्राजापत्यं शंसत्यनिरुक्तो वै प्रजापतिः प्रजापतेराप्त्यै, इति ।

तत्सूक्तमनिरुक्तं न हि तत्र काचिद्देवता विस्पष्टं निरूप्यते । अतः प्रजापतिदेवताकं तच्छंसेत् । प्रजापतिश्च सृष्टेः पूर्वं मूर्तिराहित्यादनिरुक्तोऽतः सूक्तं प्रजापतिमाप्त्यै संपद्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सूक्तस्य प्राजापत्यत्वे सत्यैन्द्रत्वं प्रच्यवेतेत्याशङ्क्याऽऽह—

सकृदिन्द्रं निराह तेनैन्द्राद्रूपान्न प्रच्यवते, इति ।

कस्यांचिदृचि शुनं हुवेम मघवानमिन्द्रमिति सकृदिन्द्रं निर्ब्रूते । तेन कारणेनेन्द्रसंबन्धिस्वरूपादपि प्रच्युतिर्नास्ति ।

ऋक्संख्यामुपजीव्य प्रशंसति—

तद्वै दशर्चं दशाक्षरा विराळन्नं विराळन्नाद्यस्यावरुद्ध्यै, इति ।

पुनरप्यृक्संख्यामुपजीव्य प्रशंसति—

यदेव दशर्चा३मू, दश वै प्राणाः प्राणानेव तदाप्नुवन्ति प्राणानात्मन्दधते, इति ।

यदेव यस्मादेव कारणादिदं सूक्तं दशर्चम् । प्लुतिः प्राणसादृश्येनाऽऽश्चर्यार्था । पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि । इन्द्रियरूपाः प्राणा दशैव । यद्वा प्राणापानादयः पञ्च वायवो नागकूर्मादयश्च पञ्च वायव इति दश प्राणाः । अतस्तच्छंसनेन प्राणानेव प्राप्य तान्प्राणान्स्वात्मन्येव स्थापयन्ति ।

तस्य सूक्तस्य स्थानं विधत्ते—

तदुपरिष्टात्संपातानां शंसत्याप्त्वैव तत्स्वर्गं लोकं यजमाना अस्मिँल्लोके प्रतितिष्ठन्ति ॥२०॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये चतुर्थः खण्डः ॥ ४॥ (२०) [१०७] ।

---

अथ त्रीन्प्रगाथान्विधत्ते—

कस्तमिन्द्र त्वावसुं कन्नव्यो अतसीनां कद्रू न्वस्याकृतमिति कद्वन्तः प्रगाथा आरम्भणीया अहरहः शस्यन्ते, इति ।

कस्तमित्यादिरेकः प्रगाथः । कन्नव्य इति द्वितीयः । कद्विति तृतीयः । यद्यपि प्रथमे कच्छब्दो नास्ति तथाऽपि च्छत्रिन्यायेन साहचर्याद्वा सर्वे कद्वन्तः प्रगाथा ऋग्द्वयात्मकाः । ते च वैकृतारम्भहेतुत्वादारम्भणीयाः । ते च प्रतिदिनं शंसनीयाः ।

---

कस्तमिन्द्र त्वावसुं०— ७–३२–१४ । कन्नव्यो अतसीनां० — ८–३–१३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रथमं प्रगाथं [मं]शंसति—

को वै प्रजापतिः प्रजापतेराप्त्यै, इति।

प्रथमस्याऽऽदौ श्रूयमाणस्य कशब्दस्य प्रजापतिरर्थः। अतोऽयं प्रजापति-प्राप्त्यै संपद्यते।

सर्वान्प्रगाथान्प्रशंसति—

यदेव कद्वन्ता३ः। अन्नं वै कमन्नाद्यस्यावरुद्ध्यै, इति।

यदेव यस्मादेव कारणादेते प्रगाथाः कद्वन्ताः। प्लुतिः प्रशंसार्था। कच्छब्दे-कदेशरूपं यत्कं तदन्नमेव। कशब्दस्य सुखवाचित्वादन्नस्यापि सुखहेतुत्वात्। अतोऽन्नप्राप्त्यै तत्संपद्यते।

पुनरपि प्रकारान्तरेण प्रशंसति —

यद्वेव कद्वन्ता३ः। अहरहर्वा एते शान्तान्यहीन-सूक्तान्युपयुञ्जाना यन्ति तानि कद्वद्भिः प्रगाथैः शमयन्ति तान्येभ्यः शान्तानि कं भवन्ति तान्ये-नाञ्छान्तानि स्वर्गं लोकमभिवहन्ति, इति।

यद्वेव पुनरपि यस्मादेव कारणादेते प्रगाथाः कद्वन्तः शस्यन्ते। प्लुतिः पूर्ववत्। तस्मादेव कारणात्प्रतिदिनमेते यजमानाः शान्तानि सर्वोपद्रवशमका-णान्यहीनसूक्तान्युपयुञ्जाना यन्ति वर्तन्ते। कथं सूक्तानां शान्तत्वमिति उ-च्यते। तानि सूक्तानि कद्वद्भिः सुखवाचकशब्दोपेतैः प्रगाथैर्यजमानाः शमयन्ति शान्तानि कुर्वन्ति। तानि च सूक्तानि शान्तानि भूत्वैभ्यो यजमानेभ्यः कं भवन्ति सुखकारणानि भवन्ति। तानि सूक्तानि शान्तानि भूत्वैनान्यजमाना-न्स्वर्गं लोकमभिवहन्ति प्रापयन्ति।

कद्वत्प्रगाथेभ्य ऊर्ध्वमप प्राच इन्द्रेत्याद्यास्त्रिष्टुप्छन्दस्का ऋचः प्रतिपदं शंसनीयसूक्तादित्वेन विधत्ते—

त्रिष्टुभः सूक्तप्रतिपदः शंसेयुः, इति।

अत्र कंचित्पूर्वपक्षमुद्भावयति—

ता हैके पुरस्तात्प्रगाथानां शंसन्ति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri.


धाय्या इति वदन्तः, इति ।

यथा होतुर्निष्केवल्यशस्त्रे प्रगाथात्पुरस्ताद्धाय्या भवन्ति तद्वदप प्राच इत्याद्यास्त्रिष्टुभोऽपि धाय्यास्तस्मात्पूर्वोक्तानां कद्रुत्प्रगाथानां पुरस्ताच्छंसितुं योग्या इति वदन्तः केचिद्याज्ञिकास्ता ऋचस्तेषां पुरस्ताच्छंसन्ति ।

तं पूर्वपक्षं निराचष्टे—

तत्तथा न कुर्यात्, इति ।

तस्मिन्पक्षे दो(दो)षं दर्शयति—

क्षत्रं वै होता विशो होत्राशंसिनः क्षत्रायैव तद्विशं प्रत्युद्यामिनीं कुर्युः पापवस्यसम्, इति ।

निष्केवल्यस्य शंसको यो होताऽस्त्यसौ क्षत्रं वै क्षत्रियो राजैव । होतृत्वे समुत्पन्नाः क्रिया होत्रास्ताः शंसन्तीति मैत्रावरुणादयो होत्राशंसिनः । ते च विशो राष्ट्रवर्तिन्यः प्रजाः । तत्तथा सति होतृदृष्टान्तेन प्रगाथेभ्यः पूर्वं त्रिष्टुभः शंसने सति तां विशं प्रजां क्षत्रायैव राज्ञ एव प्रत्युद्यामिनीं प्रतिकूलोद्योगयुक्तां कुर्युः । तच्च पापवस्यसमतिशयेन पापरूपम् । स्वामिना राज्ञा सह मात्सर्यस्य स्वामिद्रोहरूपत्वात् ।

परपक्षं दूषयित्वा स्वपक्षं निगमयति—

त्रिष्टुभो म इमाः सूक्तप्रतिपद इत्येव विद्यात्, इति ।

इमा अप प्राच इत्याद्यास्त्रिष्टुभ ऋचो मे मम शंसितुः सूक्तप्रतिपदोऽहरहःशंसनीयसूक्तप्रारम्भरूपा इत्येव निश्चिनुयात् । न पुनः प्रगाथेभ्यः पुरस्तात्त्रिष्टुभामवस्थानं युक्तम् ।

सूक्तप्रतिपत्पक्षे गुणं दर्शयति—

तद्यथा समुद्रं प्रप्लवेरन्नेवं हैव ते प्रप्लवन्ते ये संवत्सरं वा द्वादशाहं वाऽऽसते तद्यथा सैरावतीं नावं पारकामाः समारोहेयुरेवमेवैतास्त्रिष्टुभः समारोहन्ति, इति ।

तत्तस्मिन्नभिहितेऽर्थे दृष्टान्तोऽभिधीयते । यथा लोके समुद्रं प्रप्लवेरन् । प्रप्लवः परतीरगमनम् । स्वल्पेषु नदीतडागादिषु परतीरगमनं सुशकं भवति । समुद्रस्य तु तद्दुःशकम् । तथा संवत्सरसत्रस्य द्वादशाहस्य वाऽनुष्ठातॄणां प्रप्लवः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पारगमनं समापनमत्यन्तदुःशकम्। प्रयोगस्यातिबहुलत्वात्। तत्तथा सति यथा लोके समुद्रस्य परतीरगमनकामाः पुरुषाः सैरावतीं नावं समारोहेयुः। इराऽन्नं तत्समूह ऐरं तेन सह वर्तत इति सैरं नौस्थं वस्तुजातं तादृशं सैरं यस्यां नान्यस्ति सेयं नौः सैरावती। समुद्रपारगमनस्य चिरकालसाध्यत्वात्तावतः कालस्य पर्याप्तेनान्नेन सह सर्वमपेक्षितं वस्तुजातं तस्यां नावि संपाद्य पथा-न्नाविकास्तां नावमारोहेयुः। एवमेवानुष्ठातारस्तथाविधनौसदृशा एतास्त्रिष्टुभः समारोहन्ति। सर्ववस्तुसमृद्धा नौरिवैतास्त्रिष्टुभः पारं नेतुं समर्था इत्यर्थः।

तदेव सामर्थ्यं स्पष्टी करोति—

न ह वा एतच्छन्दो गमयित्वा स्वर्गं लोकमुपावर्तते वीर्यवत्तमं हि, इति।

समुद्रं(द्रे) बाहुभ्यामुडुपेन वा(वा)ऽऽप्लवनं पारगमनक्षमं न भवति। सैरावत्या तु नावा पारमवश्यं प्राप्यते। एवमेतत्त्रिष्टुप्छन्दो यजमानान्स्वर्गं लोकं गमयित्वा नैवोपावर्तते। किंतु सर्वथा स्वर्गं गमयत्येव। यस्मादेतच्छंसनातिशयेन वीर्यवत्तमाद्युक्तं पारगमयितृत्वम्। एवंविधास्त्रिष्टुभो यदि सूक्तप्रतिपदः स्युस्त-दानीं सूक्तच्छन्दसोऽपि त्रिष्टुप्त्वात्तत्साहाय्येन वीर्यवत्तमत्वमुपपद्यते। प्रगाथानां तु त्रिष्टु[प्त्वा]भावाते(त्ते)भ्यः पुरस्ताच्छंसने वीर्यवत्तमत्वं न सिध्ये-दित्यभिप्रायः।

एताभ्यस्त्रिष्टुभ्यः पूर्वं शोंसावोमिति व्याहावमितरदृष्टान्तेन प्रसक्तं प्रतिषेधति—

ताभ्यो न व्याह्वयीत समानं हि च्छन्दोऽथो ने-द्धाय्याः करवाणीति, इति।

ताभ्यस्त्रिष्टुभ्यः पूर्वं शोंसावोमिति व्याहावं न कुर्यात्। यस्मात्सूक्तैः सहैतासां छन्दः समानं तस्मात्सूक्तान्तर्भूतानामृगन्तराणामिवैतासां व्याहावो नास्ति। यदि धाय्यादृष्टान्तेन व्याहावः क्रियेत तदानीमेता अपि धाय्याः क्रियेरन्। अहं तु तासां धाय्यात्वं नेरकरवाणि सर्वथा न करवाणीत्यभिप्रेत्य धाय्यारूपाद्भीतः सन्व्याहावं न कुर्यात्।

उक्तास्त्रिष्टुप्छन्दस्का ऋचः प्रशंसति—

यदेनाः शंसन्ति प्रगाथाभिः सूक्तप्रतिपद्भिः

---

१ ड. 'मत्र त्रिष्टु'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सूक्तानि समारोहामेति, इति ।

एता ऋचो यदा शंसन्ति तदानीं महानौस्थानीयानां त्रिष्टुप्छन्दस्कानां समारोहणमेताभिः सूक्तप्रतिपद्भिः मज्ञाताभिर्भविष्यतीति शंसितृणामभिप्रायः । यथा मौढाया नावः समारोहणं यत्र क्वापि कर्तुं न शक्यते किंतु निःश्रेण्यादिसाधनेनैव कर्तुं शक्यते तद्वदत्रापि द्रष्टव्यम् ।

पुनरपि प्रकारद्वयेन प्रशंसति—

यदेवैनाः शंसन्तीन्द्रमेवैताभिर्निह्वयन्ते यथ ऋषभं वाशितायै यद्वेवैनाः शंसन्त्यहीनस्य संतत्या अहीनमेव तत्संतन्वन्ति ॥ २१ ॥ इति ।

अप प्राच इन्द्रेति श्रुतत्वादिन्द्राह्वानं भवति । अन्यत्पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये पञ्चमः खण्डः ॥५॥ (२१) [१०८]।

———

यदुक्तं त्रिष्टुभः सूक्तप्रतिपदः शंसेयुरिति तत्रस्थास्त्रिष्टुभ उदाहृत्य प्रदर्शयति—

अप प्राच इन्द्र विश्वाँ अमित्रानिति मैत्रावरुणः पुरस्तात्सूक्तानामहरहः शंसति, इति ।

अप प्राच इत्येतामृचं मैत्रावरुणः प्रतिदिनं स्वकीयसूक्तादौ शंसेत् । हे इन्द्र विश्वानमित्रान्सर्वानपि शत्रून्प्राचः प्राङ्मुखान्कृत्वाऽपनुदस्वेति वक्ष्यमाणेनान्वयः । सोऽयं प्रथमपादस्यार्थः ।

अवशिष्टं पादत्रयं पठति—

अपापाचो अभिभूते नुदस्व । अपोदीचो अप शूराधराच उरौ यथा तव शर्मन्मदेमेति, इति ।

हेऽभिभूते शत्रूनभिभवितुं समर्थ, अपाचः शत्रून्दक्षिणा[मुखा]न्प्रत्यङ्मुखांश्च कृत्वाऽपनुदस्व । तथैवोदीच उदङ्मुखान्कृत्वाऽपनुदस्व । हे शूर, अधराचोऽधोमुखान्कृत्वाऽपनुदस्व । उरौ विस्तीर्णे तव शर्मन्, त्वत्संबन्धिनि गृहे यथा मदेम येन प्रकारेण हृष्टा भवेम तथा कुर्विति शेषः ।

---

अप प्राच इन्द्र विश्वाँ अमित्रान्०—१०-१३१-१ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ऋचस्तात्पर्यं दर्शयति—

अभयस्य रूपमभयमिव हि यन्निच्छति, इति।

एतन्मन्त्रवाक्यमभयस्य स्वरूपम्। शत्रुनिराकरणस्य स्वकीयहर्षस्य च प्रार्थ्यमानत्वात्। अभयमिव भयरहितमेव स्थानमयं मैत्रावरुणो यन्प्राप्नुवन्निच्छति प्राप्तुमपेक्षते। तस्माद्योग्येयमृक्।

ऋगन्तरं ब्राह्मणाच्छंसिनो विधत्ते—

ब्रह्मणा ते ब्रह्मयुजा युनज्मीति ब्राह्मणाच्छंस्यहरहः शंसति युनज्मीति युक्तवती युक्त इव ह्यहीनोऽहीनस्य रूपम्, इति।

अस्यामृचि युनज्मीति श्रवणादियमृग्युजिधात्वर्थवती। अहीनोऽहर्गणो युक्त इवाह्नां परस्परसंबन्धवानेव। अतो युजिधात्वर्थयुक्तमन्त्रवाक्यमहीनस्य रूपम्।

अनुकूलमृगन्तरमच्छावाकस्य विधत्ते।

उरुं नो लोकमनु नेषि विद्वानित्यच्छावाकोऽहरहः शंसत्यनु नेषीत्येतीव ह्यहीनोऽहीनस्य रूपम्, इति।

अत्र यदेतदनुनेषीति पदमस्ति तस्यार्थ एतीव ह्यहीन इत्यनेनोच्यते। अयमहर्गण एतीव प्रवर्तत एव। अनुनेष्यनुक्रमेण नय प्रवर्तयेत्येवमुच्यमानत्वात्प्रवर्तमानस्याहीनस्येदं वाक्यमनुरूपम्।

अनुनेषीति पदस्याभिप्रायमुक्त्वा तन्मध्यगतस्य नेषीत्येतस्याभिप्रायान्तरमाह—

नेषीति सत्रायणरूपम्, इति।

सत्रस्यायनमनुष्ठानं सत्रायणं नेषि नयानुष्ठापयेति तस्यार्थः। अत एतत्सत्रायणस्यानुकूलम्।

उदाहृतास्तिस्र ऋच उपसंहरति—

ता वा एता अहरहः शस्यन्ते, इति।

अथ परिधानीया ऋचः स्तोतुमुपक्रमते—

समानीभिः परिदध्युः, इति।

---

ब्रह्मणा ते ब्रह्मयुजा युनज्मि०—३–३५–४। उरुं नो लोकमनु नेषि विद्वान्०—६–४७–८।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


समानीभिरेकविधाभिर्ऋग्भिर्मैत्रावरुणादयो होत्रकाः परिदध्युः शस्त्रसमाप्तिं कुर्युः । नू ष्टुतेति मैत्रावरुणस्य परिधानीया । एवेदिन्द्रमिति ब्राह्मणाच्छंसिनः परिधानीया । नूनं सा त इत्यच्छावाकस्य परिधानीया । अनेन सूक्तसामान्यादेताः समान्य इत्युच्यन्ते ।

दृष्टान्तद्वयेन परिधानीयाः शंसति—

ओकःसारी हैषामिन्द्रो यज्ञं भवताँ३ यथ ऋषभो वाशितां यथा वा गौः प्रज्ञातं गोष्ठमेवं हैषामिन्द्रो यज्ञमेव गच्छति, इति ।

ओकःसारी ह मार्जार इवेन्द्र एषां यजमानानां यज्ञं भवति पुनः पुनः प्राप्नोति । सानुनासिका प्लुतिः पूजार्था । यथा वाशितां गर्भार्थिनीं गामृषभो गच्छति यथा वा गौः प्रज्ञातं प्रतिदिनगमनेनात्यन्तं परिज्ञातं गोष्ठं प्राप्नोत्येवमेवायमिन्द्र एषां यजमानामां यज्ञमागच्छत्येव । अतस्तदागमनार्थं समान्यः परिधानीया इत्यर्थः ।

समानीभिः परिदध्युरिति यदुक्तं तत्राभितष्टेवेत्यच्छावाकस्याहरहः शस्यं सूक्तं तस्मिन्नन्त्या शुनं हुवेमेत्येषा तया परिधानप्राप्तौ निषेधति—

न शुनंहुवीययाऽहीनस्य परिदध्यात्क्षत्रियो ह राष्ट्राच्च्यवते यो हैव परो भवति तमभिह्वयति ॥ २२ ॥ इति ।

शुनं हुवेमेति यस्यामृचि श्रूयते सा शुनंहुवीया । अहर्गणस्य शस्त्रे तया न परिदध्यात् । परिधाने हि क्षत्रियो राजा स्वकीयाद्राष्ट्राच्च्यवते । यस्तु परस्तदीयः शत्रुर्भवति तमभिलक्ष्य ह्वयत्याह्वानं करोति । हुवेमेत्यन्याह्वानस्य प्रतीयमानत्वात् । अत एव सूत्रकारो ब्राह्मणान्तरमाश्रित्य नूनं सा त इत्येतां परिधानीयामुक्तवान् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये षष्ठः खण्डः ॥६॥ (२२) [१०९] ।

---

एवं तावच्छस्त्रिणां होत्रकाणां प्रातःसवने माध्यंदिने च शस्त्राण्युक्तानि । तेषां च परिधानीयाः पूर्वमेवोभय्यः परिधानीया इत्यत्रैकाहिका अहीनाश्च विपक्षाः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथेदानीं कतमास्ता इति विविनक्ति—

अथातोऽहीनस्य युक्तिश्च विमुक्तिश्च, इति ।

अथ परिधानीयाकथनानन्तरं यतस्तद्विवेकोऽपेक्षितोऽतः कारणादहीनस्याहर्गणस्य युक्तिश्च विमुक्तिश्च विवेकार्थाविमे वक्ष्येते इति शेषः । युक्तिर्योगः स्वाधीनत्वेन क्रतोः संपादनम् । विमुक्तिर्विमोचनं स्वाधीनतया निर्बन्धपरित्यागः । तदेतदुभयं परिधानीयावशेन संपद्यते ।

तत्र ब्राह्मणाच्छंसिनः परिधानीयामुपजीव्य क्रतोर्योगविमोकौ दर्शयति—

व्यन्तरिक्षमतिरदित्यहीनं युङ्क्त एवेदिन्द्रमिति विमुञ्चति, इति ।

प्रातःसवने ब्राह्मणाच्छंसिनो व्यन्तरिक्षमिति पर्यायस्तृचः । तस्येन्द्रेण रोचना दिव इति ऋगुत्तमा तया यत्परिधानं तेनाहीनं क्रतुं युङ्क्ते स्वाधीनतया निबध्नाति । माध्यंदिने सवने त्वेवेदिन्द्रमिति परिधानीयया + न विमुञ्चति । स्वाधीनतया निगृहीतमहीनक्रतुं विस्रम्भव्यवहाराय निग्रहपरित्यागेन विमुञ्चति । स्वाधीनो हि क्रतुरवश्यं फलं दास्यतीति युक्तो बन्धविमोकः ।

अथाच्छावाकस्य परिधानीयया योगविमोकौ दर्शयति—

आऽहं सरस्वतीवतोर्नूनं सा त इत्यहीनं युङ्क्ते, इति ।

अयं योगो विमोकस्याप्युपलक्षणार्थः । आऽहमिति प्रातःसवने परिधानीया । तया क्रतोर्योगो भवति । नूनं सा त इति माध्यंदिने सवने परिधानीया । तया क्रतोर्विमोको भवति ।

अथ मैत्रावरुणस्य परिधानीयया योगविमोकौ दर्शयति—

ते स्याम देव वरुण नू ष्टुत इति विमुञ्चति, इति ।

अत्र विमोको योगस्याप्युपलक्षणार्थः । ते स्यामेति प्रातःसवने परिधानीया । तयाऽहीनस्य क्रतोर्योगः । नू ष्टुत इति माध्यंदिनसवने परिधानीया । तया क्रतोर्विमोकः । यद्यपि तृतीयसवने विवे(मो)को वक्तुं युक्तस्तथाऽप्यग्निष्टोमसंस्थेऽहनि होत्रकाणां तृतीयसवने शस्त्राभावात्सर्वेष्वहःस्वनुगत्यर्थं माध्यंदिने सवने विमोकोऽभिहितः ।

व्यन्तरिक्षमतिरत्०—८–१९–७ । एवेदिन्द्रं वृषणं०—७–२४–६ । आऽहं सरस्वतीवतोः०—८–३९–१० । ते स्याम देव वरुण०—७–६६–९ ।

+ नेति मूलविरुद्धत्वाल्लेखकप्रमादपतितम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यथोक्तयोगविमोकज्ञानं प्रशंसति—

एष ह वा अहीनं तन्तुमर्हति य एनं योक्तुं च विमोक्तुं च वेद, इति ।

यः पुमानुक्तप्रकारेणैनमहीनं प्रातःसवनपरिधानीयया योक्तुं माध्यंदिनपरिधानीयया विमोक्तुं च जानात्येष एव पुमानहर्गणं तन्तुं विस्तारयितुमर्हति । यथोक्तपरिधानीयानभिज्ञस्य नास्ति तत्राधिकार इत्यर्थः । एवमेकैकमहरपेक्ष्य योगविमोकावुक्तौ ।

अथाहःसमूहमपेक्ष्य योगविमोकौ दर्शयति—

तद्यच्चतुर्विंशेऽहन्युज्यन्ते सा युक्तिरथ यत्पुरस्तादुदयनीयस्यातिरात्रस्य विमुच्यन्ते सा विमुक्तिः, इति ।

गवामयनस्य संवत्सरसत्रस्याऽऽद्यन्ते अहनी अतिरात्रसंस्थे । तत्रोपक्रमगतस्य प्रायणीयातिरात्रस्यानन्तरभाविनि चतुर्विंशाख्यमा(आ)रम्भणीयेऽहनि परिधानीयाभिः सर्वेऽहर्विशेषा युज्यन्ते । सोऽयं गवामयनस्य योगः । अथोदयनीयस्यातिरात्रस्य पुरस्ताद्वर्तमाने महाव्रतीयेऽहनि परिधानीयाभिः सर्वेऽप्यहर्विशेषा विमुच्यन्त इति यदस्ति सेयं गवामयनस्य विमुक्तिः ।

तत्र योगविमोकहेतूनां परिधानीयानामेकैकविधत्वं निन्दित्वोभयविषयत्वं दर्शयति—

तद्यच्चतुर्विंशेऽहन्नैकाहिकाभिः परिदध्युरत्राहैव यज्ञं संस्थापयेयुर्नाहीनकर्म कुर्युरथ यदहीनपरिधानीयाभिः परिदध्युर्यथा श्रान्तोऽविमुच्यमान उत्कृत्यैतैवं यजमाना उत्कृत्येरन्नुभयीभिः परिदध्युः, इति ।

अहन्यहनि चतुर्विंशाख्ये यद्यैकाहिकाभिः प्रकृतिभूत एकाहे ज्योतिष्टोमे विद्यमानाभिः परिधानीयाभिः परिदध्युस्तदानीमत्रैव चतुर्विंशाख्ये द्वितीयस्मिन्नहन्येव यज्ञं गवामयनं संस्थापयेयुः समाप्तिं कुर्युः । अत्राहेत्यहशब्दः खेदे कष्टमेतत् । अत्रैव समाप्तावहीनकर्म कृत्स्नाहर्गणकर्तव्यं न कुर्युः । एतदेव कष्टम् । अथ पूर्वोक्तवैपरीत्येनैकाहिकाः परिधानीयाः परित्यज्य यद्यहीनपरिधानीयाभिरेव सर्वे होत्रकाः परिदध्युः । इदानीं यथा लोके रथशकटादौ

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


युक्तोऽश्वबलीवर्दादिः कियद्दूरं गत्वा श्रान्तः सन्यदि न विमुच्येत तदानीमुत्कृत्येतोच्छिद्येत तथैव यजमाना उत्कृत्येरन्विनश्येयुः । सर्वेषां होत्रकाणामैकाहिकस्वीकारे समाप्त्यभावोऽहीनगतस्वीकारे यजमानोच्छेद इति दोषद्वयपरिहारार्थमुभयीभिरैकाहिकाभिरहीनगताभिश्च परिधानीयाभिः परिदध्युः । तत्र प्रकारविशेषः पूर्वमेवोक्तः । मैत्रावरुण ऐकाहिकाभिरेव सवनद्वये परिदध्यात् । अच्छावाकोऽहीनगताभिरेव सवनद्वये परिदध्यात् । ब्राह्मणाच्छंसी तु प्रातःसवनाहीनगताभिः परिदध्यात् । माध्यंदिनसवने चैकाहिकाभिरिति निर्णयः । अस्य निर्णयस्य पूर्वमेव सिद्धत्वेऽपि प्रकारान्तरेण प्रशंसार्थमत्र पुनरभिधानम् ।

तदेतदुभयीभिः परिधानं दृष्टान्तेन प्रशंसति—

तद्यथा दीर्घाध्व उपविमोकं यायात्तादृक्तत्, इति ।

लोके यथा वा दीर्घाध्वे दूरमार्गे गच्छन्पुरुष उपविमोकं रथशकटादौ योजितमश्वबलीवर्दादिकं तत्र तत्रोपविमुच्योपविच्य यायाच्छ्रान्तिपरिहारेण शनैर्गच्छेत्तादृगेव तदुभयविधपरिधानम् । यथा मार्गे वहनश्रमो विमोकेन निवर्तत एवमहीनगताभिरापादितश्रम ऐकाहिकाभिर्निवर्तते ।

उभयविधपरिधाने दोषं परिहृत्य गुणं दर्शयति—

संततो हैषां यज्ञो भवतीँ३ व्यू मुञ्चन्ते, इति ।

एषामुभयविधपरिधानयुक्तानां पुरुषाणां यज्ञः संततो विच्छेदरहितो भवति । सानुनासिका प्लुतिः प्रशंसार्था । विशब्द उपरितन उकार एवकारार्थः । तस्य दीर्घश्छान्दसः । यजमानश्रमं विमुञ्चत(न्त) एव ।

अथ स्तोमातिशंसने कंचिद्विशेषं दर्शयति—

एकां द्वे न द्वयोः सवनयोः स्तोममतिशंसेत् , इति ।

यदा सामगैर्विवृद्धः स्तोमः क्रियते तदानीं होत्रका:(कैः) स्तोमसंख्यामतिलङ्घ्य शंसनीयम् । तत्र द्वयोः प्रातर्मध्यंदिनयोः सवनयोरेकामृचं वा द्वे ऋचौ वाऽतिक्रम्य न शंसेत् । किंत्वेकया द्वाभ्यां वाऽतिशंसेत् । पूर्वत्रायं नियमः प्रातःसवन एवोक्तः । उत्तरयोस्तु सवनयोरपरिमिताभिरतिशंसनमुक्तम् । तथा सति माध्यंदिने सवने पूर्वोत्तरविरोधः प्रसज्येतेति चेत् । तर्हि तत्रैकया द्वाभ्यामपरिमिताभिर्विकल्पोऽस्तु ।

बह्वीभिरतिशंसने बाधमाह—

दीर्घारण्यानि ह वै भवन्ति यत्र बह्वीभिः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्तोमोऽतिशस्यते, इति ।

यथा दीर्घेष्वरण्येषु गच्छतः पुरुषस्य विश्रामस्थानाभावान्महाप्रयासस्तथा बह्वीभिरतिशंसनं दुःखहेतुरित्यर्थः ।

माध्यंदिनसवन इव तृतीयसवने पक्षान्तरमस्तीति शङ्कां वारयितुं पूर्वोक्तमेवापरिमितत्वं पुनरप्यभिधत्ते —

अपरिमिताभिस्तृतीयसवनेऽपरिमितो वै स्वर्गो लोकः स्वर्गस्य लोकस्याऽऽप्त्यै, इति ।

अपरिमिताभिर्नियतपरिमाणरहिताभिः । स्वर्गस्य भोगबाहुल्यादपरिमितत्वम् ।

वेदनपूर्वमनुष्ठानं प्रशंसति —

संततो हास्याभ्यारब्धोऽविस्रस्तोऽहीनो भवति य एवं विद्वानहीनं तनुते ॥ २३ ॥, इति ।

यः पुमानुक्तप्रकारेणातिशंसनं जानन्नहीनमनुतिष्ठत्यस्य पुरुषस्यान्वारब्ध आभिमुख्येनोपक्रान्तोऽहर्गणः संततो नैरन्तर्येण वर्तमानः कदाचिदप्यविस्रस्तो विनाशरहितो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (२३) [ ११० ] ।

---

अथ पृष्ठ्यस्य षडहस्य षष्ठेऽहनि धिष्ण्याख्यशस्त्रक्लृप्तिं(प्तिं) सूक्तं विधातुमाख्यायिकामाह —

देवा वै वले गाः पर्यपश्यंस्ता यज्ञेनैवेप्संस्ताः षष्ठेनाह्नाऽऽप्नुवंस्ते प्रातःसवने नभाकेन वलमनभयंस्तं यदनभया३न्, अश्नथयन्नेवैनं तत्त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचःकूटेनैकपदया वलं विरुज्य गा उदाजन् , इति ।

वलो नाम कश्चिदसुरप्रभुः । तदीयभृत्या बृहस्पतिप्रमुखानां(णां) देवानां गा अपहृत्य वलस्य गृहे स्थापितवन्तः । देवाश्च केनचिद्दूतमुखेन वले वलस्य गृहेऽवस्थापिता गाः पर्यपश्यञ्ज्ञातवन्तः । ज्ञात्वा च सामभेदादीँल्लौकिकोपायान्परित्यज्य यज्ञेनैवोपायेनैप्संन्नाप्तुमिच्छां कृतवन्तः । कृत्वा च पृष्ठ्यस्य षडहस्य

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यत्षष्ठमहस्तदहरनुष्ठाय तत्सामर्थ्येन ता गाः प्राप्नुवन् । ते देवाः प्रातःसवने नभाकनाम्ना महर्षिणा तद्दृष्टेन मन्त्रेण वा वलनामकमसुरमनभयन् । नभतिर्धातुर्हिंसार्थः । ताडितवन्त इत्यर्थः । तं प्रतिबन्धकारणं वलनामानमसुरं यदनभंयस्ताडितवन्तः । प्लुतिस्ताडनप्रशंसार्था । तदानीमेव गोग्रहणमश्रथयन् । रक्षणार्थमाकारद्वारोद्घाटनेन निरोधं शिथिलीकृतवन्तः । यद्वा वलनामानमसुरमेव बलक्षयमापाद्य शिथिलीकृतवन्तः । त उ पुनरपि ते देवास्तृतीयसवने वज्ररूपेणावस्थिताभिर्वालखिल्याख्याभिर्ऋग्भिर्वाचःकूटेनैकपदया वलं विरुज्य विशेषेण भग्नं कृत्वा स्वकीया गा उदाजंस्तदीयाद्दुर्गादुद्गमितवन्तः । वाचः कूटशब्देन विहृतो मन्त्रविशेष उच्यत इत्युपरिष्टाद्दर्शयिष्यति । स एव वाचः कूट एकपदा भवति ।

अथ नभाकेन दृष्टांस्तृचान्विधत्ते—

तथैवैतद्यजमानाः प्रातःसवने नभाकेन वलं नभयन्ति तं यन्नभयन्ती३ श्रथयन्त्येवैनं तत्तस्माद्धोत्रकाः प्रातःसवने नाभाकांस्तृचाञ्छंसन्ति, इति ।

यथा देवा नभाकेन वलं हिंसितवन्तस्तथैवैतस्मिन्षष्ठेऽहनि यजमानाः प्रातःसवने नभाकनाम्ना महर्षिणा दृष्टेन मन्त्रेण वलं वलनामकासुरवत्प्रतिबन्धकं पाप्मानं नभयन्ति हिंसन्ति । तं वलं यद्यदा नभयन्ति । प्लुतिः पूर्ववत् । तदैनं श्रथयन्ति शिथिलं कुर्वन्ति । तस्मात्कारणान्मैत्रावरुणादयो होत्रकाः प्रातःसवने नाभाकान्नभाकेन दृष्टांस्तृचाञ्शंसेयुः ।

तांस्तृचानुदाहरति—

यः ककुभो निधारय इति मैत्रावरुणः पूर्वीष्ट इन्द्रोपमातय इति ब्राह्मणाच्छंसी ता हि मध्यं भराणामित्यच्छावाकः, इति ।

यः ककुभ इत्येकस्तृचः । पूर्वीष्ट इति द्वितीयः । ता हीति तृतीयः । मैत्रावरुणादयः क्रमेण शंसेयुः ।

---

यः ककुभो निधारयः—८-४१-४ । पूर्वीष्ट इन्द्रोपमातयः—८-४०-९ । ता हि मध्यं भराणाम्०—८-४०-३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तांस्तृचान्विधाय शिल्पस्वरूपं विधत्ते—

त उ तृतीयसवने वज्रेण वालखिल्याभिर्वाचःकूटे-नैकपदया वलं विरुज्य गा आप्नुवन्ति, इति ।

त उ ते तु मैत्रावरुणादयो वलप्रतिबन्धकं पाप्मानं वैरिणं वज्ररूपेण वाल-खिल्येन विनाश्य गोप्राप्तौ विघ्नरहिताः सन्तो गाः प्राप्नुवन्ति । वालखिल्या-भिर्वाचःकूटेनैकपदयेति । एतावता शिल्पस्वरूपमभिहितम् ।

तदेतद्विशदयति—

पच्छः प्रथमं षड् वालखिल्यानां सूक्तानि विहरत्य-र्धर्चशो द्वितीयमृक्शस्तृतीयं स पच्छो विहरन्प्र-गाथे प्रगाथ एवैकपदां दध्यात्स वाचःकूटः, इति ।

वालखिल्यनामकाः केचन महर्षयस्तेषां संबन्धीन्यष्ट सूक्तानि विद्यन्ते । तानि वालखिल्यनामके ग्रन्थे समाम्नायन्ते । तेष्वादौ यानि षट् सूक्तानि तानि प्रथमं पच्छः पादशो विहरेत् । ततो द्वितीयस्यामावृत्तावर्धर्चशो विह-रेत् । तृतीयस्यामावृत्तावृक्शो विहरेत् । यदा पच्छो विहरति तदानीमेकैक-स्मिन्प्रगाथ एकैकामेकपदां दध्यात् । स प्रगाथैकपदयोः समूहो वाचःकूट इत्यनेन शब्देनाभिधीयते । तमिमं विहारप्रकारमाश्वलायन आह—षट् सू-क्तानि व्यतिमर्शं पच्छो विहरेत् । व्यतिमर्शमर्धर्चशो व्यतिमर्शमृक्शः प्रगा-थान्तेषु चानुपसंतानमृगावानमेकपदाः शंसेदिति । तेषु षट्सूक्तेषु प्रथमसूक्ता-दावृग्द्वयमेवमाम्नातम् । अभि प्र वः सुराधसम्० सहस्रेणेव शिक्षतो३म् । शतानीकेव प्र जिगाति० दत्राणि पुरुभोजसो३मिति । द्वितीयसूक्तेऽपि ऋग्द्व-यमेवमाम्नातम्—प्र सु श्रुतं सुराधसम्० सहस्रेणेव मंहतो३म् । शतानीका हेतयो अस्य० यदीं सुता अमन्दिषो३मिति । तत्र प्रथमसूक्तगतमेकं(?) पादं च संयोजयेत् । सोऽयं विहारः । अस्मिन्विहारे व्यतिमर्शो नाम कश्चिद्विशेषः । स च यथाक्रमं परित्यज्य प्रकारान्तरेण योजने सति संपद्यते । प्रथमसूक्तस्य प्रथमायामृचि प्रथमपादमुक्त्वा द्वितीयसूक्तस्य द्वितीयायामृचि द्वितीयपादं तेन संयोजयेत् । तद्यथा—अभि प्र वः सुराधसमिन्द्रस्य समिषो महीरिति । द्वितीयसूक्तस्य द्वितीयस्यामृचि प्रथमपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि द्वितीयपादं तेन संयोजयेत् । तद्यथा—शतानीका हेतयो अस्य दुष्टरा इन्द्रमर्च यथाविदो३मिति । अथ प्रथमसूक्तस्य प्रथमायामृचि तृतीयपादमुक्त्वा द्विती-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यसूक्तस्य द्वितीयस्यामृचि चतुर्थपादं तेन संयोजयेत्। तद्यथा—यो जरितृभ्यो मघवा पुरूवसुर्येद्रीं सुता अमन्दिषुरिति। द्वितीयसूक्तस्य द्वितीयस्यामृचि तृतीयपादमुक्त्वा प्रथमसूक्तस्य प्रथमायामृचि चतुर्थपादं तेन संयोजयेत्। तद्यथा—गिरिर्न भुज्मा मघवत्सु पिन्वते सहस्रेणेव शिक्षतो३मिति। तदिदं पादयोर्विहृतमृग्द्वयमेकः प्रगाथः संपद्यते। तस्य प्रगाथस्यान्त इन्द्रो विश्वस्य गोपतिरित्येतामेकपदां संदध्यात्। सोऽयं समूहो वाचःकूटसंज्ञकः। अनेनैव न्यायेन सर्वेषु सूक्तेषु सर्वास्वृक्षु बुद्धिमता पादशो व्यतिमर्शविहरणमुन्नेयम्। अथार्धर्चशो विहार उच्यते। प्रथमसूक्तस्य प्रथमायामृचि प्रथमार्धर्चमुक्त्वा द्वितीयसूक्तस्य द्वितीयस्यामृच्युत्तरार्धं तेन संयोजयेत्। तद्यथा—अभि प्र वः सुराधस० दे। गिरिर्न भुज्मा मघवत्सु० अमन्दिषो३मिति। एवं सर्वमुन्नेयम्। ऋक्शो विहरेत्। तत्र प्रथमसूक्तस्य प्रथमामृचमुक्त्वा तया सह द्वितीयसूक्तस्य द्वितीयामृचं * सह योजयेत्। एवं सर्वत्रोहनीयम्।

अथ प्रगाथान्तेषु प्रक्षेपणीया एकपदा दर्शयति—

ता एताः पञ्चैकपदाश्चतस्रो दशमादह्न एका महाव्रतात्, इति।

या एकपदा ऋचः प्रक्षेप्तव्यास्ता एता एकपदाः पञ्चसंख्याकाः। तासु चतस्र एकपदाः श्रुत्यन्तरेषु दशमेऽहनि पठिताः। तस्माद्दशमादह्नस्ताश्चतस्र आनेतव्याः। तास्विन्द्रो विश्वस्य गोपतिरित्येषा प्रथमा। इन्द्रो विश्वस्य भूपतिरित्येषा द्वितीया। इन्द्रो विश्वस्य चेततीत्येषा तृतीया। इन्द्रो विश्वस्य राजतीत्येषा चतुर्थी। अथावशिष्टा श्रुत्यन्तरेषु महाव्रते श्रुता। सा चेन्द्रो विश्वं विराजतीत्येतादृशी तस्मान्महाव्रतादानेतव्या। ता एताः पञ्चैकपदाः पञ्चसु प्रगाथेषु प्रक्षिपेत्।

अवशिष्टेषु प्रगाथेषु प्रक्षेपणीयान्पादान्दर्शयति—

अथाष्टाक्षराणि माहानामनानि पदानि तेषां यावद्भिः संपद्येत तावन्ति शंसेन्नेतराण्याद्रियेत, इति।

अथ पञ्चसु प्रगाथेषु पञ्चानामेकपदानां प्रक्षेपादनन्तरं माहानामनानि। महानामशब्देन विदा मघवन्नित्यादयो महानाम्नीसंज्ञका विधीयन्ते। तेषां(तासां) महानाम्नामृचां संबन्धीन्यष्टाक्षराणि पदानि प्रचेतन प्रचेतयेत्येवमादीनि यानि

* सहेत्यधिकम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सन्ति तेषां मध्ये यावद्भिरष्टाक्षरैः पादैरवशिष्टेषु प्रगाथेषु प्रक्षेपः संपद्येत ताव-न्त्यष्टाक्षराणि पदानि शंसेत् । इतराण्यष्टाक्षराणि पदानि महानामसंबन्धीनि नाऽऽद्रियेत न प्रक्षिपेत् ।

एवं पच्छः शंसने प्रक्षेपणीयमभिधायार्धर्चशो विहरणे प्रक्षेपणीयं दर्शयति—

अथार्धर्चशो विहरंस्ताश्चैवैकपदाः शंसेत्तानि चैवा-ष्टाक्षराणि माहानामनानि पदानि, इति ।

यथा पच्छो विहरणे प्रगाथान्ते प्रक्षेप एवमर्धर्चशो विहरणेऽपि योजनीयम् [ यः ] ।

तद्वदृक्शो विहरणेऽपि प्रक्षेपं विधत्ते—

अथ ऋक्शो विहरंस्ताश्चैवैकपदाः शंसेत्तानि चैवा-ष्टाक्षराणि माहानामनानि पदानि, इति ।

पूर्ववत्प्रगाथान्ते प्रक्षेपः । यदुक्तं पच्छोऽर्धर्चश ऋक्श इति पर्यायत्रयेण त्रिविधं विहरणं तदेतत्प्रशंसति—

स यत्प्रथमं षड्वालखिल्यानां सूक्तानि विह-रति प्राणं च तद्वाचं च विहरति यद्द्वितीयं चक्षुश्च तन्मनश्च विहरति यत्तृतीयं श्रोत्रं च तदात्मानं च विहरति तदुपाप्तो विहारे काम उपाप्तो वज्रे वालखिल्यासूपाप्तो वाचःकूट एकपदाया-मुपाप्तः प्राणक्लृप्त्याम्, इति ।

सोऽनुष्ठाता प्रथमं प्रथमे पर्याये वालखिल्यानां षट् सूक्तानि विहरतीति यदस्ति तेन प्रथमेन पच्छो विहरणेन प्राणं वाचं विहरति मिश्री करोति । द्वितीयपर्यायेऽर्धर्चशो विहरणेन चक्षुर्मनसोर्मिश्रीकरणम् । तृतीयपर्याय ऋक्शो विहरणेन श्रोत्रेन्द्रियजीवात्मनोर्मिश्रीकरणम् । तद्यथा सति विहरणेन यः कामः फलविशेषः स उपाप्तः प्राप्तो भवति । तथा वज्ररूपासु वालखिल्यासु यः कामः सोऽपि प्राप्तः । तथा वाचःकूटरूपायामेकपदायां यः कामः सोऽपि प्राप्तः । तथा प्राणानां वागादीनां क्लृप्त्यां विहरणे यः कामः सोऽपि प्राप्तो भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


चतुर्थपर्याये विहारमन्तरेण यथापाठं शंसनं विधत्ते—

अविहृतानेव चतुर्थं प्रगाथाञ्छंसति पशवो वै प्रगाथाः पशूनामवरुद्ध्यै, इति।

प्रगाथानां पशुप्राप्तिहेतुत्वात्पशुत्वम्।

विहरणशंसनवदत्राप्येकपदाप्रक्षेपप्रसक्तौ निषेधति—

नात्रैकपदां व्यवदध्यात्, इति।

एकपदायाः प्रक्षेपे प्रगाथद्वयस्य मध्ये व्यवधानं स्यात्। तन्न कुर्यात्। तत्करणे बाधं दर्शयति—

यदत्रैकपदां व्यवदध्याद्वाचःकूटेन यजमानात्पशून्निर्हण्याद्य एनं तत्र ब्रूयाद्वाचःकूटेन यजमानात्पशून्निरवधीरपशुमेनमकरिति शश्वत्तथा स्यात्, इति।

यद्यत्र चतुर्थपर्याय एकपदाव्यवधानं कुर्यात्तदानीं वाचःकूटरूपेणैकपदासहितप्रगाथेन वज्रेण पूर्वं विद्यमानान्पशून्यजमानादस्मान्निर्हण्यान्निःशेषं विनाशयेत्। एवं सति यः कोऽपि विरोधी समागत्यैनं शंसितारं तत्र शंसनकाले ब्रूयाच्छपेत्। कीदृशः शाप इति सोऽभिधीयते—हे शंसितस्त्वं वाचःकूटेन वज्रेण यजमानात्पशून्निरवधीर्निःसार्य हृतवानसि। एनं यजमानमपशुं पशुरहितमकः कृतवानसीति। तदानीं शश्वदवश्यं तथा स्यात्पशुरहित एव स्यात्।

विपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—

तस्मात्तत्रैकपदां न व्यवदध्यात्, इति।

वालखिल्यानां षट्सूक्तेषु विहारमुक्त्वाऽवशिष्टयोः सप्तमाष्टमयोः सूक्तयोर्विपर्यासेन शंसनं विधत्ते—

द्वये(द्वे ए)वोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारः, इति।

ये द्वे उत्तमे सूक्ते ते विपर्यस्येदेव न तु विहरेत्। अष्टमं सूक्तमादौ पठित्वा पश्चात्सप्तमस्य पाठो विपर्यासः। तयोर्द्वयोः सूक्तयोः स एष विपर्यस्तपाठ एव विहारस्थानीयः।

शिल्पनामकं शस्त्रं निरूप्य प्रशंसति—

तदेतत्सौवलाय सर्पिर्वात्सिः शशंस स होवाच

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



भूयिष्ठानहं यजमाने पशून्पर्यग्रहैषमकनिष्ठा उ मामागमिष्यन्तीति तस्मै ह यथा महद्भ्य ऋत्विग्भ्य एवं निनाय तदेतत्पशव्यं च स्वर्ग्यं च शस्त्रं तस्मादेतच्छंसति ॥ २४ ॥ इति ।

सौवलनामकः कश्चिद्यजमानस्तस्मै वत्सस्य पुत्रः सर्पिरित्येतन्नामक ऋत्विक्देतच्छिल्पशस्त्रं शशंस । [ स ] च शंसनादूर्ध्वमेवमुवाच । अहमस्मिन्सौवलनामके यजमाने भूयिष्ठानतिशयेन प्रभूतान्पशून्पर्यग्रहैषं परितः संपादितवानस्मि । तस्मादकनिष्ठा उ श्रेष्ठा एव पशवो मामागमिष्यन्ति । ततः सौवलो यजमानो यथा महद्भ्य ऋत्विग्भ्यो होत्रध्वर्यूद्गातृब्रह्मभ्यो दक्षिणां दत्तवान् । अथापि शिल्पशंसिने होत्रकायापि वह्वीरुत्तमा गा दक्षिणात्वेन निनाय । तस्मादेतच्छिल्पशस्त्रमिह लोके पशुसाधनं परलोके स्वर्गसाधनं च । तस्मादेतच्छिल्पं शंसेत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्यायेऽष्टमः खण्डः ॥८॥ (२४) [१११] ।

---

शिल्पशंसनमभिधाय शंसनान्तरमभिधत्ते—

दूरोहणं रोहति तस्योक्तं ब्राह्मणम्, इति ।

दुःशकं रोहणमुच्चारणं यस्य शंसनस्य तद्दूरोहणम् । तद्रोहति शंसेदित्यर्थः । तस्य दूरोहणस्य विधायकं ब्राह्मणं पूर्वमेव विषुवदहःप्रसङ्ग आहूय दूरोहणमित्यत्राभिहितम् । अत एव पूर्वाचार्या आहुः—

स्वर्गो वै लोक इत्यादि पूर्वं विषुवति क्रतौ ।
दूरोहणब्राह्मणं तु प्रागवोचाम वै स्फुटम् ॥
सप्तरूपा हंसवती दूरोहणमितीरितम्, ॥ इति ।

हंसवती (त्याः) पच्छोऽर्धर्चशस्त्रिपद्यक्शोऽनवानं पुनरपि त्रिपद्या ऋक्शोऽर्ध- (शोऽर्ध )र्चशः पच्छ इति सप्तभिः प्रकारैः पठनमिति दूरोहणम् । तदेतत्पूर्वं तार्क्ष्यसूक्तेऽभिहितम् ।

इदानीं फलविशेषायैन्द्रे सूक्ते तद्विधत्ते—

ऐन्द्रे पशुकामस्य रोहेदैन्द्रा वै पशवः, इति ।

इन्द्रदेवताके कस्मिंश्चित्सूक्ते पशुप्राप्त्यर्थं दूरोहणं रोहेच्छंसेत् । इन्द्रस्य वृष्टिद्वारा पशुपोषकत्वात्पशव ऐन्द्राः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्मिन्सूक्ते छन्दोविशेषं विधत्ते—

तज्जागतं स्याज्जागता वै पशवः, इति ।

सोमाहरणप्रसङ्गे जगत्या पशूनामानीतत्वाज्जागतम् ।

तस्य सूक्तस्य कंचिद्विशेषं विधत्ते—

तन्महासूक्तं स्याद्भूयिष्ठेष्वेव तत्पशुषु यजमानं प्रतिष्ठापयति, इति ।

द्विविधं सूक्तं क्षुद्रं महच्च । अत एवाऽऽरण्यकाण्डे वक्ष्यति—ते क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्चेति । महासूक्तलक्षणं पूर्वाचार्यैरुक्तम्—

'दशर्चताया अधिकं महासूक्तं विदुर्बुधाः' इति ।

तेन महासूक्तेन भूयिष्ठेष्वत्यन्तं प्रभूतेष्वेव पशुषु यजमानं प्रतिष्ठापयति । विवक्षितं सूक्तविशेषं दर्शयति—

बरौ रोहेत्तन्महासूक्तं च जागतं च, इति ।

बरुर्नाम कश्चिन्महर्षिस्तेन दृष्टं सूक्तमपि बरुशब्देनोच्यते । तस्मिन्सूक्ते रोहेद्दूरोहणं शंसेत् । प्र ते महे इत्यादिकं बरुनामकं सूक्तम् । तच्च त्रयोदशर्चत्वान्महासूक्तं जगतीछन्दस्कं च ।

फलान्तराय सूक्तान्तरं विधत्ते—

ऐन्द्रावरुणे प्रतिष्ठाकामस्य रोहेदेतद्देवता वा एषा होत्रैतत्प्रतिष्ठा यदैन्द्रावरुणा तदेनत्स्वायामेव प्रतिष्ठायामन्ततः प्रतिष्ठापयति, इति ।

यथा पशुकामस्य सप्तरूपहंसवत्यात्मकं दूरोहणमैन्द्रे सूक्ते रोहेत्तथैव प्रतिष्ठाकामस्यैन्द्रावरुणके सूक्ते शंसेत् । शंसितुर्मैत्रावरुणस्य होत्रकस्य क्रिया होत्रा । एषा चैतद्देवताका । एतत्प्रतिष्ठा । इन्द्रावरुणदेवताकसमाप्तियुक्ता । यस्मादैन्द्रावरुणा याज्येति शेषः । इन्द्रावरुणा मधुमत्तमस्येति याज्याया इन्द्रावरुणदेवताकत्वात्समाप्तेरिन्द्रावरुणसंबन्धः । तथा सत्येतद्दूरोहणं स्वायामेव प्रतिष्ठायां स्वस्योचिता[या]मेव समाप्तावन्ततः शस्त्रान्ते प्रतिष्ठापयति ।

पुनरपि सूक्तं प्रशंसति—

यदेवैन्द्रावरुणा३इ, एषा ह वा अत्र निविन्निविदा वै कामा आप्यन्ते स यथैन्द्राव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुणे रोहेत्सौपर्णे रोहेत्तदुपाप्त ऐन्द्रावरुणे काम उपाप्तः सौपर्णे ॥ २५ ॥ इति ।

यत्रस्मात्कारणादैन्द्रावरुणे सूक्ते दूरोहणं रोहति तस्मात्स्वायामेव प्रतिष्ठायामिति पूर्वत्रान्वयः । यद्वा । ऐन्द्रावरुणे सूक्ते दूरोहणमिति यदस्त्येषैव दूरोहणक्रियाऽत्र निवित् । इवशब्दोऽत्र लुप्तो द्रष्टव्यः । निवित्सदृशीत्यर्थः । तथा च दूरोहणरूपया निविदा सर्वे कामाः प्राप्यन्ते । सौपर्णे सूक्ते दूरोहणं रोहेदिति पक्षान्तरं खिलेषु समाम्नातम् । इमानि वां भागधेयानीति सूक्तं सौपर्णम् ।

इमानि वेति सप्तर्चं सौपर्णं खैलिकं विदुः ॥ इति ।

यद्वा प्रधारा यन्त्विति गृह्योक्तसूक्तं सौपर्णम् । ऐन्द्रावरुणे सौपर्णे वा दूरोहणशंसनेन तत्रोभयत्र यः कामः संभावितः स उपप्राप्तो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाऽध्याये नवमः खण्डः ॥९॥ (२५) [११२]।

———

अत्र कंचिद्विचारमुद्भावयति—

तदाहुः संशंसे३त्षष्ठेऽहा३न्, न संशंसे३त्, इति ।

तत्तत्र सौपर्णे दूरोहणे शस्ते सति पश्चाद्ब्रह्मवादिनो विचारमाहुः । यान्यैकाहिकानि तदूर्ध्वं शंसनीयानि सन्ति तान्यत्र षष्ठेऽहन्यत्रत्यैः संभूय किं शंसेत्किंवा संभूय न शंसेदिति विचारः । प्लुतिर्विचारार्था ।

तत्र प्रथमं पक्षं दर्शयति

संशंसेदित्याहुः, इति ।

संभूय शंसेदित्येवं केचिद्याज्ञिका इरया( आ )हुः ।

तत्रोपपत्तिं पृच्छति—

कथम्, इति ।

उत्तरमाह—

अन्येष्वहःसु संशंसति कथमत्र न संशंसेदिति, इति ।

इतरेषु पञ्चस्वहःसु मैत्रावरुणः संभूय शंसति । तथा सत्यहःसामान्यादत्रापि कथं न संशंसेत्, तत्परित्यागो न युक्तः किंतु तदनुष्ठानमेव युक्तमित्येकः पक्षः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पक्षान्तरं दर्शयति—

अथो खल्वाहुर्नैव संशंसेत्, इति ।

अहरन्तरवत्संभूय शंसनं न कर्तव्यमित्यपरे कथयन्ति ।

तत्रोपपत्तिमाह—

स्वर्गो वै लोकः षष्ठमहरसमाथी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसती३ँ तत्स्वर्गस्य लोकस्य रूपं तस्मान्न संशंसेयदेव न संशंसती३ँ, इति ।

यदिदं षष्ठमहस्तदेतत्स्वर्गलोक एव । प्रयोगबाहुल्येन दुःखसाधनत्वात् । तदेवासमाथीत्यादिना स्पष्टी क्रियते । बहुभिः संभूतैरेतुं गन्तुं योग्यः समाथी । इण्गतावित्यस्माद्धातोरयं शब्दो निष्पन्नः । उक्तविपरीतो बहुभिर्गन्तुमशक्योऽसमाथी । तादृशो हि स्वर्गो लोकः । कश्चिदेव पुण्यकृत्स्वर्गे लोके समेति सधीचीनं भोगं प्राप्नोति न तु सर्वः । स्वर्गहेतोः पुण्यस्य दुर्लभत्वात् । एवं सति मैत्रावरुणो यदि षष्ठेऽहनि शिल्पेनान्यानि सूक्तानि संभूय शंसेत्तदानीमिदं स्वर्गरूपमुत्तमं षष्ठमहरितरैरहोभिः समानं कुर्यात् । तेषु शंसनीयानामस्मिन्नपि शंसनात् । अथ तद्वैपरीत्येन यदि षष्ठेऽहनि न संशंसति । पूजार्था प्लुतिः । तदेतदसंशंसनं स्वर्गलोकरूपत्वात्पूज्यम् । तस्मात्संभूय न शंसेत् । न संशंसतीति यदेवास्ति तदेवातिपूज्यम् । पूजार्थेयं प्लुतिः ।

इत्थं द्वितीयपक्षमुपपाद्य पुनरपि प्रथमपक्षे दोषान्तरमाह—

आत्मा वै स्तोत्रियः प्राणा वालखिल्याः स यत्संशंसेदेताभ्यां देवताभ्यां यजमानस्य प्राणान्वीयाय एनं तत्र ब्रूयादेताभ्यां देवताभ्यां यजमानस्य प्राणान्व्यगात्प्राण एनं हास्यतीति शश्वत्तथा स्यात्तस्मान्न संशंसेत्, इति ।

अत्र संशंसनवादी प्रष्टव्यः । किं वालखिल्याभ्यः पूर्वमैकाहिकस्य शंसनं किंवोपरिष्टादिति । तत्र प्रथमपक्षे दूषणमुच्यते । योऽयमत्र शिल्पसंशंसने स्तोत्रियः सामसाध्यस्य स्तोत्रस्याऽऽधारभूतस्तृचोऽस्ति सोऽयमात्मा वै जीवस्थानीय एव । वालखिल्या ऋचः प्राणस्थानीयाः । तथा सति स मैत्राव-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रुणो यदि संशंसेत्तदानीमेताभ्यामिन्द्रावरुणदेवताभ्यां यजमानस्य स्तोत्रियस्थानीयस्य प्राणान्वालखिल्यस्थानीयान्वीयाद्विगतान्कुर्यात् । इन्द्रावरुणौ क्रुद्धौ यजमानस्य प्राणान्विनाशयेताम् । एवं सति यः कश्चिन्मैत्रावरुणस्य विरोधी समागत्यैनं मैत्रावरुणं तत्र तस्मिन्संशंसने ब्रूयाच्छपेत् । केन प्रकारेणेति तदुच्यते । एताभ्यामिन्द्रावरुणदेवताभ्यां यजमानस्य प्राणानसौ मैत्रावरुणो व्यगाद्विगतान्कृतवान् । तस्मात्प्राण एनं मैत्रावरुणं यजमानं वा हास्यति परित्यजतीति । तदानीं तस्य शापेन शश्वदवश्यं तथा स्यात्प्राणवियोगो भवेत् । तस्मान्मैत्रावरुणो न संशंसेत् ।

एवं वालखिल्याभ्यः पूर्वं शंसने दोषमभिधायोर्ध्वमपि तच्छंसने दोषमाह--

स यदीक्षिताशंसिषं वालखिल्या हन्त पुरस्ताद्दूरोहणस्य संशंसानीति नो एव तस्याऽऽशामियात्, इति ।

स मैत्रावरुणो यदि मनस्येवमीक्षते विचारयेत् । कथमिति तदुच्यते । वालखिल्या अत्यन्तं दुःसाध्या अहमशंसिषं शंसितवानस्मि । हन्त मम हर्षः संपन्नः । इतःपरं दूरोहणस्य पुरस्तादैकाहिकं संभूय शंसानीति । तदानीं तस्य शंसनस्य पूर्ववत्प्राणवियोगहेतुत्वात्तस्य पक्षस्याऽऽशामपि नो एवेयात्सर्वथा न प्राप्नुयादेव । मानसो विचारोऽपि न कर्तव्यः । दूरे तत्संशंसनमित्यर्थः ।

इदानीं स्थानविशेषेण तत्संशंसनमङ्गी करोति—

तं यदि दर्प एव विन्देदुपरिष्टाद्दूरोहणस्यापि बहूनि शतानि शंसेद्यस्यो तत्कामाय तथा कुर्यादत्रैव तदुपाप्तम्, इति ।

तं मैत्रावरुणो(णं) यदि दर्प एव विन्देद्दर्पोऽवश्यं लभेत[1] । अत्यन्तदुःशंसं शिल्पमहमशंसिषं किं नाम मया शंसितुमशक्यमित्येतादृशो दर्पः । तदानीं तस्य मैत्रावरुणस्यौत्सुक्यानुसारेण दूरोहणस्योपरिष्टाद्बहून्यपि शस्त्राणां शतानि शंसेत् । अस्त्येव तदानीं शंसनस्यानुज्ञा । यस्यो यस्यैव फलस्य कामाय प्राप्तये तद्बहुविधशंसनमत्रैव स्थाने तथा कुर्यात्तत्फलमुपाप्तं प्राप्तं भवति । एवं तावदैकाहिकानां सूक्तानामशंसनं शंसनं वेति पक्षद्वयमप्यभिहितं भवति ।

---

१ ङ. तत्संशंस° ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र कस्य शंसनमङ्गीकृतं कस्य वा निषिद्धमित्यपेक्षायामुभयं विविच्य दर्शयति—

ऐन्द्र्यो वालखिल्यास्तासां द्वादशाक्षराणि पदानि तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्रावरुणं सूक्तमैन्द्रावरुणी परिधानीया तस्मान्न संशंसेत्, इति।

चर्षणीधृतमित्यादिकं यदेतदैन्द्रं सूक्तमैकाहिकं तदेतन्निराकृत्य यत्सूक्तान्तरमावां राजानावित्यैन्द्रावरुणमैकाहिकं तदङ्गी क्रियते। या वालखिल्य ऋचस्ता ऐन्द्य इन्द्रदेवताकास्तासां मध्ये यानि द्वादशाक्षराणि पदानि पादा विद्यन्ते बृहतीसतोबृहतीद्वयात्मकेषु प्रगाथेषु बृहत्यास्तृतीयपादौ द्वौ द्वादशाक्षरौ सतोबृहत्या आद्यस्तृतीयश्चोभौ पादौ द्वादशाक्षरौ तेषां पादानामक्षरसंख्यया जागतत्वमस्ति। एवं सत्यैकाहिके जागते चर्षणीधृतमित्यस्मिन्नैन्द्रे सूक्ते यः कामोऽपेक्षितः स कामस्तत्र तेष्विन्द्रदेवताकवालखिल्यागतेषु द्वादशाक्षरपादेषूपाप्तो लब्धो भवति। तस्माच्चर्षणीधृतमित्येतदेकाहिकमैन्द्रं सूक्तं परित्याज्यमावां राजानावित्येतदैन्द्रावरुणं सूक्तं तत्रेयमिन्द्रं वरुणमिति परिधानीयाऽप्यैन्द्रवा(न्द्राव)रुणी। तथा सत्येतस्य सूक्तस्यानुकूलतया तदेव शंसेत्। तस्मादन्यन्न संशंसेत्। अन्यशब्दोऽत्राध्याहर्तव्यः। अत एव सूत्रकार ऐन्द्रावरुणं सूक्तमङ्गी चकार। आवां राजानाविति नित्यमैकाहिकमिति। इति शिल्पाख्यं शस्त्रं व्यवस्थाप्य तस्योपरि सूक्तान्तरमप्यङ्गीकृतम्।

इदानीं शस्त्रमेवोपजीव्य स्तोत्रे कंचिद्विचारमुद्भावयति—

तदाहुर्यथा वाव स्तोत्रमेवं शस्त्रं विहृता वालखिल्याः शस्यन्ते विहृतां(तां३) स्तोत्रा३(त्र)म्, अविहृता३म्, इति, इति।

स्तोत्रशस्त्रयोः सादृश्यस्यापेक्षितत्वाच्छस्त्रगतासु वालखिल्यनामिकास्वृक्षु विहरणं दृष्ट्वा सामगानां स्तोत्रेऽपि संशयो जायते किमिदं स्तोत्रं विहृतमाहोस्विदविहृतमिति। प्लुतिद्वयं विचारार्थम्।

तस्मिन्विचारे[1] निर्णयमाह—

विहृतमिति ब्रूयादष्टाक्षरेण द्वादशाक्षरमिति, इति।

1 क. ख. ट. "तस्मिन्नि"।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अग्ने त्वं नो अन्तम इत्यादिषु द्विपदासु सामगाः स्तुवते। तत्र चाऽऽद्याः पादा अष्टाक्षरा द्वितीयाः पादा द्वादशाक्षराः। एवं तत्र च्छन्दो विहृतमित्युत्तरं ब्रूयात्।

अथ शस्त्रमुपजीव्य याज्यायां चोद्यमुद्भावयति—

तदाहुर्यथा वाव शस्त्रमेवं याज्या तिस्रो देवताः शस्यन्तेऽग्निरिन्द्रो वरुण इत्यथैन्द्रावरुण्या यजति कथमग्निरनन्तरित इति, इति।

तत्तत्र शस्त्रयाज्यायां चोद्यमाहुः। शस्त्रस्य तदीययाज्यायाश्च सादृश्यमपेक्षितम्। शस्त्रे च तिस्रो देवताः शस्यन्तेऽग्निरिन्द्रो वरुणश्चेति। तत्र स्तोत्रियानुरूपयोरग्निर्देवता। वालखिल्यास्विन्द्रो देवता। आवां राजानाविति सूक्त इन्द्रो वरुणश्च। एवं सति याज्यायामपि देवतात्रयमपेक्षितं तत्तु नास्ति। इन्द्रावरुणा मधुमत्तमस्येति याज्यायामिन्द्रावरुणयोरुभयोरपि प्रतिपादितत्वेनाग्नेः परित्यक्तत्वात्। कथमत्राग्निरनन्तरितोऽपरित्यक्तो भवेदिति चोद्यम्।

तस्योत्तरमाह—

यो वा अग्निः स वरुणस्तदप्येतदृषिणोक्तं त्वमग्ने वरुणो जायसे यदिति तद्यदेवैन्द्रावरुण्या यजति तेनाग्निरनन्तरितोऽनन्तरितः ॥ २६ ॥ इति।

अग्निवरुणयोरत्यन्तभेदो नास्ति। परस्परमतिप्रियत्वेनैकत्वोपचारात्। तदेकत्वमृषिणा मन्त्रेणाप्युक्तम्। त्वमग्न इत्यादिको मन्त्रः। हेऽग्ने त्वं वरुणो भूत्वा जायसे प्रादुर्भवसीति मन्त्रार्थः। तथा सत्यैन्द्रावरुण्या यजतीति यदेवास्ति तेनाग्नेर्वरुण एवान्तर्भावादयमग्निरनन्तरितोऽपरित्यक्तः। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनत्रिंशाध्याये दशमः खण्डः॥१०॥ (२६) [११३]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्य एकोनत्रिंशोऽध्यायः ॥ २९ ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ त्रिंशोऽध्यायः ।

स्तोत्रियस्यानुरूपत्वं संपाताश्च प्रगाथकाः ।
त्रिष्टुभोऽथाहीनयुक्तिभोक्तौ शिल्पं च वर्णितम् ॥

अथ पृष्ठ्यषडहस्य षष्ठेऽहनि शिल्पनामकानि शस्त्राणि विधत्ते—

शिल्पानि शंसन्ति, इति ।

शिल्पत्वं लौकिकनिदर्शनेन प्रशंसति—

देवशिल्पान्येतेषां वै शिल्पानामनुकृतीह शिल्पमधिगम्यते हस्ती कंसो वासो हिरण्यमश्वतरीरथः शिल्पम्, इति ।

शिल्पशब्दश्चाऽऽश्चर्यकरं कर्म ब्रूते । तच्च शिल्पं द्विविधं देवशिल्पं मानुषशिल्पं चेति । नाभानेदिष्ठादीनि यानि शिल्पानि सन्ति तानि देवानां प्रीतिहेतुत्वाद्देवशिल्पानीत्युच्यन्ते । एतेषामेव देवशिल्पानामनुकृति सदृशरूपमिह मनुष्यलोके शिल्पमधिगम्यते प्रतीयते । हस्तीत्यादिना तदेवोदाह्रियते । लोके शिल्पिनः कर्मकारा मृद्दार्वादिभिर्हस्तिसदृशमाकारं निर्मिमते । तथाऽन्यैः शिल्पिभिः कंसो दर्पणादि निर्मीयते । अपरैर्वासो विविधं निर्मीयते । अपरैः सुवर्णमयं कटकमुकुटादि निर्मीयते । अपरैश्चाश्वतरीरथो निर्मीयते । गर्दभादश्वादुत्पन्नाऽश्वतरजातिस्तद्युक्तो रथोऽश्वतरीरथः । तदेतत्सर्वमस्माभिरधिगम्यमानं मानुषशिल्पमेतद्दृष्ट्वा नाभानेदिष्ठादिशिल्पमाश्चर्यकरमिति निश्चेतव्यम् ।

वेदनं प्रशंसति—

शिल्पं हास्मिन्नधिगम्यते य एवं वेद, इति ।

अस्मिन्वेदितरि शिल्पं कौशलं नानाविधं प्राप्यते ।

सानुनासिकप्लुतेन शिल्पानां पूज्यत्वं दर्शयति—

यदेव शिल्पानी३ँ, इति ।

यस्मान्नाभानेदिष्ठादीनि शिल्पशब्दवाच्यानि तस्मात्सुवर्णाभरणादिवत्पूज्यानीत्यर्थः ।

प्रकारान्तरेण शिल्पानि प्रशंसति—

आत्मसंस्कृतिर्वाव शिल्पानि च्छन्दोमयं वा एतैर्य-

---

१ क. °मैकरा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जमान आत्मानं संस्कुरुते, इति ।

वक्ष्यमाणानि नाभानेदिष्ठादिशिल्पान्यात्मसंस्कृतिर्जीवात्मनः संस्कारकारणानि । तस्मादेतैर्यजमानो जीवात्मानं छन्दोमयं वेदमयो यथा भवति तथा संस्कुरुते ।

होतुः शिल्पं विधत्ते—

नाभानेदिष्ठं शंसति, इति ।

नाभानेदिष्ठाख्येन महर्षिणा दृष्टमिदमित्थेत्यादि सूक्तं नाभानेदिष्ठम् । तद्धोता शंसेत् ।

तत्प्रशंसति—

रेतो वै नाभानेदिष्ठो रेतस्तत्सिञ्चति, इति ।

एतैः सूक्तैर्यजमानस्याऽऽत्मसंस्कारो वेदमयजन्मरूपो योऽभिहितः स एव क्रमेणोपवर्ण्यते । तत्र नाभानेदिष्ठाख्यः सूक्तविशेषो यजमानोत्पादकरेतःस्थानीयः । तत्तेन सूक्तेन होता रेतः सिञ्चति ।

तस्मिन्सूक्ते देवताविशेषवाचिनः पदस्य विस्पष्टप्रतीत्यभावाद्यदनिरुक्तत्वमस्ति तत्प्रशंसति—

तमनिरुक्तं शंसत्यनिरुक्तं वै रेतो गुहायोन्यां सिच्यते, इति ।

तं नाभानेदिष्ठं सूक्तविशेषमनिरुक्तमस्पष्टदेवताकं शंसेत् । लोके ततोऽनिरुक्तमस्पष्टमेव [ रेतो ] गुहागोप्येऽन्तस्थाने योन्यां सिच्यते ।

नाभानेदिष्ठाख्येन सिक्तरेतसा यजमानस्य संबन्धं मन्त्रलिङ्गदर्शनेन द्रढयति—

स रेतोमिश्रो भवति क्ष्मया रेतः संजग्मानो निषिञ्चदिति रेतःसमृद्ध्या एव, इति ।

स यजमानो नाभानेदिष्ठेन रेतसा मिश्रितो भवति । तस्मिन्नर्थे क्ष्मयेत्यादिकस्तत्सूक्तगतः कश्चिदेकपादः प्रमाणम् । प्रजापतिर्यदा स्वां दुहितरं दिवमुषसं चाधिष्कन्नध्यस्कन्दत्तदानीमेव क्ष्मया भूम्या स्वदुहित्रा संजग्मानः सङ्गमासोऽस्मिँल्लोके रोहितं भूतामृश्यो भूतो रेतो निषिञ्चत्, रेतो निषिक्तवानिति । अतः सूक्ते रेतःसेकलिङ्गमास्ति तस्मादिदं सूक्तं रेतःसमृद्ध्यर्थमेव संपद्यते ।

१ ङ. °सं नाऽपि° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्य नाभानेदिष्ठस्य सूक्तान्तरसाहित्यं विधत्ते--

तं सनाराशंसं शंसति प्रजा वै नरो वाक्शंसः प्रजास्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदन्त्यो जायन्ते, इति ।

तं नाभानेदिष्ठाख्यं सूक्तविशेषं नाराशंसाख्यसूक्तसहितं होता शंसेत्। नरा आङ्गिरसो महर्षयो मनुष्यजातावुत्पन्नत्वात्ते शस्यन्ते यस्मिन्ये यज्ञेऽपि सूक्तविशेषे सोऽयं नाराशंसः। तेन सहितमिदमित्था रौद्रमित्येतन्नाभानेदिष्ठं सूक्तं शंसेत्। तत्र मनुष्यरूपाः प्रजा एव नराशब्देनाभिधीयन्ते। शंसशब्देन च वागुच्यते। तथा सति नराशंसशब्देन प्रजास्वेव वाचमवस्थापयति। तस्मात्कारणादिमाः प्रजा वदन्त्यो वाग्व्यवहारं कुर्वन्त्य उत्पद्यन्ते। अत्रेदं चिन्तनीयम्। किमिदं नाराशंससूक्तं नाभानेदिष्ठसूक्तस्य पुरस्तात्पठनीयमुतोपरिष्टादथवा मध्य इति।

तत्र प्रथमपक्षं दर्शयति—

तं हैके पुरस्ताच्छंसन्ति पुरस्तादायतना वागिति वदन्तः, इति ।

मनुष्यशरीरस्य पुरस्तात्पूर्वभाग आयतनं स्थानं यस्या वाचः सेयं वाक्पुरस्तादायतना, इत्येवमुपपत्तिं वदन्तः केचिद्याज्ञिका नाभानेदिष्ठस्य पुरस्तान्नाराशंसं शंसन्ति।

द्वितीयं पक्षं दर्शयति—

उपरिष्टादेक उपरिष्टादायतना वागिति वदन्तः, इति ।

शरीरस्य पूर्वभागेऽप्युपरिष्टान्मूर्धन्यायतनं वक्त्रादिरूपं स्थानं यस्या वाचः सेयमुपरिष्टादायतना वागिति युक्तिं वदन्तः केचिदन्ये याज्ञिका नाभानेदिष्ठस्योपरिष्टान्नाराशंसं शंसन्ति।

तृतीयं पक्षं दर्शयति—

मध्य एव शंसेन्मध्यायतना वा इयं वाक्, इति ।

शरीरस्याधोभागः पादरूपोऽपि वाच आयतनं न भवति। ऊर्ध्वभागो ललाटादिरपि वाचो नाऽऽयतनम्। किंत्वाधारादिर्वक्त्रान्तो मध्यभाग आयतनं यस्या वाचः सेयं मध्यायतना। तस्मान्नाभानेदिष्ठसूक्तस्य मध्य एव नाराशंससूक्तं शंसेत्। एवकारेण पूर्वोक्तौ पक्षौ व्यावर्त्येते।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मध्यभागेऽपि स्थानविशेषं दर्शयति—

उपरिष्टान्नेदीयसीवोपरिष्टान्नेदीयसीव वा इयं वाक्, इति ।

उपरिष्टान्नाभानेदिष्ठसूक्तस्यावसानभागो नेदीयानत्यन्तसमीपवर्ती यस्य सूक्तस्य मध्यभागस्य स मध्यभाग उपरिष्टान्नेदीयान् । इवशब्द एवकारार्थः । तथाविध एव मध्यभागे नाराशंसं शंसेत् । इदमित्थेत्येतन्नाभानेदिष्ठं सूक्तं सप्तविंशत्यृगात्मकम् । तत्रावसाने द्वे ऋचाववशिष्य पञ्चविंश्या ऊर्ध्वमेव नाराशंसं सूक्तं शंसेत् । तथा चाऽऽश्वलायन आह—इदमित्था रौद्रमिति प्रागुपोत्तमाया ये यज्ञेनेत्यावपत इति । वागप्युपरिष्टान्नेदीयस्यत्यन्तसमीपवर्तिन्येव शरीरमध्यभागे ताल्वोष्ठादौ वर्तते । तस्मात्सूक्तस्योक्तस्थानं युक्तम् ।

होतुः शंसनमुपसंहरन्मैत्रावरुणशस्त्रं प्रस्तौति—

तं होता रेतोभूतं सिक्त्वा मैत्रावरुणाय संप्रयच्छत्येतस्य त्वं प्राणान्कल्पयेति ॥ २७ ॥ इति ।

उक्तशंसनेन होता तं यजमानं रेतोभूतो रेतःप्राप्तो यथा भवति तथा सिक्त्वा तस्मै मैत्रावरुणाय संप्रयच्छति । तदा केनाभिप्रायेणेति सोऽभिधीयते । हे मैत्रावरुण त्वमेतस्य यजमानस्य रेतोरूपस्य प्राणान्संपादयेत्यनेनाभिप्रायेण यजमानं तस्मै प्रयच्छति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२७) [ ११४ ] ।

———

होतुः शिल्पशस्त्रमुक्त्वा मैत्रावरुणस्य शिल्पशस्त्रं विधत्ते—

वालखिल्याः शंसति प्राणा वै वालखिल्याः प्राणानेवास्य तत्कल्पयति, इति ।

वालखिल्याख्यैर्मुनिभिर्दृष्टा अभि प्र वः सुराधसमित्यादिकेऽष्टके स्थिता ऋचो वालखिल्याभिधाः । ता एव वालखिल्याख्ये ग्रन्थे समाम्नाताः । ताः सर्वा मैत्रावरुणः शंसेत् । वालखिल्यानां शिल्पानां प्राणरूपत्वेन तच्छंसने सत्यस्य रेतोरूपस्य यजमानस्य प्राणानेव संपादयति ।

१ झ. 'स्य म' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इतरशस्त्रवदत्रापि यथाशंसनपसक्तौ विशेषं विधत्ते—

ता विहृताः शंसति विहृता वा इमे प्राणाः प्राणेना पानोऽपानेन व्यानः, इति ।

ता वालखिल्या ऋचो विहृताः परस्परव्यतिपक्ताः शंसेत् । प्राणाः शरीरे विहृता वै परस्परव्यतिषक्ता एव वर्तन्ते । ऊर्ध्वगामिना प्राणवायु-निरोधादपानवायुर्व्यतिपक्तः । तेन वाऽपानवायुना तद्वायुद्वयमध्यवर्ती व्यानो व्यतिषक्तः । अथ यः प्राणापानयोः संधिः स व्यान इति श्रुत्यन्तरात् ।

व्यतिषङ्गप्रकारं विधत्ते—

स पच्छः प्रथमे सूक्ते विहरत्यर्धर्चशो द्वितीये ऋक्शस्तृतीये, इति ।

वालखिल्यानामष्टसु सूक्तेषु सप्तमाष्टमे सूक्ते परित्यज्य यान्यवशिष्टानि सूक्तानि तेषु त्रीणि युग्मानि । तत्र प्रथमगते द्वे सूक्ते मैत्रावरुणः पच्छो विहरेत् । प्रथमसूक्तगतं पादं द्वितीयसूक्तगतेन पादेन योजयेत् । द्वितीययुग्मगते सूक्ते अर्धर्चशो विहरेत् । तस्मिन्युग्म एकसूक्तगतमर्धर्चं द्वितीयसूक्तगतेनार्धर्चेन योजयेत् । तृतीययुग्मगते द्वे सूक्ते ऋक्शो विहरेत् । तस्मिन्युग्म एकसूक्तगतामृचं द्वितीयसूक्तगतयर्चा योजयेत् । तदुक्तमाश्वलायनेन—' अथ वालखिल्या विहरेत्तदुक्तं षोळशिना सूक्तानां प्रथमद्वितीये पच्छस्तृतीयचतुर्थे अर्धर्चश ऋक्शः पञ्चमषष्ठे ' इति । यद्यपि पूर्वाध्याये पच्छः प्रथमं षड्वालखिल्यानां सूक्तानि विहरत्यर्धर्चशो द्वितीयमृक्शस्तृतीयमिति विहारोऽभिहितस्तथाऽप्यत्रास्ति विशेषः । तत्र हि षण्णामपि सूक्तानां पादविहारोऽर्धर्चविहार ऋग्विहार इति त्रिरावृत्तिरभिहिता । अत्र तु प्रथमयुग्मे पादविहारो द्वितीययुग्मेऽर्धर्चविहारस्तृतीययुग्म ऋग्विहार इति । तत्रापि सकृदेव पादादिविहारो न त्वावृत्तिः । तथा = वाचस्य भावाभावाभ्यामप्यस्ति विशेषः । अत उभयत्र नामभेदोऽस्ति महावालभिद्विहार इति पूर्वस्य नामधेयम् । हौण्डिनो विहार इत्येतस्य नामधेयम् । अत एव सूत्रकारो नामधेयद्वयं दर्शयति—' हौण्डिनावथ महावालभिन् ' इति । हुण्डिनाख्येन महर्षिणा दृष्टौ द्वौ विहारौ महावालभिदाख्येन महर्षिणा दृष्ट एको विहारः ।

अत्रोक्तहौण्डिनविहारौ प्रशंसति—

स यत्प्रथमे सूक्ते विहरति प्राणं च तद्वाचं च

= व्यतिमर्शस्यात्रापेक्षितम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विहरति यद्द्वितीये चक्षुश्च तन्मनश्च विहरति यत्तृतीये श्रोत्रं च तदात्मानं च विहरति, इति ।

पूर्ववद्व्याख्येयम् । योऽयमत्रोक्तो हौण्डिनविहारस्तस्यापि मतभेदेन द्वौ प्रकारौ ।

तत्र प्रथमप्रकारमुपन्यस्य तत्र किंचिदपरितोषं दर्शयति—

ते हैके सह बृहत्यौ सह सतोबृहत्यौ विहरन्ति तदुपाप्तो विहारे कामो नेत्तु प्रगाथाः कल्पन्ते, इति ।

या षट्त्रिंशदक्षरा बृहती चत्वारिंशदक्षरा सतोबृहती वालखिल्यसूक्तेषु प्रथमा बृहती द्वितीया सतोबृहती तृतीया बृहती चतुर्थी सतोबृहतीत्येवं मणिप्रवालन्यायेनैकान्तरिताः पठितास्तत्र प्रथमाद्ययुजो बृहत्यो द्वितीय(या) चतुर्थ्यादियुजः सतोबृहत्यः । एवं सति प्रथमसूक्ते द्वितीयसूक्ते चाऽऽदिभूते द्वे बृहत्यौ सह विहरेत् । तदनन्तरभाविन्यौ द्वे सतोबृहत्यौ सह विहरेत् । इत्थं विहारं ते प्रसिद्धा याज्ञिकाः केचिदिच्छन्ति । तस्मिन्पक्षे विहारस्य विद्यमानत्वाद्विहारनिमित्तो यः कामः स उपाप्तो भवेदेव । किंतु प्रगाथा नेत्कल्पन्ते ते नैव संपद्यन्त इति परिभव(य)द्योतनार्थो नेच्छब्दः । छन्दोद्वयं मिलित्वैकः प्रगाथो भवति । स्वाध्यायपाठे प्रगाथानां विद्यमानत्वाद्विहारोऽपि प्रगाथान्त एवापेक्षितः । ते न केवलबृहतीभ्यां केवलसतोबृहतीभ्यां वा संपद्यन्ते । किंतु च्छन्दोद्वयेन संपद्यन्ते । प्रग्रथनेन द्वयोर्ऋचोर्वा बृहतीत्वसंपादनार्थं प्रगाथाश्रयणम् । तच्च च्छन्दोद्वये सुकरम् । तथाहि । प्रथमा बृहती यथापाठमेव पठितव्या । ततोऽष्टाक्षरचतुर्थपादं द्विरावर्त्य च सतोबृहत्याः प्रथमार्धगतेन द्वादशाक्षरपादेनाष्टाक्षरपादेन च द्वितीया बृहती संपद्यते । तमप्यष्टाक्षरपादं द्विरभ्यस्य सतोबृहत्या उत्तरार्धगतेन द्वादशाक्षरपादेनाष्टाक्षरपादेन च तृतीया बृहती संपद्यते । अतः प्रगाथेषु च्छन्दोद्वयमपेक्षितम् । केवलयोर्बृहत्योः सतोबृहत्योर्वा यथोक्तप्रथनासंभवात् ।

इत्थं हौण्डिनविहारे प्रथमप्रकारं निराकृत्य द्वितीयप्रकारं विधत्ते—

अतिमर्शमेव विहरेत्तथा वै प्रगाथाः कल्पन्ते प्रगाथा वै वालखिल्यास्तस्मादतिमर्शमेव विहरेयदेवातिमर्शा३म्, इति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अतिमर्शमतिमृश्यातिमृश्य प्रथमसूक्तस्य प्रथमायामृचि प्रथमपादमुक्त्वा तदनन्तरभावि सर्वमतिलङ्घ्य द्वितीयसूक्ते द्वितीयस्यामृचि द्वितीयपादेन योजयेत्। सोऽयमतिलङ्घ्य मृश्यमानत्वादतिमर्श इत्युच्यते। तत्र बृहतीपादसतोबृहतीपादयोर्मिश्रणरूपो विहारो भवति। एवकारेण पूर्वोक्तविहारो व्यावर्त्यते। स तु केवलबृहत्योः केवलसतोबृहत्योः संपद्यते न तु मिलितयोः। अतो न तत्र प्रगाथभावः। इह तु तथा सत्यतिमृश्य मेलने सति च्छन्दोद्वयसंबन्धात्प्रगाथाः संपद्यन्ते। या वालखिल्या ऋच आम्नातास्ताः प्रगाथरूपादय एव। तस्माद्विहारेऽपि प्रगाथरूपत्वं युक्तम्। तस्मादित्युपसंहारः। यदेवातिमृश्य विहरणं तत्पूज्यमिति प्लुतेरर्थः।

अथ च्छन्दोद्वयं तदीयमतिमर्शनं [च] प्रशंसति—

आत्मा वै बृहती प्राणाः सतोबृहती स बृहतीमशंसीत्स आत्माऽथ सतोबृहतीं ते प्राणा अथ बृहतीमथ सतोबृहतीं तदात्मानं प्राणैः परिबृहन्नेति तस्मादतिमर्शमेव विहरेत्, इति।

पूर्वोदाहृतं यदेवेति वाक्यमत्र योजनीयम्। अतिमृश्यातिमृश्य पूज्यं विहरणं यदस्ति तस्मिन्विहरणे सा बृहत्यात्मैव मध्यदेह एव। या तु सतोबृहती सा प्राणाः। तथा सति स मैत्रावरुणो यदादौ बृहतीमशंसीच्छंसनं कृतवांस्तद्बृहतीशंसनरूप आत्मा मध्यदेहः संपद्यते। अथानन्तरं सतोबृहतीमशंसीत्ते सतोबृहतीरूपाः प्राणाः संपद्यन्ते। अथ पुनरपि बृहतीं तत ऊर्ध्वं सतोबृहतीं बहुकृत्वः शंसति। तत्तेन व्यतिषक्तशंसनेनाऽऽत्मानं मध्यदेहं प्राणैर्युक्तैरेवैः परिबृहन्परितो वर्धयन्नेति गच्छति।

पुनरप्यतिषङ्गमनूद्य प्रकारान्तरेण प्रशंसति—

यद्वेवातिमर्शा३म्। आत्मा वै बृहती पशवः सतोबृहती स बृहतीमशंसीत्स आत्माऽथ सतोबृहतीं ते पशवोऽथ बृहतीमथ सतोबृहतीं तदात्मानं पशुभिः परिबृहन्नेति तस्मादतिमर्शमेव विहरेत्, इति।

---

१ ग. °रपि व्यति°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ब, अपि पुनरपि यदेवातिमृश्यातिमृश्य पूज्यं शंसनमस्ति । तत्र बृहती यजमानः सतोबृहती पशुरूपा । अन्यत्सर्वं पूर्ववद्व्याख्येयम् ।

इत्थं षण्णां सूक्तानां विहरणमुक्त्वा सप्तमाष्टमयोर्विपर्यासं विधत्ते—

**द्वये(द्वे ए)वोत्तमे सूक्ते पर्यस्यति स एव तयोर्विहारः, इति ।**

अष्टमं सूक्तमादौ पठित्वा पश्चात्सप्तमं सूक्तं पठेदित्येवमन्तिमं सूक्तं विपर्यस्येदेव न तु पादार्धादिव्यतिषङ्गं कुर्यात् । स विपर्यास एव तयोर्विहार इत्युच्यते ।

मैत्रावरुणस्य शस्त्रमुपसंहरन्ब्राह्मणाच्छंसिनः शस्त्रं प्रस्तौति—

**तस्य मैत्रावरुणः प्राणान्कल्पयित्वा ब्राह्मणाच्छंसिने संप्रयच्छत्येतं त्वं प्रजनयेति ॥ २८ ॥ इति ।**

तस्य होतृशस्त्रेण निष्पन्नस्य रेतोरूपस्य यजमानदेहस्य मैत्रावरुणः स्वकीयेन शस्त्रेण प्राणवायून्संपाद्य तं प्राणविशिष्टं यजमानदेहं ब्राह्मणाच्छंसिने संप्रयच्छति । हे ब्राह्मणाच्छंसिन्नेतं यजमानदेहं त्वं प्रजनयोत्पादयेति तस्याभिप्रायः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (२८) [११५] ।

---

ब्राह्मणाच्छंसिनः शस्त्रं विधत्ते—

**सुकीर्तिं शंसति देवयोनिर्वै सुकीर्तिस्तद्यज्ञादेवयोन्यै यजमानं प्रजनयति, इति ।**

अप प्राच इत्यादिसूक्तं सुकीर्तिशब्देनोच्यते । तत्सूक्तं ब्राह्मणाच्छंसी शंसेत् । सुकीर्तेर्देवप्रियत्वाद्देवयोनित्वम् । तस्य दे( स्माद्दे )वयोनिरूपात्सुकीर्त्यात्मकत्वा( का )द्यज्ञावयवाद्यजमानं ब्राह्मणाच्छंसी प्रजनयत्युत्पादयति ।

तस्यैव सूक्तान्तरं विधत्ते—

**वृषाकपिं शंसत्यात्मा वै वृषाकपिरात्मानमेवास्य तत्कल्पयति, इति ।**

विहि सोतोरसृक्षतेत्यादिकं सूक्तं वृषाकपिना दृष्टत्वात्तच्छब्देनाभिधीयते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्य वृषाकपिसूक्तस्य जीवात्मस्थानीयत्वात्तेनास्य यजमानदेहस्य जीवात्मनमेव संपादयति।

तस्य सूक्तस्य मध्ये न्यूङ्खं विधत्ते—

तं न्यूङ्खयत्यन्नं वै न्यूङ्खस्तदस्मै जातायान्नाद्यं प्रतिदधाति यथा कुमाराय स्तनम्, इति।

तं वृषाकपिं न्यूङ्खयति न्यूङ्खयुक्तं कुर्यात्। ह्रस्वैस्त्रयोदशभिरोकारैर्युक्ता दीर्घास्त्रय ओकारा मिलित्वा न्यूङ्खा भवन्ति। एतच्च पूर्वमेवोक्तम्। न्यूङ्खस्यान्नसाधनत्वेनान्नरूपत्वात्तेन न्यूङ्खेनास्मै यजमानायोत्पन्नायान्नाद्यं समर्पयति यथोत्पन्नाय कुमाराय माता स्तनं प्रयच्छति तद्वत्।

सूक्तगतं छन्दः प्रशंसति—

स पाङ्क्तो भवति पाङ्क्तोऽयं पुरुषः पञ्चधा विहितो लोमानि त्वङ्मांसमस्थि मज्जा स यावानेव पुरुषस्तावन्तं यजमानं संस्करोति, इति।

स वृषाकपिनामकः सूक्तविशेषः पङ्क्तिच्छन्दोयुक्तो भवति। पुरुषोऽपि लोमादिभिः पञ्चधा सृष्टत्वात्पञ्चसंख्यायोगेन पाङ्क्तः। तथा सति स पुरुषः स्वकीयैरवयवैर्यावानेव भवति तावन्तं सर्वमपि यजमानमनेन संस्करोति—

ब्राह्मणाच्छंसिनः शस्त्रमुपसंहरन्नच्छावाकस्य शस्त्रं प्रस्तौति।

तं ब्राह्मणाच्छंसी जनयित्वाऽच्छावाकाय संप्रयच्छत्येतस्य त्वं प्रतिष्ठां कल्पयेति ॥ २९ ॥ इति।

तं यजमानं ब्राह्मणाच्छंसी स्वकीयेन शस्त्रेणोत्पाद्य प्रतिष्ठासंपादनार्थमच्छावाकाय संप्रयच्छति। हेऽच्छावाकैतस्य यजमानस्य त्वं प्रतिष्ठां संपादयेति॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (२९) [ ११६ ]।

---

अथाच्छावाकस्य शस्त्रं विधत्ते—

एवयामरुतं शंसति प्रतिष्ठा वा एवयामरुत्प्रतिष्ठामेवास्य तत्कल्पयति, इति।

प्र वो महे मतय इत्यादिकं सूक्तमेवयामरुच्छब्देनोच्यते। तत्सूक्तमच्छा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


याकः शंसेत् । तच्च प्रतिष्ठायै । प्रतिष्ठारूपत्वात् । तेन यजमानस्य प्रतिष्ठामेव संपादयति ।

तस्मिन्सूक्ते न्यूङ्खं विधत्ते—

तं न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्यमेवास्मिंस्तद्-
धाति, इति ।

पूर्ववद्व्याख्येयम् ।

सूक्तगतं छन्दः प्रशंसति—

स जागतो वाऽतिजागतो वा सर्वं वा इदं जागतं
वाऽतिजागतं वा, इति ।

सूक्तविशेषो द्वादशाक्षरपादत्वाज्जगतीछन्दस्को भवति । चतुर्थपादे षोडशाक्षरत्वादतिच्छन्दा [अ]तिच्छन्दस्कोऽपि भवति । सर्वमप्येतत्प्राणिजातं जगच्छब्दाभिधेयत्वाज्जागतमतिजागतं वा भवति । अतः सर्वरूपत्वेन छन्दोद्वयं प्रशस्तम् ।

देवताद्वारेण सूक्तं प्रशंसति—

स उ मारुत आपो वै मरुत आपोऽन्नमभिपूर्वमेवा-
स्मिंस्तदन्नाद्यं दधाति, इति ।

स उ सोऽपि सूक्तविशेषो मरुद्देवताकः । मरुतश्च वृष्टिद्वारेणाऽऽपो वा आप एव । अपां चान्नहेतुत्वादन्नत्वम् । अभिपूर्वमेवोक्तानुपूर्व्यैव वायुसंपादितजलद्वारा यजमानेऽन्नाद्यं स्थापयति ।

होत्रादिभिः प्रयोज्यानामुक्तानां चतुर्णां शिल्पानामेकस्मिन्नहनि प्रयोगसद्भावं विधत्ते—

तान्येतानि सहचराणीत्याचक्षते नाभानेदिष्ठं वाल-
खिल्या वृषाकपिमेवयामरुतं तानि सह वा शंसे-
त्सह वा न शंसेत्, इति ।

नाभानेदिष्ठादीनि चत्वारि शिल्पानि यान्युक्तानि तानि सहचराण्येकस्मिन्नहनि सह वर्तन्त इत्येवमभिज्ञा आचक्षते । तस्माद्यस्मिन्नहनि शंसनीयानि तस्मिंश्चत्वार्यपि शंसेत् । यस्मिन्न शंसनीयानि तस्मिंश्चत्वार्यपि परित्यजेत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



विपक्षे बाधकमुक्त्वा स्वपक्षमुसंहरति––

यदेनानि नाना शंसेद्यथा पुरुषं वा रेतो वा विच्छि-
न्द्यात्तादृक्तत्तस्मादेतानि सह वा शंसेत्सह वा न
शंसेत्, इति ।

त(य)देकस्मिन्नहन्येता(ना)नि चत्वारि शिल्पानि नाना शंसेन्नाना विच्छि विच्छिद्यावशिष्टमहरन्तरे शंसेत् । तदानीं लोके यथा संपूर्णगर्भादुत्पन्नं पुंसं वा तत्कारणं रेतो वा विच्छिन्द्याद्विवासयेत्तादृशं तद्भवेत् । तस्मात्कारणा तेषां चतुर्णां साहित्यमेव न तु परस्परवियोगः कर्तव्यः ।

अथ शिल्पेष्वेव कंचिद्विशेषं वक्तुमाख्यायिकामाह––

स ह बुलिल आश्वतर आश्विर्वैश्वजितो होता
सन्नीक्षांचक्र एषा वा एषां शिल्पानां
विश्वजिति सांवत्सरिके द्वे मध्यंदिनम-
भिप्रत्येतोर्हन्ताहमित्थमेवयामरुतं शंसया-
नीति तद्ध तथा शंसयांचकार, इति ।

हशब्द ऐतिह्यद्योतनार्थः । स प्रसिद्धो बुलिलनामको महर्षिराश्वतर अश्वतरनाम्नो महर्षेः समुत्पन्नः । आश्विरश्वनाम्नो महर्षेः पुत्रः कदाचिद्वैश्व जितो विश्वजिद्यागसंबन्धी होता सन्स्वमनसीक्षांचक्रे विचारितवान् । सांव त्सरिके गवामयनाख्यसंवत्सरसत्रसंबन्धिनि विश्वजिति विषुवतोऽह्न ऊर्ध्व त्तरपक्षगते विश्वजिन्नामके चतुर्थेऽहन्येषां होतृमैत्रावरुणादीनां संबन्धीनि शस्त्राणि शिल्पनामकानि चत्वारि सन्ति । एषां शिल्पानां मध्ये द्वि(द्वे) शिल्पे मैत्रावरुणब्राह्मणाच्छंसिनोः संबन्धिनी मध्यंदिनसवनमभिलक्ष्य प्रत्येतोः प्रत्येतुं कुशलोऽस्मीति शेषः । हन्त हृष्टोऽहमेवयामरुतं शंसयानीत्येवं महर्षि विचारितवान् । अयमर्थः । तृतीयसवनगतान्येतानि शिल्पशस्त्राणि तान्यन्येष्व हःसु संभवन्ति । विश्वजिति त्वग्निष्टोमसंस्थत्वादग्निष्टोमे तृतीयसवने होत्रकाणां शस्त्राभावान्मैत्रावरुणब्राह्मणाच्छंसिनोः संबन्धि शस्त्रद्वयं माध्यंदिने सवने समानेतुं तावदच्छावाकमस्मिन्मध्यंदिन एवयामरुतं शंसयानि । तथा सति ततः पूर्वभाविनोर्मैत्रावरुणब्राह्मणाच्छंसिशस्त्रयोरर्थान्माध्यंदिने सवने समाकर्षणं भवतीति । इत्थं बुलिलः स्वमनसि विचार्य तद्ध तस्मिन्नेव माध्यंदिने

१ झ. °हर्षेर्गोत्रे स° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सवने तथा स्वविचारितक्रमेणैवयामरुतं सूक्तमच्छावाकं शंसयांचकार। बलाद्राज्ञाप्य शंसनं कारितवान्।

तत्र दोषं कथामुखेनोद्भावयति—

तद्ध तथा शस्यमाने गौश्ल आजगाम स होवाच होतः कथा ते शस्त्रं विचक्रं प्लवत इति, इति।

तद्ध तस्मिन्नेव माध्यंदिने सवने तथा तेन क्रमेण बुलिलमेरितेनाच्छावाकेनैवयामरुन्नामके शस्त्रे शस्यमाने सति तदानीं गौश्लनामकः कश्चिन्महर्षिरागत्य बुलिलनामकं होतारं प्रत्येवमुवाच। हे होतस्ते त्वदीयमच्छावाकप्रयुक्तमेवयामरुन्नामकं शस्त्रं प्लुवने विनश्यति। तत्र दृष्टान्तः। विचक्रं चक्ररहितं शकटमिव। अश्रूयमाणोऽपीवशब्दोऽत्राध्याहर्तव्यः। अतः कथा तदेतत्सर्वं कथं घटत इत्याक्षेपः

तत ऊर्ध्वं बुलिलस्य वचनं दर्शयति—

किं ह्यभूदिति, इति।

अत्राच्छावाकेन शस्यमाने सति किं वा दूषणमभून्नास्ति कश्चिदपि दोष इत्यर्थः।

तत ऊर्ध्वं गौश्लेनोक्तं दोषं दर्शयति—

एवयामरुदयमुत्तरतः शस्यत इति स होवाचैन्द्रो वै मध्यंदिनः कथेन्द्रं मध्यंदिनान्निनीषसीति, इति।

होतुर्धिष्ण्यादुत्तरतो ह्यच्छावाकस्य धिष्ण्यम्। तत्समीपेऽवस्थितेनाच्छावाकेनैवयामरुन्नामकः शस्त्रविशेषः पठनीय इति तस्याऽऽशय इत्युक्त्वा पुनरपि स गौश्ल एवमुवाच। माध्यंदिनसवन ऐन्द्र इन्द्रदेवताकः। तथा सति हे होतस्त्वमेतमिन्द्रमस्मान्माध्यंदिनसवनात्कथा निनीषसि केन प्रकारेणापनेतुमिच्छसि। सैवमपनयनेच्छैव त्वदीयाच्छावाकशंसने दोष इति गौश्लस्याभिप्रायः।

तमभिप्रायमजानतो बुलिलस्य वाक्यं दर्शयति—

नेन्द्रं मध्यंदिनान्निनीषामीति होवाच, इति।

अस्मान्माध्यंदिनसवनात्तत्स्वामिनमिन्द्रमपनेतुमहं नेच्छामि। तद्विरुद्धस्य कस्यचिदप्यननुष्ठितत्वादित्येवं बुलिल उक्तवान्।

---

१ क. ख. झ. ट. 'मको' यः वा'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ततो विरुद्धार्थानुष्ठानप्रदर्शनार्थं गौश्लस्य वाक्यं दर्शयति—

छन्दस्त्विदममध्यंदिनसाच्ययं जागतो वाऽतिजागतो वा सर्वं वा इदं जागतं वाऽतिजागतं वा स उ मारुतो मैव शंसिष्टेति, इति ।

हे होतस्त्वं स्वमनसेन्द्रमपनेतुं नेच्छसि किंत्विदं छन्दोऽच्छावाकेन प्रयुज्यमानं शस्त्रगतममध्यंदिनसाचि मध्यंदिनसवनसंबन्धार्हं न भवति । कथमिति चेत् । तदुच्यते । अयं सूक्तविशेषो जागतो वाऽतिजागतो वा । द्वादशाक्षरपादेन षोडशाक्षरपादेन चोपेतत्वात् । सर्वं चेदं जागतमतिजागतं च मन्त्रजातं जागते तृतीयसवने योग्यं न तु त्रैष्टुभे मध्यंदिने सवने । स उ सोऽपि सूक्तविशेषो मारुतो मरुद्देवताको न चैन्द्रः । अतोऽपि कारणात्तृतीयसवन एव योग्यम् । तस्मादयमच्छावाको मैव शंसिष्ट शंसनं सर्वथा मा करोत्विति दोषं दर्शितवान् ।

तत ऊर्ध्वं बुलिलकृतं दर्शयति—

स होवाचाऽऽरमाच्छावाकेत्यथ हाऽस्मिन्ननुशासनमीषे, इति ।

हेऽच्छावाक त्वमारम शंसनादुपरतो भवेत्येवं बुलिल उवाच । अथानन्तरमिदमप्युवाच । हा कष्टं संपन्नम् । इतःपरमस्मिन्गौश्ले गुरावा(व)नुशासनमनुष्ठेयोपदेशनमीष इच्छामि । एतस्मादवगत्य सर्वमनुष्ठास्यामीति तस्याभिप्रायः ।

अथ गौश्लस्योपदेशवाक्यं दर्शयति—

स होवाचैन्द्रमेष विष्णुन्यङ्गं शंसत्वथ त्वमेतं होतरुपरिष्टाद्रौद्र्यै धाय्यायै पुरस्तान्मारुतस्याप्यस्याथा इति, इति ।

स गौश्ल एवमुवाच । एषोऽच्छावाक ऐन्द्र[मिन्द्र]देवताको(कं) विष्णुन्यङ्गं विष्णुलिङ्गोपेतं शंसतु । एवयामरुतं त्यक्त्वा यौनेय इन्द्रेत्येवयामरुन्नामकं यदेतत्सूक्तमस्ति तस्मिन्सूक्ते द्वितीयस्यामृचि चतुर्थपाद एवमाम्नायते—इन्द्रो जीपिन्विष्णुना सचान इति । अत इदं विष्णुचिह्नोपेतं सूक्तं शंसतु । हे होतर्बुलिल त्वमेतमेवयामरुतं त्वदीयशस्त्रेऽस्याया: प्रक्षिपेः । तत्र स्थानविशेष उच्यते ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयसवने शं नः करतीति रुद्रदेवताका येयं धाय्या तस्या उपरिष्टान्मारुत-सूक्तस्य पुरस्तात्तयोरुभयोर्मध्ये प्रक्षेपस्थानम् । एवं गौश्लोपदेशः ।

अथानुष्ठानं दर्शयति—

तद्ध तथा शंसयांचकार तदिदमप्येतर्हि तथैव शस्यते ॥ ३० ॥ इति ।

तद्ध गौश्लेन यदुक्तं तत्सर्वं तथैव बुलिलः शंसयांचकार । मध्यंदिनसवनेऽच्छावाकं प्रत्येवयामरुच्छंसने प्रेषितवान् । स्वयं तृतीयसवन आग्निमारुत-शस्त्रमध्ये धाय्यामारुतसूक्तयोर्मध्य एवयामरुतं प्रक्षिप्य शंसनं कृतवान् । तस्मादिदानीमपि तदिदं सर्वं होत्रकैस्तथैव शस्यते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मण-भाष्ये त्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (३०) [११७] ।

---

संवत्सरसत्रे यदहरग्निष्टोमसंस्थं विश्वजिदाख्यमस्ति तत्र शिल्पानां शस्त्राणां क्लृप्तिः पूर्वत्राभिहिता ।

तत्र किंचिचोद्यमुद्भावयति—

तदाहुर्यदस्मिन्विश्वजित्यतिरात्र एवं षष्ठेऽहनि कल्पते यज्ञः कल्पते यजमानस्य प्रजातिः कथमत्राशस्त एव नाभानेदिष्ठो भवत्यथ मैत्रावरुणो वालखिल्याः शंसति ते प्राणा रेतो वा अग्रेऽथ प्राणा एवं ब्राह्मणाच्छंस्यशस्त एव नाभानेदिष्ठो भवत्यथ वृषाकपिं शंसति स आत्मा रेतो वा अग्रेऽथाऽऽत्मा कथमत्र यजमानस्य प्रजातिः कथं प्राणा अविक्लृप्ता भवन्तीति, इति ।

द्विविधो हि विश्वजित् । अतिरात्रसंस्थोऽग्निष्टोमसंस्थश्च । तत्रातिरात्रस्वतन्त्र एकाहः । तत्र तृतीयसवने होत्रकाणां शस्त्राणि विद्यन्ते । तथा सति पूर्वोक्तक्रमेण होता नाभानेदिष्ठं शस्त्वा रेतः सिञ्चति । मैत्रावरुणो वालखिल्याः शस्त्वा प्राणानवस्थापयति । ब्राह्मणाच्छंसी सुकीर्तिं शस्त्वा प्रजनयति । अच्छावाक एवयामरुतं शस्त्वा प्रतिष्ठां करोतीत्ययं क्रम उपपन्नः । एवं पृष्ठ्य-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


षडहस्य यदहः षष्ठमस्ति तस्याप्युक्तसंस्था(स्थ)त्वेन तृतीयसवने होत्रकशस्त्रस-द्भावात्पूर्वोक्ता यजमानोत्पत्तिरुपपद्यते । यथा विश्वजिदतिरात्रे षष्ठेऽहनि शस्त्ररूपो यज्ञः कल्पत उपपद्यते तदनुसारेण यजमानस्य प्रजातिर्जननमुप-पद्यते । तथा संवत्सरसत्रगतेऽग्निष्टोमसंस्थे विश्वजित्यहनि तदुपपादयितुं शक्यते । तथा हि तत्राग्निष्टोमसंस्थे विश्वजिति होत्रा नाभानेदिष्ठो माध्यंदिने सवनेऽशस्त एव भवति । तृतीयसवने वैश्वदेवशस्त्रे शस्यमानत्वात् । अथै सति मैत्रावरुणो वालखिल्याः प्रथमं शंसति तृतीयसवने होत्रकाणां शस्त्राभावेऽपि माध्यंदिने सवने तेषां शस्त्राणां बुलिलाख्येन महर्षिणा समाहृतत्वात् । ते च वालखिल्यात्मकाः प्राणा इत्युक्तम् । लोके तु रेत एवाग्रे प्रथमं सिक्तं भवति । पश्चात्सिक्ते रेतसि प्राणानां प्रवृत्तिरिति क्रमः । इह तु नाभानेदिष्ठराहित्येन रेतःसेको नास्ति । वालखिल्यानां सद्भावेन प्राणा विद्यन्ते । कथमेतदुपपद्यत इत्येकं चोद्यम् । एवं चोद्यान्तरमस्ति । ब्राह्मणाच्छंसी माध्यंदिने वृषाकपिं शंसति । स वृषाकपिर्यजमानस्य प्रजायमानस्याऽऽत्मा देहः । अत्रापि नाभानेदिष्ठोऽशस्त एव भवति । अतो रेतो नास्ति । लोके तु रेत एवाग्रे सिच्यते । अथ पश्चादात्मदेहो जायते । अतो लोकवैपरीत्ये सति कथमत्र यजमानस्य प्रजातिर्जन्मेति द्वितीयं चोद्यम् । यजमानस्य जन्मसंबन्धे वालखिल्यरूपाः प्राणा अविक्लृप्ता विशेषेण स्थानक्लृप्तिरहिताः कथं भवन्ति केन प्रकारेण वर्तन्त इत्येवं ब्रह्मवादिनश्चोद्यमाहुः ।

तस्य परिहारं दर्शयति—

यजमानं ह वा एतेन सर्वेण यज्ञक्रतुना संस्कुर्वन्ति स यथा गर्भो योन्यामन्तरेवं संभवञ्छेते न वै सकृदेवाग्रे सर्वः संभवत्येकैकं वा अङ्गं संभवतः संभवतीति, इति ।

यज्ञक्रतुशब्देन तत्साधनभूतः शिल्पसमूहो विवक्षितः । एतेन सर्वेणानेन शिल्पसमूहेन यजमानं संस्कुर्वन्ति । प्राणपात्यर्हता संस्कारः । स एव यत्ने क्रियते । ननु(तु) यजमानस्य मरणं जन्म [वा] । बहुभिः शिल्पैः क्रमेण संस्कारे दृष्टान्तः—यथा योन्यामन्तर्मध्ये स प्रसिद्धो गर्भो भवत्येवमयं यजमानः क्रमेण संभवन्संस्कारेणोत्पद्यमानः शेतेऽवतिष्ठते । लोकेऽपि गर्भोऽयं प्रथमं रेतःसेककाल एव सर्वः संपूर्णाङ्गः सकृदेव न वै संभवति नैवोत्पद्यते । किंतु संभवत उत्पद्यमानस्य पुरुषस्यैकैकमङ्गं क्रमेण संभवति निष्पद्यते । तस्मा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


च गर्भोपनिषद्याम्नातम्—'एकरात्रोषितं कललं भवति । सप्तरात्रोषितं बुद्बुदं भवति' इत्यादि । अतो गर्भवत्क्रमेण संस्कारो युक्त इत्यर्थः ।

उक्तमेवोत्तरं पुनरपि विस्पष्टयति—

सर्वाणि चेत्समानेऽहन्क्रियेरन्कल्पत एव यज्ञः कल्पते यजमानस्य प्रजातिरथैतं होतैवयामरुतं तृतीयसवने शंसति तयाऽस्य प्रतिष्ठा तस्यामेवैनं तदन्ततः प्रतिष्ठापयति ॥ ३१ ॥ इति ।

सर्वाणि शिल्पशस्त्राण्येकस्मिन्नेवाहनि क्रियेरन् । तदानीं तावतैवायं यज्ञो यजमानसंस्कारे हेतुः शिल्पसमूह उपपद्यते । यजमानस्य प्रजातिर्जननोपचार उपपद्यते । अतः सर्वशस्त्रानुष्ठानमेव संस्कारसाधनम् । ननु(तु) होतुः शस्त्रस्य प्रथमभावित्वादिक्रमविशेषः संस्कारोपयोगी । न त्व(न्व)त्र सर्वशस्त्रानुष्ठानं नास्ति माध्यंदिनसवन एवयामरुन्नाम्नः सूक्तस्याच्छावाकेनानुष्ठानात् । नायं दोषः । तत्र तदभावेऽपि तृतीयसवने होतुरेवयामरुच्छस्त्रमस्ति । तत्तथा सति यजमानस्य सर्वशास्त्रानुष्ठानेन या प्रतिष्ठाऽपेक्षिता तस्यामेव प्रतिष्ठायामेनं यजमानं तदन्ततः शस्त्राणामन्ते प्रतिष्ठापयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये त्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (३१) [ ११८ ] ।

---

पूर्वत्र ब्राह्मणाच्छंसिनः शिल्पे शस्त्रे सुकीर्तिं शंसति वृषाकपिं शंसतीति यत्सूक्तद्वयं विहितं तत ऊर्ध्वं कुन्तापाख्यं सूक्तं खिले कुन्तापनामके ग्रन्थे समाम्नातं त्रिंशदृचं वक्तव्यमिति [ तदिति ]हासमाह—

छन्दसां वै षष्ठेनाह्नाऽऽप्तानां रसोऽत्यनेदत्स प्रजापतिरबिभेत्पराङयं छन्दसां रसो लोकानत्येष्यतीति तं परस्ताच्छन्दोभिः पर्यगृह्णान्नाराशंस्या गायत्र्या रैभ्या त्रिष्टुभः पारिक्षित्या जगत्याः कारव्ययाऽनुष्टुभस्तत्पुनश्छन्दःसु रसमदधात्, इति ।

पृष्ठ्यषडहस्य संबन्धिनां षष्ठेनाह्ना प्राप्तानां गायत्र्यादीनां छन्दसां रसः

१ ख. 'चं सूक्तं तमि'

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सारोऽत्यनेददातिक्रम्यागच्छत् । तदानीं स प्रजापतिरबिभेद्भीतवान् । केनाभि-प्रायेणेति सोऽभिधीयते । अयं छन्दसां रसः पराङ्परावृत्तिरहितोऽस्मा-त्यतिक्रम्य गमिष्यतीत्यनेनाभिप्रायेण । ततो भीतः प्रजापतिस्तं रसं परस्ता-त्परभागे छन्दोभिर्गायत्र्यादिभिः पर्यगृह्णात्परितो निरुद्धवान् । गायत्र्यादीनां मध्ये कस्याः संबन्धिरसं कया पर्यगृह्णादिति तदुच्यते । गायत्र्याः संबन्धिरसं नाराशंस्या पर्यगृह्णात् । नराशंसशब्दो यस्यामृग्जातावस्ति सेयं नाराशंसी । तथा त्रिष्टुभः सारं रैभ्या रेभशब्दोपेतयर्ग्जात्या पर्यगृह्णात् । जगत्याः सारं पारिक्षित्या परिक्षिच्छब्दोपेतयर्ग्जात्या पर्यगृह्णात् । अनुष्टुभः सारं कारव्यया कारुशब्दोपेतयर्ग्जात्या पर्यगृह्णात् । तत्तस्मात्परिग्रहादूर्ध्वं पुनश्छन्दःसु गाय-त्र्यादिषु तं रसमदधादवस्थापितवान् ।

वेदनं प्रशंसति—

सरसैर्हास्य च्छन्दोभिरिष्टं भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद, इति ।

अस्य वेदितुर्दर्शपूर्णमासादिकं सारयुक्तैर्गायत्र्यादिभिरिष्टं भवति । अथा-ग्निष्टोमादिकं प्रौढयज्ञं वेदिता सारयुक्तैश्छन्दोभिस्तनुते विस्तारयति—

इदानीं कुन्तापसूक्तगता ऋचो विधत्ते—

नाराशंसीः शंसति प्रजा वै नरो वाक्शंसः प्रजा-स्वेव तद्वाचं दधाति तस्मादिमाः प्रजा वदत्यो जायन्ते य एवं वेद यदेव नाराशंसी३ः, इति ।

इदं जना इत्याद्यास्तिस्र ऋचो नाराशंस्यः । तत्र नराशंसस्तविष्यत इति नराशंसशब्दस्य श्रुतत्वात् । तास्तिस्र ऋचो ब्राह्मणाच्छंसी शंसेत् । तत्र नर इत्यनेन प्रजा विवक्षिताः । शंस इत्यनेन वाग्विवक्षिता । अतस्तच्छंसनेन प्रजा-स्वेव वाचमवस्थापयति । तस्मात्कारणादिमाः प्रजा लोके वदत्यो वाग्व्यवहा-रयुक्ता उत्पद्यन्ते । य एवं वेद तस्य वाग्व्यवहारक्षमाः प्रकाश(जा जा)यन्त इति शेषः । नाराशंसीरिति यदेवास्ति तत्पूज्यमिति प्लुतेरभिप्रायः ।

ता ऋचः पुनः प्रशंसति—

शंसन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवै-तद्यजमानाः शंसन्त एव स्वर्गं लोकं यन्ति, इति ।

---

१ क. ब. ट. °क्षिता । शं° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स्पष्टोऽर्थः ।

तच्छंसने कंचिद्विशेषं विधत्ते—

ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्न्यायमेति, इति ।

ता नाराशंसीस्तिस्र ऋचः प्रग्राहं प्रगृह्य पादे पादेऽवसाय शंसेत् । यथा वृषाकपिसूक्तं पादे पादे विगृह्य शंसति तद्वदेतत् । वृषाकपिसूक्ते प्रग्रहविधिरर्थसिद्धो द्रष्टव्यः । हि यस्मात्कारणादिदमृचां शंसनं वार्षाकपं वृषाकपिसंबन्धं कर्तव्यम् । तत्तस्मात्कारणाद्वृषाकपेरेतन्नामकस्य सूक्तस्य न्यायं प्रकारमेति प्राप्नोति । विग्रह एवात्र तन्न्यायः ।

वृषाकपिसूक्ते न्यूङ्खनिनर्दावपि विद्येते । अतोऽत्रापि तदुभयप्राप्तौ न्यूङ्खं निराकृत्येतरं विधत्ते—

तासु न न्यूङ्खयेन्नी वीव नर्देत्स हि तासां न्यूङ्खः, इति ।

तासु नाराशंसीषु न्यूङ्खं न कुर्यात् । किंतु नी वीव नर्देदेव विशेषेण निनर्दमेव कुर्यात् । स एव निनर्दस्तासां नाराशंसीनां न्यूङ्खस्थानीयः । तृतीयपादस्य द्वितीयस्वरे त्रयोदशभिरोकारैस्तत्र चावसानं कृत्वा त्रयाणां त्रिमात्राणामोकाराणामुच्चारणं न्यूङ्खः । तृतीयपादस्य प्रथमाक्षरमनुदात्तत्वेन द्वितीयाक्षरमुदात्तत्वेनोच्चारयोदिति यदस्ति सोऽयं निनर्दः ।

ऋगन्तराणि विधत्ते—

रैभीः शंसति, इति ।

रेभशब्दोपेता ऋचो रैभीः(भ्यो) वच्यस्वरेभवच्यस्वेत्याद्यास्तिस्रः । ताः शंसेत् ।

ता ऋचः प्रशंसति—

रेभन्तो वै देवाश्च ऋषयश्च स्वर्गं लोकमायंस्तथैवैतद्यजमाना रेभन्त एव स्वर्गं लोकं यन्ति, इति ।

रेभन्तः शब्दं कुर्वन्तः । कीर्तिं कुर्वन्त इत्यर्थः ।

विग्रहादिकं विधत्ते—

ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वृषाकपेस्तन्न्यायमेति तासु न न्यूङ्खयेन्नौ वीव न-
र्देत्स हि तासां न्यूङ्खः, इति ।

पूर्ववत् ।

ऋगन्तराणि विधत्ते—

पारिक्षितीः शंसति, इति ।

परिक्षिच्छब्दोपेता राज्ञो विश्वजनीनस्येत्याद्याश्चतस्रः पारिक्षित्यः। तासु परिक्षितः क्षेममकरादिति परिक्षिच्छब्दस्य श्रुतत्वात् । ता ऋचः शंसेत् ।

ताः प्रशंसति—

अग्निर्वै परिक्षिदग्निर्हीमाः प्रजाः परिक्षेत्यग्निं हीमाः
प्रजाः परिक्षियन्ति, इति ।

तास्वृक्षु परिक्षिच्छब्देनाग्निरेवाभिधीयते। अग्निर्हीमाः सर्वाः प्रजा दाहपाकादिनां परिपालयन्क्षेति निवसति । प्रजाश्चेमा अग्निं परितः सेवामानाः क्षियन्ति निवसन्ति । अतः कर्तरि कर्मणि वा व्युत्पत्त्याऽयमग्निः परिक्षिद्भवति ।

वेदनं प्रशंसति—

अग्नेरेव सायुज्यं सरूपतां सलोकतामश्नुते य एवं वेद, इति ।

सहवाससमानरूपसमानलोकत्वानि वेदिता प्राप्नोति ।

तासामृचां प्लुतेन पूज्यत्वं दर्शयति—

यदेव पारिक्षिती३ः, इति ।

प्रकारान्तरेण ताः प्रशंसति—

संवत्सरो वै परिक्षित्संवत्सरो हीमाः प्रजाः परिक्षेति
संवत्सरं हीमाः प्रजाः परिक्षियन्ति, इति ।

अग्निवाक्यवद्व्याख्येयम् ।

वेदनप्रशंसां प्रग्राहविधिं च दर्शयति—

संवत्सरस्यैव सायुज्यं सरूपतां सलोकतामश्नुते य
एवं वेद ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षा-
कपं हि वृषाकपेस्तन्न्यायमेति तासु न न्यूङ्खयेन्नौ
वीव नर्देत्स हि तासां न्यूङ्खः, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पूर्ववद्व्याख्येयम् ।
ऋगन्तराणि विधत्ते—

कारव्याः शंसति, इति ।

कारुशब्दोपेताः कारव्या इन्द्रः कारुमबूबुधदित्याद्याश्चतस्रः शंसेत् ।
ताः प्रशंसति—

देवा वै यत्किंच कल्याणं कर्माकुर्वंस्तत्कारव्याभिरवाप्नुवंस्तथैवैतद्यजमाना यत्किंच कल्याणं कर्म कुर्वन्ति तत्कारव्याभिराप्नुवन्ति, इति ।

कल्याणं काम्यफलार्थं कर्म कृतवतां कारव्याभिर्ऋग्भिस्तत्फलप्राप्तिर्भवति ।
विग्रहादिकं विधत्ते—

ताः प्रग्राहं शंसति यथा वृषाकपिं वार्षाकपं हि वृषाकपेस्तन्न्यायमेति तासु न न्यूङ्खयेन्नो वीव नर्देत्स हि तासां न्यूङ्खः, इति ।

पूर्ववद्व्याख्येयम् ।
ऋगन्तराणि विधत्ते—

दिशांक्लृप्तीः शंसति दिश एव तत्कल्पयति, इति ।

यः सभेयो विदथ्यं इत्याद्या ऋचो दिशांक्लृप्तीः [स्ताः]शंसेत् । प्राच्यादिदिग्वपञ्चसंख्योपेतत्वात् । ते देवाः प्रागकल्पयन्निति क्लृपिधातुश्रवणाच्च दिशांक्लृप्तित्वम् । तच्छंसनेन दिश एव कल्पयति स्वप्रयोजनक्षमाः करोति ।
तासामृचां संख्यां दर्शयति—

ताः पञ्च शंसति पञ्च वा इमा दिशश्चतस्रस्तिरश्च्य एकोर्ध्वा, इति ।

दिशांक्लृप्तिसंज्ञकास्ता ऋचः पञ्च शंसेदर्यमा उपलभ्येत्याद्याः । दिशः पञ्चसंख्याका एव । ऐन्द्री यामी वारुणी सौमी चेत्येवं तिरश्च्यस्तिर्यगवस्थिता दिशश्चतस्र ऊर्ध्वं चैका । इत्थं पञ्चसंख्योपपद्यते ।
न्यूङ्खनिनर्दौ निषेधति—

तासु न न्यूङ्खयेन्नैवेव च निनर्देन्नेदिमा दिशो न्यूङ्खयानीति, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तासु दिशांक्लृप्तिषु न्यूङ्खं न कुर्यात्। तथा निनर्दमपि नैव कुर्यात्। एवं चेति पदद्वय( यं ) विषययोः समुच्चयार्थम्। न्यूङ्खवर्जने कोऽभिप्रायः सोऽभिधीयते। इमा दिशो नेन्न्यूङ्खयानि नैव चालयानीत्यनेनाभिप्रायेण। न्यूङ्खनिनर्दयोर[ न ]भिधानादेव वर्जनसिद्धौ निषेधो नित्यानुवादः। पूर्वमन्यदृष्टान्तेन शङ्कितयोर्निषेधार्थो वा।

शंसने निषेधं ( विशेषं ) दर्शयति—

ता अर्धर्चशः शंसति प्रतिष्ठाया एव, इति।

पूर्वासामृचां पादे पादेऽवसाय शंसनमुक्तम्। तास्तु दिशांक्लृप्तीरर्धर्चेऽवसाय शंसेत्। अर्धर्चस्य प्रत्यृचं द्वित्वात्तच्छंसनं प्रतिष्ठायै संपद्यते।

ऋगन्तराणि विधत्ते—

जनकल्पाः शंसति प्रजा वै जनकल्पा दिश एव तत्कल्पयित्वा तासु प्रजाः प्रतिष्ठापयति, इति।

योऽनाक्ताक्ष इत्याद्याः षड् ऋचो जनकल्पाभिधाः[स्ताः] शंसेत्। अनाक्ताक्ष इत्यादिना पुरुषविशेषानु( षणान्यु )पन्यस्यते( न्ते )। ताः कल्पेषु कल्पशब्दाभिधानादेव जनकल्पास्तासां प्रजारूपत्वात्। पूर्वोक्तदिग्रूपाभिर्ऋग्भिर्दिशः ( दिशः ) संपाद्य तासु दिक्षु प्रजाः प्रतिष्ठापयति।

पूर्ववन्न्यूङ्खनिनर्दनिषेधमर्धर्चेऽवसानं [ च ] दर्शयति—

तासु न न्यूङ्खयेन्नैवैव च निनर्देन्नेदिमाः प्रजा न्यूङ्खयानीति ता अर्धर्चशः शंसति प्रतिष्ठाया एव, इति।

ऋगन्तराणि विधत्ते

इन्द्रगाथाः शंसतीन्द्रगाथाभिर्वै देवा असुरानभिगायाथैनानत्यायंस्तथैवैतद्यजमाना इन्द्रगाथाभिरेवाप्रियं भ्रातृव्यमभिगायाथैनमतियन्ति, इति।

यदिन्द्रादो दाशराज्ञ इत्याद्याः पञ्चर्च इन्द्रगाथाभिधाः शंसेत्। इन्द्रो गाध्यते कथ्यते यास्वृक्षु ता इन्द्रगाथाः। ताभिर्देवा असुरानभिगाय योद्धुमभिमुख्येन प्राप्य युद्धेनैनानत्यायन्, अतिक्रान्तवन्तो जयं प्राप्ता इत्यर्थः। देववद्यजमाना अप्येताभिर्वैरिणं जयन्ति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पूर्ववदर्धर्चेऽवसानं विधत्ते—

ता अर्धर्चशः शंसति प्रतिष्ठाया एव ॥ ३२ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये षष्ठः खण्डः ॥ ६ ॥ ( ३२ ) [ ११९ ] ।

---

कुन्तापनामकं त्रिंशदृचं सूक्तं विधायैतशप्रलापनामकं सप्ततिसंख्याकं पदसमूहं विधत्ते—

ऐतशप्रलापं शंसति, इति ।

ऐतशाख्येन मुनिना दृष्टा ऐतशप्रलापाः । अनन्वितानामर्थानां वचसां संलापः प्रलापः । तं ब्राह्मणाच्छंसी शंसेत् ।

तमेतशप्रलापं स्तोतुमाख्यायिकामाह—

ऐतशो ह वै मुनिरग्नेरायुर्ददर्श यज्ञस्यायातयाममिति हैक आहुः सोऽब्रवीत्पुत्रान्पुत्रका अग्नेरायुरदर्शं तदभिलपिष्यामि यत्किं च वदामि तन्मे मा परिगातेति स प्रत्यपद्यतैता अश्वा आप्लवन्ते प्रतीपं प्रातिसत्वनमिति, इति ।

ऐतशनामकः कश्चिन्मुनिरग्नेरायुरित्येतन्नामकं मन्त्रकाण्डं ददर्श । पूर्ववदग्नेः प्रियत्वात्तस्य काण्डस्याग्नेरायुरिति नाम संपन्नम् । एके याज्ञिका यज्ञस्यायातयाममिति तस्य मन्त्रकाण्डस्य नामधेयमाहुः । पुनः पुनः पठितैः सार्थकैर्मन्त्रजातैरलप्तो यज्ञो गतसारोऽभूत् । तस्य यज्ञस्याऽऽलस्यपरिहारेण सारोत्पादनादसंबन्धप्रलापरूपस्य मन्त्रकाण्डस्यायातयाममिति नाम संपन्नम् । स मुनिरेतशः स्वकीयान्पुत्रान्प्रत्येवमब्रवीत् । हे पुत्रकाः कुत्सिताः पुत्रा अहमग्नेरायुरित्येतन्नामकं मन्त्रकाण्डं दृष्टवानस्मि । तदहं भवतामग्रेऽभिलपिष्यामि । तस्मिन्संगतार्थस्य कस्याप्यभावाद्यत्किंचिद्वाङ्मात्रं वदामि । तन्मे वचनं यूयं मा परिगातास्य वचनस्य निन्दां मा कुरुत । एवं पुत्रान्मन्त्रयित्वा स मुनिः प्रत्यपद्यत प्रलापं प्रारब्धवान् । सप्ततिसंख्याकपदसमूहरूपे तस्मिन्नेता अश्वा आप्लवन्त इति प्रथमं पदम् । प्रतीपं प्रातिसत्वनमिति द्वितीयं पदम् । इतिशब्दः प्रदर्शनार्थ इत्यादिकं सप्ततिपदसमूहमुक्तवान् ।

९९

Digitized by Arya Samaj Foundation Chennai and eGangotri


तदीयपुत्रवृत्तान्तं दर्शयति—

तस्याऽभ्यग्निरैतशायन एत्याकालेऽभिहाय मुखमप्यगृह्णादहपन्नः पितेति, इति ।

तस्य मुखमित्यन्वयः । एतशस्य पुत्र ऐतशायनः । स चाभ्यग्निरित्येतन्नामकः । एतादृश एत्य प्रलपन्तं पितरं दृष्ट्वा सहसा समेत्य तदानीमकाले प्रलापसमाप्तिकालाभावेऽप्यभिहायाऽऽभिमुख्येनोत्थाय तस्य पितुर्मुखमप्यगृह्णाद्धस्तेनाऽऽच्छादितवान् । केनाभिप्रायेणेति सोऽभिधीयते । नोऽस्माकं पितेदानीमदपदर्पं प्राप्त उन्मत्त इत्यभिप्रायेण ।

अथ मुनेर्वृत्तान्तमाह—

तं होवाचापेह्यलसोऽभूर्यो मे वाचमवधीः शतायुं गामकरिष्यं सहस्रायुं पुरुषं पापिष्ठां ते प्रजां करोमि यो मेत्थमसक्था इति, इति ।

तमभ्यग्निनामकं पुत्रं मुखपिधाने प्रवृत्तं पितैवं तमुवाच । हे पुत्र त्वमपेह्यस्माद्देशादपागच्छालसोऽभूर्मद्वाक्यं श्रोतुमालस्ययुक्तस्त्वमभूः । यस्त्वं मे मदीयां वाचमवधीर्मुखपिधानेन विनाशितवानसि । अहमुन्मत्त इति तव बुद्धिर्नत्वहमुन्मत्तः किंतु मन्त्रकाण्डमीदृशम् । सामर्थ्यं तु मदीयं शृणु । अल्पायुष्यं(ष्यां) गां शतायुं शतसंवत्सरायुष्कमकरिष्यं कर्तुं शक्नोमि । तथा शतायुं पुरुषं सहस्रायुं सहस्रसंवत्सरायुष्कं कर्तुं शक्नोमि । अतो मामवजानतस्ते प्रजां पुत्रादिरूपां पापिष्ठामतिशयेन दारिद्र्यादिहेतुयुक्तां करोमि । यस्त्वं मामित्थमसक्था अभिभूतवानसि । तस्मात्तव शापो युक्त इत्येवं पितोवाच ।

पितुः शापं लोकप्रसिद्ध्या दृढयति—

तस्मादाहुरभ्यग्नय ऐतशायना औवार्णां पापिष्ठा इति, इति ।

यस्मात्पित्रा शापो दत्तस्तस्मात्कारणात्तद्वृत्तान्ताभिज्ञा जना एवमाहुः । औवार्णामौर्वगोत्रोत्पन्नानां पुरुषाणां मध्य ऐतशायना एतशस्य मुनेः संबन्धिनोऽभ्यग्नयोऽभ्यग्निप्रमुखाः पुरुषाः पापिष्ठा अत्यन्तपापयुक्ता इति ।

एवमप्रलापस्य बाहुल्यं विधत्ते—

तं हैके भूयांसं शंसन्ति, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तमेतशप्रलापमभिज्ञाः केचिद्याज्ञिका अतिशयेन बहुलं शंसन्ति । तथा चाऽऽश्वलायन आह—'सप्तर्ति पदान्यष्टादश वा' इति ।

तत्र कंचिन्नियमं विधत्ते—

स न निषेधेद्यावत्कामं शंसेत्येव ब्रूयादायुर्वा ऐतशप्रलापः, इति ।

स यजमान औत्सुक्येनैतशप्रलापं शंसन्तं ब्राह्मणाच्छंसिनं न निषेधेत् । मा भूदयं प्रलाप इति निषेधं न कुर्यात् । किंतु यावत्कामं तदीयेच्छानुसारेण शंसेत्येवं ब्रूयात् । अयमैतशप्रलाप आयुःस्वरूपस्तस्मादत्र प्रवर्तमानस्य निषेधनं न युक्तम् ।

वेदनं प्रशंसति—

आयुरेव तद्यजमानस्य प्रतारयति य एवं वेद, इति ।

प्लुतेन पूज्यत्वं दर्शयति—

यदेवैतशप्रलापा३ः, इति ।

प्रकारान्तरेण प्रशंसति—

छन्दसां हैष रसो यदैतशप्रलापश्छन्दःस्वेव तद्रसं दधाति, इति ।

योऽयमैतशप्रलापः स एष च्छन्दसां वेदानां मध्ये रसः सारः । अत एतच्छंसनेन च्छन्दःसु वेदेष्वेव रसमवस्थापयति ।

वेदनं प्रशंसति—

सरसैर्हास्य च्छन्दोभिरिष्टं भवति सरसैश्छन्दोभिर्यज्ञं तनुते य एवं वेद, इति ।

पूर्ववद्व्याख्येयम् ।

पुनरपि प्लुतेन पूज्यत्वं दर्शयति—

यद्वैवैतशप्रलापा३ः, इति ।

उ अपि चेत्यर्थः ।

प्रकारान्तरेण प्रशंसति—

अयातयामा वा अक्षितिरैतशप्रलापोऽयातयामा मे यज्ञेऽसदक्षितिर्मे यज्ञेऽसदिति, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



योऽयमैतशप्रलापः सोऽयातयामः । यातयामत्वमसारत्वं तद्वैपरीत्यादयातयामः । सारयुक्त इत्यर्थः । अत एवाक्षितिरक्षय्यफलहेतुः । तस्मान्मे यज्ञे प्रयोगोऽयमयातयामोऽसत्सरसोऽस्तु । तथा मे यज्ञे प्रयोगोऽयमक्षितिरसादित्यक्षय्यफलहेतुत्वमभिमेत्य शंसेत् ।

तत्रैकस्मिन्पदेऽवसानं विधत्ते—

तं वा एतमैतशप्रलापं शंसति पदावग्राहं यथा निविदम्, इति ।

पदे पदेऽवगृह्य यथा निविदं शंसति तथैवैतशप्रलापं पदे पदेऽवगृह्यावगृह्य शंसेत् ।

अन्ते प्रणवं विधत्ते—

तस्योत्तमेन पदेन प्रणौति यथा निविदः, इति ।

निविदः पदानां शंसने चरमे पदे यथा प्रणवं करोति तद्वदत्राप्युत्तमे पदे प्रणवं कुर्यात् ।

ऐतशप्रलापं विधाय प्रवह्लिकाख्या ऋचो विधत्ते—

प्रवह्लिकाः शंसति प्रवह्लिकाभिर्वै देवा असुरान्प्रवह्ल्याथैनानत्यायंस्तथैवैतद्यजमानाः प्रवह्लिकाभिरेवाप्रियं भ्रातृव्यं प्रवह्ल्याथैनमतियन्ति, इति ।

विततौ किरणौ द्वावित्याद्याः षडनुष्टुभः प्रवह्लिकाख्याः । पुरा किलैताभिर्ऋग्भिर्देवा असुरान्प्रवह्ल्यामनस्कं प्रियमुक्त्वा ततस्तानसुरानतिक्रम्यागच्छन् । प्रवह्लनं निर्हृदयं सान्त्ववचनमित्युक्तवान् । अमनःपूर्वकेण प्रियवचनेन विरोधिनोऽसुरान्वञ्चयित्वा तदीयदेशमतिक्रम्य गतवन्त इत्यर्थः । देवदृष्टान्तेन यजमानानामपि तथैव भवति ।

तास्वृक्ष्वर्धर्चेऽवसानं विधत्ते—

ता अर्धर्चशः शंसति प्रतिष्ठाया एव, इति ।

अर्धर्चयोर्द्वित्वात्पादद्वयसाम्येन प्रतिष्ठात्वम् ।

१ क. ख. झ. ट. °याग° । २ झ. ट. °क्षयफ° । ३ क. °यामाः स्वतः सरसास्तु । ख. °यामाश्वनः सारसास्तु । झ. °यामस्वतः सरसास्तु । ट. °यामाश्वतः सरसास्तु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शाखान्तरगताः प्रवह्लिकाख्या ऋचो विधाय तथैव शाखान्तरगता आजिज्ञासेन्या ऋचो विधत्ते—

आजिज्ञासेन्याः शंसत्याजिज्ञासेन्याभिर्वै देवा असुरानाज्ञायाथैनानत्यायंस्तथैवैतद्यजमाना आजिज्ञासेन्याभिरेवाप्रियं भ्रातृव्यमाज्ञायाथैनमतियन्ति ता अर्धर्चशः शंसति प्रतिष्ठाया एव, इति ।

आकारोऽत्रावशब्दार्थे वर्तते । आज्ञातुमवज्ञातुमिच्छाऽऽजिज्ञासा । तामर्हन्तीति तत्साधनीभूता ऋच आजिज्ञासेन्याः । आज्ञायासुराणामवज्ञां कृत्वेत्यर्थः । अन्यत्पूर्ववद्व्याख्येयम् । इहेत्थं प्रागपागुदगिति शाखान्तरपठिताश्चतस्र ऋच आजिज्ञासेन्याः ।

तासां शंसनं विधाय प्रतिराधाख्यस्य मन्त्रस्यै शंसनं विधत्ते—

प्रतिराधं शंसति प्रतिराधेन वै देवा असुरान्प्रतिराध्याथैनानत्यायंस्तथैवैतद्यजमानाः प्रतिराधेनैवाप्रियं भ्रातृव्यं प्रतिराध्याथैनमतियन्ति, इति ।

सूत्रे भुगित्यभिगत इति त्रीणि पदानीत्यादिना यो मन्त्र उक्तः सोऽयं प्रतिराधः । विरोधिनां राधं समृद्धिं प्रतिबध्ना[ती]ति प्रतिराधत्वम् । असुरान्प्रतिराध्य तदीयां समृद्धिं प्रतिबध्येत्यर्थः ।

प्रतिराधाख्यं शाखान्तरगतं मन्त्रं विधायातिवादाख्यं शाखान्तरगतमेव मन्त्रं विधत्ते—

अतिवादं शंसत्यतिवादेन वै देवा असुरानत्युयाथैनानत्यायंस्तथैवैतद्यजमाना अतिवादेनैवाप्रियं भ्रातृव्यमत्युयाथैनमतियन्ति तमर्धर्चशः शंसति प्रतिष्ठाया एव ॥ ३३ ॥ इति ।

वीमे देवा अक्रंसतेत्याद्यनुष्टुप्शाखान्तरपठितोऽतिवाद इत्युच्यते । विरोधिनां सत्कारमतिलङ्घ्याधिक्षेपरूपो वादोऽतिवादः । तत्सामर्थ्यसाधनत्वादयमतिवाद इत्युच्यते । अत्युद्यातिक्रम्योक्त्वाऽधिक्षिप्येत्यर्थः । अन्यत्पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (३३) [ १२० ] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ देवनीथाख्यं सप्तदशानां पदानां समूहं विधत्ते—

देवनीथं शंसति, इति ।

सूत्रकारेणाऽऽदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयाम्निति सप्तदश पदानीति योऽयं पदसमूहोऽभिहितः स देवनीथो देवलोकनयनहेतुत्वात् ।

तं प्रशंसितुमाख्यायिकामाह—

आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोकेऽस्पर्धन्त वयं पूर्व एष्यामो वयमिति ते हाङ्गिरसः पूर्वे श्वः सुत्यां स्वर्गस्य लोकस्य ददृशुस्तेऽग्निं प्रजिघ्युराङ्गिरसां वा एकोऽग्निः परेह्यादित्येभ्यः श्वःसुत्यां स्वर्गस्य लोकस्य प्रब्रूहीति ते हाऽऽदित्या अग्निमेव दृष्ट्वा सद्यःसुत्यां स्वर्गस्य लोकस्य ददृशुस्तानेत्याब्रवीच्छ्वःसुत्यां वः स्वर्गस्य लोकस्य प्रब्रूम इति ते होचुरथ वयं तुभ्यं सद्यःसुत्यां स्वर्गस्य लोकस्य प्रब्रूमस्त्वयैव वयं होत्रा स्वर्गं लोकमेष्याम इति स तथेत्युक्त्वा प्रत्युक्तः पुनराजगाम, इति ।

अदितेः पुत्रा आदित्या देवा आङ्गिरसो महर्षयः । ते द्विविधाः स्वर्गे लोके सति परस्परमस्पर्धन्त । तत्राऽऽदित्या एवमुक्तवन्तः । वयमेव पूर्वे प्रथमं प्रवृत्ताः सोमयागमनुष्ठाय स्वर्गमेष्याम इति । तथाऽङ्गिरसोऽपि वयमेव पूर्वे प्रथमं प्रवृत्ताः स्वर्गं गमिष्याम इत्यवोचन् । तदानीं तेऽङ्गिरसो महर्षयः पूर्वे प्रथमं प्रवृत्ताः सन्तः स्वर्गस्य लोकस्य निमित्तभूतां सुत्यां सोमाभिषवं श्वो ददृशुः परेद्युः करिष्याम इति निश्चितवन्तः । निश्चित्य च तेऽङ्गिरस आदित्यानां समीपे स्वकीयमग्निं प्रजिघ्युः । प्रहितवन्त इत्यर्थः । अङ्गिरसामेव महर्षीणां मध्येऽग्निनामको महर्षिरेकोऽस्ति तं प्रत्येवमुक्तवन्तः । हेऽग्ने त्वं परेहि परागच्छ । आदित्यानां समीपे गत्वा श्वःसुत्यां परेद्युरस्माभिः करिष्यमाणं सोमयागं स्वर्गस्य लोकस्य निमित्तभूतमादित्येभ्यः प्रब्रूहि । हे आदित्याः परेद्युरङ्गिरसः सुत्यां करिष्यन्ति । यूयमागत्याऽऽर्त्विज्यं कुरुतेति कथयेत्यर्थः । ते त्वादित्या

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दूरादागच्छन्तमग्निं दृष्ट्वैव तदाभिप्रायमवगत्य भविष्यतस्तदीययज्ञात्पूर्वमेव स्वर्गस्य लोकस्य साधनभूतां सद्यःसुत्यामद्यतनसोमयागं ददृशुः कर्मविशेषं निश्चितवन्तः । तदानीमग्निस्तानादित्यानेत्य प्राप्येदं वचनमब्रवीत् । हे आदित्याः स्वर्गस्य लोकस्य साधनभूतां श्वःसुत्यामाङ्गिरोभिः करिष्यमाणां वो युष्मभ्यं प्रब्रूमोऽहं प्रब्रवीमि । यूयमागत्याऽऽर्त्विज्यं कुरुतेति । ततस्त आदित्या अग्निमूचुः । अथ त्वद्वचनश्रवणानन्तरं वयं तुभ्यं ब्रूमः । स्वर्गस्य लोकस्य साधनभूता सुत्याऽस्माभिः सद्यः क्रियते । तस्मादिदानीमागतेन त्वयैव होत्राऽऽर्त्विज्यं कुर्वता सह वयं प्रथमतः स्वर्गं लोकमेष्याम इति । सोऽग्निस्तथेत्युक्त्वा प्रत्युक्तस्तैरादित्यैरुक्तं प्रतिवचनं प्राप्तः स्वकीयानामङ्गिरसां समीपमाजगाम ।

अङ्गिरसामग्नेश्च परस्परं संवादं दर्शयति--

ते होचुः प्रावोचा३ः, इति प्रावोचमिति होवाचाथो मे प्रतिप्रावोचान्निति नो हि न प्रत्यज्ञास्था३ः, इति प्रति वा अज्ञासमिति होवाच, इति ।

ते चाङ्गिरसस्तमग्निमूचुः । हेऽग्ने त्वमादित्यानामग्रे किमस्मदीयमभिप्रायं प्रावोच इति । प्लुतिः प्रश्नार्था । सोऽग्निस्तमभिप्रायं प्रावोचमित्युक्त्वा पुनरप्येतदुवाच । अथो अनन्तरं मे मम प्रतिप्रावोचंस्त आदित्याः प्रत्युत्तरमेवमुक्तवन्त इति तदीयामुक्तिमनूदितवान् । तामुक्तिं श्रुत्वा तेऽङ्गिरस एवं पप्रच्छुः हेऽग्ने नो हि न प्रत्यज्ञास्थाः । प्रतिज्ञानमार्त्विज्याङ्गीकारः(२:) । तन्निषेधोऽनङ्गीकारः । तस्यापि निषेधोऽवश्याङ्गीकारः । किं त्वदीयमार्त्विज्यं परिहृत्याङ्गीकृतवानसि । प्लुतिः प्रश्नार्था । ततोऽग्निरहं तत्प्रत्यज्ञासमेव प्रतिज्ञामङ्गीकारं कृतवानेवेत्युक्तवान् ।

अङ्गिरसामनभीष्टस्यापि स्वकीयार्त्विज्यस्याङ्गीकारे युक्तिं दर्शयति—

यशसा वा एषोऽभ्यै(ऽभ्ये)ति य आर्त्विज्येन तं यः प्रतिरुन्धे यशः स प्रतिरुन्धे तस्मान्न प्रत्यरौत्सीति, इति ।

यः पुमानार्त्विज्येन चरत्येष पुरुषो यशसैव युक्तोऽभ्येत्यभितः संचरति । आर्त्विज्यमत्यन्तं यशस्करमित्यर्थः । यः पुमान्परेण प्रार्थितमार्त्विज्यं परित्यज्य तं तदीययागं प्रतिरुन्ध्याद्यागस्य प्रतिरोधं कुर्यात्स पुमान्स्वकीयं यश एव प्रतिरुन्ध्याद्विनाशयेत् । तस्मात्कारणादहं न प्रत्यरौत्सि तदीययागस्य प्रतिषेधं न कृतवानस्मि । किंचाऽऽर्त्विज्यं मयाऽङ्गीकृतमिति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तर्हि कीदृशे विषये परिहर्तव्यमार्त्विज्यमित्याशङ्क्य परिहारयोग्यं विषयं दर्शयति—

यदि त्वस्मादपोज्जिगांसेद्यज्ञेनास्मादपोदियात् ।
यदि त्वयाज्यः स्वयमपोदितं तस्मात् ॥ ३४ ॥ इति ।

पूर्वत्राऽऽर्त्विज्यं परिहर्तुमशक्यमित्युक्तं तद्वैलक्षण्यार्थस्तुशब्दः। यदि कथंचिदस्मादार्त्विज्यादपोज्जिगांसेदपेत्योद्गन्तुमिच्छेत्तदानीं यज्ञेन स्वकीयेन निमित्तभूतेनास्मादार्त्विज्यादपोदियादपक्रम्योद्गच्छेत् । यस्मिन्दिने त्वं यज्ञं करिष्यसि तस्मिन्नेवाहमपि करिष्यामीत्युक्त्वा तदार्त्विज्यं परिहर्तुं शक्यम्। एककालीनस्वकीयानुष्ठानमेकं परिहारनिमित्तम् । निमित्तान्तरमप्युच्यते। यदि तु यदि कथंचिदयाज्यो यागार्थी पुरुषः शास्त्रनिषेधाद्यष्टुमयोग्यः स्यात्तादृशादयाज्यात्पुरुषात्स्वकीयमार्त्विज्यं स्वयमपोदितं शास्त्रेणैव निषिद्धम्। तादृशे विषये नास्त्यार्त्विज्य*परिहारदोष इत्यर्थः ॥

इति श्रीत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ ( ३४ ) [ १२१ ]।

---

योऽयं देवनीथः पूर्वमुक्तस्तस्य स्तुत्यर्थं कथाऽपि पूर्वं कियत्यपि दर्शिता। तत्कथाशेषं देवनीथप्रतिपाद्यात्रकामा( धारणा )य दर्शयति—

ते हाऽऽदित्यानङ्गिरसोऽयाजयंस्तेभ्यो याजयद्भ्य
इमां पृथिवीं पूर्णां दक्षिणानामददुस्तानियं प्रति-
गृहीताऽतपत्तान्न्यवृञ्जन्सा सिंही भूत्वा विजृम्भन्ती
जनानचरत्तस्याः शोचत्या इमे प्रदराः प्रादीर्यन्त
येऽस्या इमे प्रदराः समेव हैव ततः पुरा, इति ।

अङ्गिरसां मध्ये य एकोऽग्निः सोऽयमादित्यानां याग आर्त्विज्यमङ्गीचकार । तमङ्गीकारमनुसरन्तस्ते सर्वेऽङ्गिरसो गत्वा तानादित्यानयाजयन्। याजयद्भ्यस्तेभ्योऽङ्गिरोभ्य ऋत्विग्भ्य आदित्या इमां पृथिवीं पूर्णां चतुःसागरपरिवेष्टितामददुर्दत्तवन्तः। कदा दक्षिणा[ नां ] काल इति शेषः। मध्यंदिने हि सवने दक्षिणा नीयन्ते । तस्मिन्काले दक्षिणार्थं दत्ता चेयं पृथिवी तैर-

* पुस्तकेषु तु आर्त्विज्यदोषपरिहार इति दृश्यते तदुपक्रमानुरोधान्न समीचीनम्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्गिरोभिः प्रतिगृहीता सती तान्परिग्रहीतॄनतपत्तापयुक्तानकरोत् । तदानीमङ्गिरसस्तां पृथिवीं न्यवृञ्जन्नितरां वर्जितवन्तः । तैरङ्गिरोभिः परित्यक्ता सा पृथिवी सिंहरूपयुक्ता भूत्वा विजृम्भन्ती शिरः कम्पयन्ती वेगेन धावन्ती पुरतोऽवस्थिताञ्जनानचरदभक्षयत् । तदानीं भीत्या सर्वेषु जनेषु पलायितेषु शोचत्याः क्षुधाग्निना संतापयुक्तायास्तस्या भूमेरिमेऽस्माभिर्दृश्यमानाः प्रदरा रेखाकारा विदारणविशेषाः प्रादीर्यन्त प्रकर्षेणाभवन् । अस्या भूमेः संबन्धिनो य इमे प्रदराः सर्वैर्जनैस्तत्र तत्र दृश्यन्ते ते सर्वे परितो भूमेरुपरि विदारणेन निष्पन्नाः । ततः शोकात्पुरा भूमिः समतलैवाऽऽसीत् । इव हैवेति निपातत्रयसमूहोऽवधारणार्थः । तदानीं समतलत्वेन प्रदरो विदारणरूपश्छिद्रविशेषो न कोऽप्यासीदित्यर्थः ।

अङ्गिरसां भूमिपरित्यागप्रसङ्गेन किंचिच्छास्त्रज्ञानां वचनमुदाहरति—

तस्मादाहुर्न निवृत्तदक्षिणां प्रतिगृह्णीयान्नेन्मा शुचा विद्धा शुचा विध्यादिति, इति ।

यस्मादङ्गिरोभिर्भूरूपदक्षिणा सर्वात्मना परित्यक्ता तस्मादन्येऽपि शास्त्रज्ञा एवमाहुः । निवृत्तदक्षिणां केनापि कारणेन परित्यक्तां दक्षिणां पुनर्न प्रतिगृह्णीयात् । गोभूहिरण्यरूपा(ण्या)दिदक्षिणर्त्विग्भिः स्वीकृता सती यदि कंचिद्दोषं दृष्ट्वा परित्यज्येत तदानीं पुनरपि द्रव्यलोभेन तत्प्रतिग्रहं न कुर्यात् । केनाभिप्रायेणेति सोऽभिधीयते । इयं दक्षिणा शुचा शोकोपलक्षितेन दोषेण विद्धा सती मामपि शुचा शोकोपलक्षितदोषेण विध्यात्सैव विध्यत्विति भीतो न प्रतिगृह्णीयात् ।

प्रमादात्पुनः प्रतिग्रहे कर्तव्यं दर्शयति—

यदि त्वेनां प्रतिगृह्णीयादप्रियायैनां भ्रातृव्याय दद्यात्परा हैव भवति, इति ।

पुनःप्रतिग्रहपक्षे प्रतिगृहीतां दुष्टां दक्षिणामत्यन्तविरोधिने शत्रवे छद्मना दद्यात् । ततः शत्रुः पराभवत्येव ।

प्रासङ्गिकं परिसमाप्य दक्षिणान्तरं दर्शयन्नुपाख्यानस्य देवनीयोपयोगमाह—

अथ योऽसौ तपतीद्धँ एषोऽश्वः श्वेतो रूपं कृत्वाऽश्वाभिधान्यपिहितेनाऽऽत्मना प्रतिचक्रम इमं वो



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नयाम इति स एष देवनीथोऽनूच्यते, इति ।

अथाङ्गिरोभिः पृथिवीरूपदक्षिणायां परित्यक्तायां ततोऽनन्तरमदितिपुत्राणां यजमानानां संकल्पवशाद्योऽसौ मण्डलमध्ये सूर्यस्तपत्येष प्रतिचक्रे संमुखमाजगामेत्यर्थः । सानुनासिका प्लुतिः पूजार्था । असौ मण्डलवर्ती पुरुषस्तेजसा तपन्नपि भूमिवच्चित्तपीडातुल्यं संतापं न करोति । तस्मादस्य पूज्यत्वम् । सूर्यः केन रूपेणाऽऽगच्छतीति तद्रूपमुच्यते । लोके श्वेतोऽश्वो यादृग्वांस्तादृशं रूपं कृत्वा ततोऽश्वाभिधान्यपिहितेनाश्वस्य बन्धनार्था रज्जुरश्वाभिधानी तयाऽपिहित आच्छादित आत्माऽश्वदेहस्तेन देहेन युक्तः सन्नागत इत्यर्थः । स्वसंकल्पितं तमश्वरूपं सूर्यं दृष्ट्वा त आदित्या एवमब्रुवन् । हेऽङ्गिरसो वो युष्माकमिममश्वं नयामो दक्षिणात्वेन समर्थयाम इति यस्यां कथायां वृत्तान्तोऽभिहितः स एव देवनीथो भूत्वा वेदेनानूच्यते ।

तस्य देवनीथस्य सप्तदश पदानि तेषु प्रथमं पदमाह—

आदित्या ह जरितरङ्गिरोभ्यो दक्षिणामनयन्, इति ।

आदित्याख्या यजमानाः पुरा जरितर्जरितृभ्यः स्तोतृभ्योऽङ्गिरोभ्यो भूरूपां दक्षिणामनयन्दत्तवन्तः ।

द्वितीयं पदमनूद्य व्याचष्टे—

तां ह जरितर्न प्रत्यायन्निति न हि त इमां प्रत्यायन्, इति ।

जरितर्जरितारः स्तोतारोऽङ्गिरसस्तां ह तां तु पृथिवीरूपां दक्षिणां न प्रत्यायन्नैव प्रतिगृहीतवन्तः । अस्मिन्पदे प्रोक्तास्तेऽङ्गिरस इमां भूमिं न प्रतिगृहीतवन्त इत्यर्थः प्रसिद्ध इति हिशब्देन द्योतयति ।

तृतीयं पदमनूद्य व्याचष्टे—

तामु ह जरितः प्रत्यायन्निति प्रति हि तेऽमुमायन्, इति ।

तामु ह तामादित्यरूपां दक्षिणां जरितः प्रत्यायन्स्तोतारः प्रतिगृहीतवन्तः। अस्मिन्पदे प्रोक्तास्तेऽङ्गिरसोऽमुमादित्यं प्रत्यायन् । [*निषेधोऽर्थः प्रसिद्धः]

* चतुरस्रिहनान्तर्गतं पुस्तकेषु दृश्यते तदसंबद्धम् ।

1 क. ख. झ. ट. °र्यो यो दृ° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


द्वितीयपदार्थवैशद्याय प्रवृत्तं चतुर्थं पदमनूद्य व्याचष्टे—

तां ह जरितर्न प्रत्यगृभ्णन्निति न हि त इमां प्रत्यगृभ्णन्, इति।

पदव्याख्यानयोरर्थः स्पष्टः।

तृतीयपदार्थवैशद्याय पञ्चमं पदमनूद्य व्याचष्टे—

तामु ह जरितः प्रत्यगृभ्णन्निति प्रति हि तेऽगृभ्णन्, इति।

पदव्याख्यानयोरर्थो विस्पष्टः।

षष्ठं पदमनूद्य व्याचष्टे—

अहा नेत सन्नविचेतनानीत्येष ह वा अह्नां विचेतयिता, इति।

हेऽङ्गिरसोऽयं सूर्यः सन्युष्माकं समीपेऽस्ति तस्मादविचेतनानि विशेषप्रकाशरहितान्यहा तमोयुक्तान्यहानि नेत न गच्छत। एष आदित्योऽह्नां विचेतयिता विशेषेण प्रकाशयिता।

सप्तमपदमनूद्य व्याचष्टे—

जज्ञा नेत सन्नपुरोगवास इति दक्षिणा वै यज्ञानां पुरोगवी यथा ह वा इदमनोऽपुरोगवं रिष्यत्येवं हैव यज्ञोऽदक्षिणो रिष्यति तस्मादाहुर्दातव्यैव यज्ञे दक्षिणा भवत्यं[1]त्यल्पिकाऽपि, इति।

हे जज्ञा ज्ञानयुक्ता अङ्गिरसोऽयमादित्यः सन्भवत्समीपे वर्तते। तस्मादपुरोगवासो मार्गप्रदर्शकेन पुरोगामिना रहिता यूयं नेत न गच्छत। अस्मिन्पदे पुरोगन्त्रपेक्षा दर्शिता। यज्ञानां तु दक्षिणैव पुरोगवी। अत्र दृष्टान्तः। यथा ह वा इदमनोऽपुरोगवं बलीवर्दरहितं शकटं रिष्यति विनश्यत्येवं हैवानेनैव प्रकारेणादक्षिणो दक्षिणारहितो यज्ञो रिष्यति विनश्यति। तस्मात्कारणाद्याज्ञिका एवमाहुर्द्रव्यहीनेन यजमानेनात्यल्पिकाऽप्यत्यन्तस्वल्पाऽपि[2] दक्षिणा यज्ञे दातव्या भवति।

---

१ क. ग. घ. ङ. च. छ. झ. ट. °त्यप्यल्पि°। २ क. झ. ट. °नाप्यल्पि°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अष्टमं पदमाह—

उत श्वेत आशुपत्वा, इति ।

उतापि तु हेऽङ्गिरसो युष्माकमयं श्वेतरूपोऽश्व आदित्य आशुपत्वा शीघ्रगामी । तस्मादस्ति पुरोगन्तेत्यर्थः ।

नवमं पदमाह्—

उतो पद्याभिर्जविष्ठः, इति ।

उतो अपि च पद्याभिः पादविक्षेपैर्हेतुभिर्जविष्ठोऽयं सूर्योऽतिशयेन वेगवान् ।

दशमं पदमाह—

उतेमाशु मानं पिपर्ति, इति ।

उतापि च, ईमीदृशं मानं सत्कारमाशु पिपर्त्यसौ सूर्यः शीघ्रं पूरयति ।

एकादशं पदमाह—

आदित्या रुद्रा वसवस्त्वेळते, इति ।

हे सूर्याऽऽदित्याद्या देवगणास्त्वा त्वामीळते स्तुवन्ति ।

द्वादशं पदमनूद्य व्याचष्टे—

इदं राधः प्रतिगृभ्णीह्यङ्गिर इति प्रतिग्रहमेव तद्राधस ऐच्छन्, इति ।

हेऽङ्गिरः । जातावेकवचनम् । अङ्गिरोभिधमहर्षिजात इदमस्माभिर्दीयमानं राधः सर्वसुखसाधकमादित्यरूपं धनं प्रतिगृभ्णीहि दक्षिणारूपेण प्रतिगृहाणेति यदस्ति तेन पदेन राधसः सुखसाधनस्याऽऽदित्यस्य प्रतिग्रहमेव स्वीकारमेवाच्छन्नाङ्गिरस इच्छन्ति स्म ।

त्रयोदशं पदमाह—

इदं राधो बृहत्पृथु, इति ।

इदमस्माभिर्दीयमानं राधः सुखसाधकमादित्यरूपं बृहद्गुणैः प्रवृद्धं पृथु स्वरूपेण विस्तृतम् ।

चतुर्दशं पदमाह—

देवा ददत्वावरम्, इति ।

देवा इन्द्राद्या आ समन्ताद्वरं श्रेष्ठमादित्यरूपं ददतु प्रयच्छन्तु ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

पञ्चदशं पदमाह—

तद्वो अस्तु सुचेतनम्, इति।

हेऽङ्गिरसो वो युष्माकं तदादित्यस्वरूपं सुचेतनं सुष्ठु प्रकाशकमस्तु।

षोडशं पदमाह—

युष्मे अस्तु दिवे दिवे, इति।

हेऽङ्गिरसो दिवे दिवे प्रतिदिनं तदादित्यस्वरूपं युष्मास्वेव तिष्ठताम्।

सप्तदशं पदमनूद्य व्याचष्टे—

प्रत्येव गृभायतेति प्रत्यैवैनमेतदजग्रभैषम्, इति।

हेऽङ्गिरसः प्रतिगृभायतैवावश्यमादित्यरूपां दक्षिणां प्रतिगृह्णीतेति यत्पदमस्त्येतदेतेन पदेनाङ्गिरस एनमादित्यं दक्षिणारूपं प्रत्य[ज]ग्रभैषत्वे(मे)त्यावश्यं प्रत्यग्रहीषुः।

देवनीथाख्यस्य पदसमूहस्य सप्तदश पदानि व्याख्याय तच्छंसनप्रकारविशेषं विधत्ते—

तं वा एतं देवनीथं शंसति पदावग्राहं यथानिविदं तस्योत्तमेन पदेन प्रणौति यथा निविदः॥ ३५॥ इति।

तं वा आदित्या ह जरितरित्यादिकं प्रत्येव गृभायतेत्यन्तमेतमिदानीमुक्तं देवनीथं निविद्दृष्टान्तेन पदावग्राहं शंसति। यथा निविदः पदे पदेऽवगृह्यावगृह्य शंसनं तद्वदत्राप्यवगन्तव्यम्। यथा च निविद उत्तमेन पदेन प्रणव ओंकार एवमत्राप्यन्तिमे पदे प्रणवो द्रष्टव्यः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये नवमः खण्डः॥ ९॥ (३५) [१२२]।

---

अथ त्वामिन्द्र शर्मरिणेत्याद्यास्तिस्रोऽनुष्टुभो विधत्ते—

भूतेच्छदः शंसति, इति।

भूतं भूतिर्वै(तिं वै)रिणामैश्वर्यं छादयन्ति तिरस्कुर्वन्तीत्युदाहृता अनुष्टुभो भूतेच्छदः।

ताः प्रशंसति—

भूतेच्छद्भिर्वै देवा असुरानुपासचन्तोतेव युद्धेनोतेव

Digitized by Arya Samaj Foundation Chennai and eGangotri


मायया तेषां वै देवा असुराणां भूतेच्छद्भिरेव भूतं छादयित्वाऽथैनानत्यायंस्तथैवैतद्यजमाना भूतेच्छद्भिरेवाप्रियस्य भ्रातृव्यस्य भूतं छादयित्वाऽथैनमतियन्ति, इति।

भूतेच्छन्नामधेयाभिरनुष्टुब्भिर्देवा असुरान्युद्धेन च मायया चोपासन्न समीपे समवेताः। उतेवेति निपातसमूहः समुच्चयार्थः। छन्नयुद्धेनासुरान्निशयितुं समागता इत्यर्थः। आगत्य च देवास्तेषामसुराणां भूतमैश्वर्यमेताभिर्ऋग्भिराच्छाद्यानन्तरमेनानतिक्रम्यागच्छन्। तथैवैतद्यजमाना अपि कुर्वन्ति।

तासामृचामर्धर्चावसानं विधत्ते—

ता अर्धर्चशः शंसति प्रतिष्ठाया एव, इति।

अथ शाखान्तरे समाम्नाता यदस्या अंहु इत्याद्या ऋचो विधत्ते—

आहनस्याः शंसति, इति।

आहनस्याऽऽहननं स्त्रीपुरुषयोः परस्परसंयोगः। तद्वत्प्रजोत्पत्तिहेतुत्वाच्चोऽप्याहनस्याः।

ता ऋचः प्रशंसति—

आहनस्याद्वै रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति, इति।

आहनस्यं मिथुनमित्युक्तम्। स्पष्टमन्यत्।

ऋक्संख्यां प्रशंसति—

ता दश शंसति दशाक्षरा विराळन्नं विराळन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति, इति।

स्पष्टोऽर्थः।

षोडशौकारान्विधत्ते—

ता न्यूङ्खयत्यन्नं वै न्यूङ्खोऽन्नाद्रेतः सिच्यते रेतसः प्रजाः प्रजायन्ते प्रजातिमेव तद्दधाति, इति।

ता ऋचो न्यूङ्खयत्योकारविशिष्टाः कुर्वन्ति। न्यूङ्खस्यान्नहेतुत्वादन्नत्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

ऋगन्तरं विधत्ते—

दधिक्राव्णो अकारिषमिति दाधिक्रीं शंसति देवपवित्रं वै दधिक्रा इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेण वाचं पुनीते, इति ।

दधिक्रेतिशब्दयुक्तत्वादियं दाधिक्री । दधिक्राख्या देवता । देवपवित्रं देवानां शोधकं वाक्यम् । तथा सति व्याहनस्यां वाचं विशिष्टमैथुनयुक्तां तद्रूपभूतां वाचं यदवादीत् । इदं वा इदमिति तस्यै ग्राम्यवाक्यजातस्य विस्पष्टत्वेनाभिधानम् । तत्सर्वं ग्राम्यवाक्यजातमसत्यमपि वाचं यांचोच्चारितमनेन देवपवित्रेण पुनीते शुद्धं करोति ।

तस्यामृचि च्छन्दः प्रशंसति—

साऽनुष्टुब्भवति वाग्वा अनुष्टुप्तत्स्वेन च्छन्दसा वाचं पुनीते, इति ।

वाग्देवताया अनुष्टुप्छन्दोभिमानित्वाद्वाचोऽनुष्टुप्त्वम् । अतस्तच्छन्दो वाचः स्वकीयं तेन वाचं शोधयति ।

ऋगन्तराणि विधत्ते—

सुतासो मधुमत्तमा इति पावमानीः शंसति, इति ।

सुतास इत्याद्यास्तिस्रः शुद्धिहेतुत्वात्पावमान्यः ।

ता ऋचः प्रशंसति—

देवपवित्रं वै पावमान्य इदं वा इदं व्याहनस्यां वाचमवादीत्तद्देवपवित्रेणैव वाचं पुनीते ता अनुष्टुभो भवन्ति वाग्वा अनुष्टुप्तत्स्वेनैव च्छन्दसा वाचं पुनीते, इति ।

पूर्ववद्व्याख्येयम् ।

अन्यासामृचां तृचं विधत्ते—

अव द्रप्सो अंशुमतीमतिष्ठदित्यै-

दधिक्राव्णो अकारिषं०—४–४०–६ । सुतासो मधुमत्तमा०—९–१०१–४ ।
अव द्रप्सो अंशुमतीमतिष्ठत्०—८–९६–१३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ऐन्द्राबार्हस्पत्यं तृचं शंसति, इति ।

इन्द्राबृहस्पतिदेवताकत्वं दर्शयितुं तृचस्यान्तिममर्धर्चं पठति—

विशो अदेवीरभ्याचरन्तीर्बृहस्पतिना युजेन्द्रः ससाह इति, इति ।

अदेवीर्देवविरुद्धा अभि सर्वत आचरन्तीर्विश आसुरीः प्रजाः सर्वा युजा सहकारिणा बृहस्पतिना युक्त इन्द्रः ससाहे तिरस्कृतवानित्यर्थः ।

अस्यार्धर्चस्यार्थं प्रशंसति—

असुरविशं ह वै देवानभ्युदाचार्य आसीत्स इन्द्रो बृहस्पतिनैव युजाऽसुर्यं वर्णमभिदासन्तमपाहंस्तथैवैतद्यजमाना इन्द्राबृहस्पतिभ्यामेव युजाऽसुर्यं वर्णमभिदासन्तमपघ्नते, इति ।

असुरविशमसुरप्रजा सैन्यरूपा देवानिन्द्रादीनभिलक्ष्योदाचार्योल्लङ्घ्य... पमाचरणं कृत्वा तिरस्कृत्याऽऽसीद्देवसमीपेऽवस्थिता । तदानीं स इन्द्रो बृहस्पतिनैव युजा सहकारिणा युक्तः सन्नसुर्यमसुरसैन्यं वर्णं विचित्रपताकादियुक्तमभिदासन्तं- देवोपक्षयहेतुमपाहन्विनाशितवान् । देववद्यजमाना अपि तृचमतिपाद्याभ्यामिन्द्राबृहस्पतिभ्यामेव सहायेन युक्ता असुर्यं वर्णं पापं विचित्रमुपक्षयहेतुं पापं विनाशयन्ति ।

अथात्र प्र मंहिष्ठायेत्यादिना प्राकृतेन वैकृतानां संभूय शंसनं विचार्य पूर्वोत्तरपक्षाभ्यां निश्चिनोति—

तदाहुः संशंसे३त्षष्ठेऽहा३न्, न संशंसे३त्, इति । संशंसेदित्याहुः कथमन्येष्वहःसु संशंसति कथमत्र न संशंसेदित्यथो खल्वाहुर्नैव संशंसेत्स्वर्गो वै लोकः षष्ठमहरसमायी वै स्वर्गो लोकः कश्चिद्वै स्वर्गे लोके समेतीति स यत्संशंसेत्समानं तत्कुर्यादथ यन्न संशंसती३ तत्स्वर्गस्य लोकस्य रूपं तस्मान्न संशंसेद्यदेव न संशंसती३, इति ।

पूर्वाध्यायस्यान्तिमखण्डगतृचमाहरे स्म ।

Digitized by Arya Samaj Foundation Chennai and eGangotri

संशंसनपक्षे दोषान्तरं दर्शयति—

**एतानि वा अत्रोक्थानि नाभानेदिष्ठो वालखिल्या वृषाकपिरेवयामरुत्स यत्संशंसेदपैव स एतेषु कामं राध्नुयात्,** इति ।

नाभानेदिष्ठादीनि चत्वारि शिल्पानि यानि सन्त्येतान्येवात्र षष्ठेऽहन्युक्थानि प्रधानशस्त्राणि । तथा सति स पुमान्यदि प्राकृतेन प्रमंहिष्ठायेत्यनेन संभूय शंसेत्तदानीं स पुरुष एतेषु प्रधानशस्त्रेषु कामं फलमपराध्नुयाद्विनाशयेत् ।

एवं तर्हि प्रमंहिष्ठायेत्येतस्मिन्नैन्द्रे लभ्यः कामोऽत्र न लभ्यत इत्याशङ्क्याऽऽह—

**ऐन्द्रो वृषाकपिः सर्वाणि च्छन्दांस्यैतशप्रलापस्तत्र स काम उपाप्तो य ऐन्द्रे जागतेऽथेदमैन्द्राबार्हस्पत्यं सूक्तमैन्द्राबार्हस्पत्या परिधानीया तस्मान्न संशंसेन्न संशंसेत् ॥ ३६ ॥** इति ।

ब्राह्मणाच्छंसिना शंसितव्यो योऽयं वृषाकपिः सोऽयमैन्द्रः । ऐतशप्रलापश्च सर्वच्छन्दस्थानीयः । तथा सति प्रमंहिष्ठायेत्यादिक इन्द्रदेवताके जगतीछन्दस्के यः कामोऽस्ति स कामस्तत्र वृषाकपावैतशप्रलापे च प्राप्तो भवति । अथापि चेदमवद्रप्स इत्यादिकं सूक्तमैन्द्राबार्हस्पत्यम् । तत्रत्याऽन्तिमा परिधानीया चैन्द्राबार्हस्पत्या । तत्रोभयत्रेन्द्रनिमित्तः काम उपाप्तो भवति । तस्मात्कारणात्प्राकृतमत्र संभूय न संशंसेत् । अभ्यासोऽत्राध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रिंशाध्याये दशमः खण्डः ॥ १० ॥ ( ३६ ) [ १२३ ] ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये त्रिंशोऽध्यायः ॥ ३० ॥

इत्यैतरेयब्राह्मणे षष्ठपञ्चिका समाप्ता ॥ ६ ॥

( पञ्चिकाङ्काः—६ । अध्यायाङ्काः—३० । खण्डाङ्काः—१२३ ) ।

====



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथ सप्तमपञ्चिकारम्भः ।

## एकत्रिंशोऽध्यायः ।

वर्णितं शस्त्रजातं तु होतृहोत्रकगोचरम् ।
पशोरुपव्रतीयस्य विभागस्त्वथ कथ्यते ॥

आश्वलायनः सत्रिणां धर्मेष्वेवमाह—सुत्यासु हविरुच्छिष्टभक्षा एव सुधोंनाः करम्भः परिवापः पुराळाशः पयस्योति तेषां यद्यत्कामयेरंस्तत्तदुपावेगुल्फयेयुरिति । प्राणधारणाय यथा पर्याप्यते तथा हविःशेषस्याऽऽधिक्येन संपादनमुपगुल्फनम् । एवं बहुविधान्हविःशेषभक्षानुक्त्वा पुनरप्यन्न एवमुवाच—अपि वाऽन्यत्र सिद्धं गार्हपत्ये पुनरधिश्रित्योपव्रतयेरन्नन्यान्वा पथ्यान्भक्षानामूलफलेभ्य एतेन वर्तयेयुः पशुना चेति । अन्यत्र सिद्धं गृहे पक्वमन्नं पुनरपि गार्हपत्ये सकृदवस्थाप्योपव्रतयेरन्नुपभुञ्जीरन् । अन्यान्वा लड्डुकमण्डकादीन्भक्षान्पथ्यानजीर्णादिदोषरहितान्मूलफलपर्यन्तमिच्छया स्वीकुर्यात् । एतेन सुत्यादिनेषु संनिहितेन सवनीयपशुना च वर्तयेयुर्जीवनरूपां वृत्तिं संपादयेयुः । इत्येवं सवनीयपशुरूपस्य हविषः शेषभक्षणेन सत्रिणां जीवनमप्यभिहितम् ।

तस्मिन्पशौ कस्य को विभाग इति जिज्ञासायां तद्विभागकथनं प्रतिजानीते—

अथातः पशोर्विभक्तिस्तस्य विभागं वक्ष्यामः, इति ।

अथ होतृहोत्रकशस्त्रनिर्णयानन्तरं यतः शस्त्राद्यनुष्ठायिनां सत्रिणां जीवनोपायोऽपेक्षितोऽतः कारणात्सवनीयस्य पशोर्विभक्तिः कथ्यते । विभक्तिशब्दस्यैव व्याख्यानं तस्येत्याह ।

वक्ष्याम इति प्रतिज्ञातो यो विभागस्तं दर्शयति—

हनू सजिह्वे प्रस्तोतुः श्येनं वक्ष उद्गातुः कण्ठः
काकुद्रः प्रतिहर्तुर्दक्षिणा श्रोणिर्होतुः सव्या ब्रह्मणो
दक्षिणं सक्थि मैत्रावरुणस्य सव्यं ब्राह्मणाच्छंसिनो
दक्षिणं पार्श्वं सांसमध्वर्योः सव्यमुपगातॄणां सव्योऽसः
प्रतिप्रस्थातुर्दक्षिणं दोर्नेष्टुः सव्यं पोतुर्दक्षिण ऊरुर-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

च्छावाकस्य सव्य आग्नीध्रस्य दक्षिणो बाहुरात्रेयस्य सव्यः सदस्यस्य सदं चानूकं च गृहपतेर्दक्षिणौ पादौ गृहपतेर्व्रतप्रदस्य सव्यौ पादौ गृहपतेर्भार्यायै व्रतप्रदस्यौष्ठ एनयोः साधारणो भवति तं गृहपतिरेव प्रशिंष्याज्जाघनीं पत्नीभ्यो हरन्ति तां ब्राह्मणाय दद्युः स्कन्ध्याश्च मणिकास्तिस्रश्च कीकसा ग्रावस्तुतस्तिस्रश्चैव कीकसा अर्धं च वैकर्तस्योन्नेतुरर्धं चैव वैकर्तस्य क्लोमा च शमितुस्तद्ब्राह्मणाय दद्याद्यब्राह्मणः स्याच्छिरः सुब्रह्मण्यायै यः श्वःसुत्यां प्राह तस्याजिनमिळा सर्वेषां होतुर्वा, इति ।

जिह्वया सहितं हनूद्वयं प्रस्तोतुर्भागः । श्येनाकारं वक्ष उद्गातुर्विभागः । यः कण्ठो यश्च काकुद्रः काकुदं तदुभयं प्रतिहर्तुर्विभागः । श्रोणिरूरुमूलं तदुभयं दक्षिणसव्यरूपं क्रमेण होतुर्ब्रह्मणो विभागः । ऊर्ध्वभागः सक्थि तदुभयं क्रमेण मैत्रावरुणब्राह्मणाच्छंसिनोर्विभागः । दक्षिणांसेन युक्तं दक्षिणं पार्श्वमध्वर्योर्भागः । सव्यं पार्श्वमात्रमुपगातृणां भागः । सव्योंऽसः प्रतिप्रस्थातुर्भागः । दोर्बाहुस्तच्चोभयं क्रमेण नेष्टृपोत्रोर्भागः । ऊरुद्वयं क्रमेणाच्छावाकाग्नीध्रयोर्भागः । सक्थिशब्देनाधोभागस्याभिहितत्वादूर्ध्वभाग ऊरुशब्देन विवक्षितः । बाहुद्वयं क्रमेणाऽऽत्रेयसदस्ययोर्भागः । दोर्बाहुशब्दयोरैक्येऽप्यधोभागोर्ध्वभागाभ्यां भेदो द्रष्टव्यः । सदानूकशब्दौ पूर्वाचार्यैर्व्याख्यातौ—

" अनूकं मूत्रबस्तिः स्यात्सास्नेत्येके वदन्ति च ।
सदं तु पृष्ठवंशः स्यादेतद्गृहपतेर्द्वयम् " इति ।

यः पुमान्गृहपतेर्व्रतप्रदो भोजनदायी तस्य दक्षिणौ पादौ भागः । गृहपतेर्या भार्या तस्यै च व्रतप्रदो यः पुमांस्तस्यैव सव्यौ पादौ भागः । अत्र पुरोवर्तिनोः पादयोर्बाहुत्वेनाभिहितत्वात्पाश्चात्यावेव पादशब्देन विवक्षितौ । तत्रैकस्मिन्नपि दक्षिणे पादे द्विवचनमवयवापेक्षम् । एवमुत्तरत्रापि । योऽयमोष्ठः सोऽयमनयोर्व्रतप्रदयोः साधारणो भागो भवति । तं भागं गृहपतिरेव प्रशिंष्या-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तवायं तवायमिति विभज्य प्रदद्यात् । जाघनीं पुच्छं तां पत्नीभ्यो हरन्ति ददुः । ताश्च पत्न्यस्तां जाघनीं ब्राह्मणाय कस्मैचिद्दद्युः । स्कन्धे भवाः स्कन्ध्या मणिसदृशा मांसखण्डा मणिकाः । एकस्मिन्पार्श्वे स्थिता मांसखण्डा- स्तिस्रः कीकसाः । मणिकाः कीकसाश्चेत्युभयं ग्रावस्तुतो भागः । इतरपार्श्वे स्थिता- स्तिस्रः कीकसा वैकर्तः प्रौढो मांसखण्डस्तस्यार्धं पूर्वोक्तकीकसात्रयं चोन्नेतु- र्भागः । यत्तु वैकर्तस्येतरदर्धं यश्च हृदयपार्श्ववर्ती क्लोमशब्दाभिधो मांसखण्ड- स्तदुभयं शमितुर्भागः । अयं शमिता यद्यब्राह्मणः स्यात्तदा स्वेन स्वीकृतं तदुभयमन्यस्मै ब्राह्मणाय दद्यात् । यच्छिरोऽस्ति तत्सुब्रह्मण्यायै सुब्रह्मण्याभि- धानर्त्विजे दद्यात् । श्वःसुत्येति निगदनाम तां चाऽऽग्नीध्रो ब्रूते । तथा चाऽऽ- श्वलायन आह— ' आग्नीध्रः श्वःसुत्यां प्राह ' इति । अजिनं चर्म तदाऽऽग्नी- ध्रस्य भागः । इळा सवनीयपशोः संबन्धी । योऽयमिळाभागः स सर्वेषां साधा- रणः । यद्वा होतुरसाधारणः ।

उक्तानां पशुविभक्तीनां संख्यां प्रशंसति—

ता वा एताः षट्त्रिंशतमेकपदा यज्ञं वहन्ति षट्- त्रिंशदक्षरा वै बृहती बार्हताः स्वर्गा लोकाः प्राणां- श्चैव तत्स्वर्गांश्च लोकानाप्नुवन्ति प्राणेषु चैव तत्स्वर्गेषु च लोकेषु प्रतितिष्ठन्तो यन्ति, इति ।

ता वै हन्वादय इळान्ताः श्रुत्योक्ताः । अस्माभिरपि दृश्यमानाः षट्त्रिंशत् षट्त्रिंशत्संख्याका एकपदा हनुजिह्वेत्येवमेकैकेन पदेनाभिधीयमानाः पशुविभ- क्तयो यज्ञं वहन्ति यज्ञस्य निर्वाहं कुर्वन्ति । संख्या चेयं पूर्वाचार्यैर्व्याख्याता—

" तत्र(ऊरू) पादौ [च] तौ द्वौ द्वावन्ये द्वात्रिंशदेव हि ।
हन्वादीळान्तमुक्तं ताः षट्त्रिंशद्भक्तयः पशोः " इति ।

अतः संख्यासाम्यादियं विभक्तिर्बृहतीरूपा । स्वर्गलोकाश्च बृहत्या संपा- दयितुं शक्यत्वाद्बार्हताः । तच्चेन पशुविभागेन सत्रिणः प्राणान्स्वर्गलोकानपि माप्नुवन्ति । पञ्चवयवानां प्राणाधारत्वात् । तेन विभागेन सत्रिणोऽस्मिञ्जन्मनि प्राणेषु प्रतिष्ठिता वर्तन्ते । जन्मान्तरेषु बृहतीद्वारा स्वर्गेषु लोकेषु प्रतिष्ठिता वर्तन्ते ।

---

१ अ. हनू सजिह्वे । २ क. ख. अ. °शद्विभक्त° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पशुं प्रशंसति—

स एष स्वर्ग्यः पशुर्य एनमेवं विभजन्ति, इति ।

ये सत्रिण एनं पशुमेवमुक्तेन प्रकारेण विभक्तं कुर्वन्ति तेषां सत्रिणां स एष पशुः स्वर्ग्यः स्वर्गाय हितो भवति ।

प्रकारान्तरेण विभागं निन्दति—

अथ येऽतोऽन्यथा तद्यथा सैळगा वा पापकृतो वा पशुं विमथ्नीरंस्तादृक्तत्, इति ।

अथोक्तविभागप्रशंसानन्तरमितरनिन्दोच्यत इति शेषः । ये सत्रिणोऽतः पूर्वोक्तविभागादन्यथा प्रकारान्तरेण विभजन्त इत्यनुवर्तते । तत्तेषां निदर्शनमुच्यते । ईळाशब्देनान्नमुच्यते । तेन सह वर्तत इति सैळमन्नं बहुलो देशस्तं गच्छन्तीति सैळगा विहितकर्मानुष्ठायिनः । केवलोदरपोषणपरायणा इत्यर्थः । पापकृतः प्रतिषिद्धकर्मकारिणः । ते च द्विविधा यथा पशुं विमथ्नीरन्केवलं मांसभक्षणार्थमेव हन्युस्तादृगेव तदन्यथाविभजनं द्रष्टव्यम् ।

उक्तं पशुविभागं तद्द्रष्टृमहर्षिद्वारा प्रशंसति—

तां वा एतां पशोर्विभक्तिं श्रौत ऋषिर्देवभागो विदांचकार तामु हाप्रोच्यैवास्माल्लोकादुच्चक्रामत्, इति ।

तामेतां पूर्वोक्तां पशुविभक्तिं श्रुतनामकस्य मुनेः पुत्रो महर्षिर्देवभागाख्यो महर्षिर्विदांचकार ज्ञातवान् । तामु ह तामेव स्वेन ज्ञातां विभक्तिमप्रोच्यैव रहस्यविद्येति मत्वा कस्मैचिदप्यकथयित्वैवास्माल्लोकादुच्चक्रामदुत्क्रान्तवान् । मृत इत्यर्थः ।

कथं तर्हि तत्संप्रदाय इत्याशङ्क्याऽऽह—

तामु ह गिरिजाय बाभ्रव्यायामनुष्यः प्रोवाच ततो हैनामेतदर्वाङ्मनुष्या अधीयतेऽधीयते ॥ १ ॥ इति ।

तामु ह तामेव पशुविभक्तिममनुष्यो मनुष्यव्यतिरिक्तः कश्चिद्गन्धर्वादिर्बाभ्रव्याय बभ्रोरपत्याय गिरिजनामकाय महर्षये प्रोवाच । एतदर्वाङ्मनुष्या एतस्माद्गिरिजाख्यान्महर्षेरर्वाचीनाः सर्वे मनुष्यास्ततस्तस्य गिरिजाख्यस्य

१ क. ग. घ. ङ. च. छ. झ. ञ. सेलगा । २ क. ञ. इलाश° । ३ क. ञ. सेलम° । ४ क. ख. झ. ञ. °प्रमथ्न° । ५ क. ञ. सेलगा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



सकाशादेनां पशुविभक्तिमधीयते। पदाभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकत्रिंशाध्याये प्रथमः खण्डः॥ १ ॥ [ १२४ ]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये एकत्रिंशोऽध्यायः॥ ३१ ॥

---

अथ द्वात्रिंशोऽध्यायः।

---

सत्रिणां वर्णितं कार्यं प्रायश्चित्तं ब्रवीत्यथ॥
चोद्योत्तरप्रकारेण सुस्पष्टमिति गृह्यताम्॥

तत्र प्रथमचोद्योत्तरे दर्शयति--

तदाहुर्य आहिताग्निरुपवसथे म्रियेत कथमस्य यज्ञः स्यादिति नैनं याजयेदित्याहुरनभिप्राप्तो हि यज्ञं भवतीति, इति।

तत्र यज्ञवैकल्यविषये केचिद्ब्रह्मवादिनः पृच्छन्ति। यः पुमानाहिताग्निः सन्नुपवसथाख्ये सुत्यादिनात्पूर्वदिने म्रियेतास्य यज्ञः कथं प्रवर्तत इति प्रश्नः। तस्येदमुत्तरमेनं मृतं न याजयेदित्यभिज्ञा आहुः। तत्रेयमुपपत्तिः। सुत्याया अनुपक्रान्तत्वादयं यज्ञमभिप्राप्त एव भवति। तस्माद्यागो न युक्तः।

द्वितीयप्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निराधिश्रितेऽग्निहोत्रे सांनाय्ये वा हविःषु वा म्रियेत का तत्र प्रायश्चित्तिरित्यत्रैवैनान्यनुपर्यादध्याद्यथा सर्वाणि संदह्येरन्सा तत्र प्रायश्चित्तिः, इति।

अग्निहोत्रे तत्साधनभूते पयसि कार्यार्थं वह्नावधिश्रिते सति तथा सांनाय्ये दर्शपूर्णमासार्थे क्षीरेऽधिश्रिते सति तथा हविःषु पुरोडाशादिष्वधिश्रितेषु यजमानस्य मरणे किं प्रायश्चित्तमिति प्रश्नः। प्रायो नाशस्तस्य चित्तं समाधानम्। अत्रैव यजमानदहनदेश एवैनानि क्षीरादीन्यनुपर्यादध्यात्। यजमानमनु परितः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


क्षिपेत् । येन प्रकारेण सर्वाणि तानि यजमानेन संभूय दह्येरंस्तथा प्रक्षिपेत् । सा तादृशी क्रिया तत्र दोषे प्रायश्चित्तिर्भवति ।

तृतीये प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरासन्नेषु हविःषु म्रियेत का तत्र प्रायश्चित्तिरिति याभ्य एव तानि देवताभ्यो हवींषि गृहीतानि भवन्ति ताभ्यः स्वाहेत्येवैनान्याहवनीये सर्वहुन्ति जुहुयात्सा तत्र प्रायश्चित्तिः, इति ।

हविःषु पुरोडाशादिषु वेद्यामासन्नेषु यजमानमरणे याभ्यो देवताभ्यः पूर्वं तानि हवींष्युपक्रान्तानि ताभ्यस्तद्देवतानामानि चतुर्थ्यन्तान्युच्चार्य स्वाहेत्यनेनैव मन्त्रेणैतानि हवींषि सर्वहुन्ति निःशेषेण यथा सर्वाणि हुतानि भवन्ति तथाऽऽहवनीये जुहुयात् ।

चतुर्थे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निः प्रवसन्म्रियेत कथमस्याग्निहोत्रं स्यादित्यभिवान्यवत्साया: पयसा जुहुयादन्यदिवैतत्पयो यदभिवान्यवत्साया अन्यदिवैतदग्निहोत्रं यत्प्रेतस्य, इति ।

अग्निहोत्रं भार्यासमीपे [सं]स्थाप्य ग्रामान्तरे प्रवसन्गतः सन्यदि म्रियेत तदानीं स्वगृहे पुत्रादिरभिवान्यवत्सायाः पयसाऽग्निहोत्रं जुहुयात् । वा गतिगन्धनयोरिति धातोरभिपूर्वस्याभिवा इति रूपम् । अन्यश्चासौ वत्सश्चान्यवत्सः । अभिप्राप्तोऽन्यवत्सो यस्या गोः सेयमभिवान्यवत्सा । पोषणादिप्रकारेणोपस्थितेत्यर्थः । एतादृश्या अभिवान्यवत्साया यत्पयोऽस्त्येतदन्यादिव दैनंदिनाग्निहोत्रीपयसः सकाशादन्यादिवैतद्द्रव्यम् । प्रेतस्यापि यदग्निहोत्रमेतदन्यादिवैतमित्याग्निहोत्रादन्यदेव कर्मान्तरं तत्समानधर्मकं पुत्रादिकर्तृकम् । अतः प्रेतस्याधिकाराभावेऽपि पुत्रादेरधिकारसद्भावादनुष्ठानमुपपद्यत इत्यर्थः ।

तत्रैव पक्षान्तरमाह—

अपि वा यत एव कुतश्च पयसा जुहुयुः, इति ।

अभिवान्यवत्साया इति नियमो नास्ति । किंतु यतः कुतो यस्याः कस्याश्चिद्गोः पयसा पुत्रादयो जुहुयुरिति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुनरपि पक्षान्तरमाह—

अथाप्याहुरेवमेवैनानजस्त्रानजुह्वत इन्धीरन्ना शरीराणामाहर्तोरिति, इति ।

अपि चान्ये याज्ञिकाः पक्षान्तरमाहुः । देशान्तरे मृतस्य प्रेतस्य शरीराणामस्थ्यादिप्रेतावयवानामाहर्तोराहरणपर्यन्तमेनानाहवनीयादींस्त्रीनग्नीनजस्त्रानुपक्षमरहितानजुह्वतो होमरहितानेवमेवासमाप्तेनैव प्रकारेणेन्धीरन्प्रज्वालयेयुरिति। होमाभावेऽपि त्रयोऽप्यग्नयो[यथा] नोपशाम्यन्ति तथा प्रेतास्थिसमानयनपर्यन्तं प्रज्वालयेदित्यर्थः ।

प्रेतास्थिविनाशे किं कर्तव्यमित्याशङ्क्याऽऽह—

यदि शरीराणि न विद्येरन्पर्णशरः षष्टिस्त्रीणि च शतान्याहृत्य तेषां पुरुषरूपकमिव कृत्वा तस्मिंस्तामावृतं कुर्युरथैनाञ्छरीरैराहृतैः संस्पर्श्योद्वासयेयुः, इति ।

यदि कथंचिच्छरीराण्यस्थ्यादीनि न विद्येरन्विनश्येयुस्तदा पर्णशराः पलाशवृक्षस्य च्छिन्नान्वृन्तान्षष्ट्युत्तरशतत्रयसंख्याकानाहृत्य तेषां वृन्तानां संबन्धि पुरुषरूपकमिव कृत्वा मनुष्यसदृशं किंचिद्रूपं निर्माय तस्मिन् रूपे तामावृतं प्रेतशरीरोचितं प्रकारं दहनपिण्डदानादिरूपं कुर्युः । अथ तदानीं कृत्रिमरूपदहनकाल एनानाहवनीयाद्यग्नीञ्श्मशाने नीत्वा समाहृतैस्तैः पलाशवृन्तानिर्मितैः शरीरावयवैः संस्पर्श्य संस्पष्टं कृत्वोद्वासयेयुः ।

पुरुषरूपनिर्माणप्रकारं दर्शयति—

अध्यर्धशतं काये सक्थिनी द्विपञ्चाशे च विंशे चोरू द्विपञ्चविंशे शेषं तु शिरस्युपरि दध्यात्, इति ।

आनीतानां पलाशवृन्तानामध्यर्धशतमधिकेनार्धेन पञ्चाशद्रूपेण युक्तं शतं काये मध्यशरीरस्थाने दध्यात्परितः प्रक्षिपेत् । पञ्चाशत्संख्याकानां वृन्तानां समूहरूपं पञ्चाशं द्विसंख्याके [ पञ्चाशे ] द्विपञ्चाशे विंशतिसंख्याकानां समूहरूपं विंशं द्विपञ्चाशे च विंशे च सक्थिनी दध्यात् । चत्वारिंशदधिकेन शतेन सक्थिद्वयं निष्पादयेदित्यर्थः । पञ्चविंशतिसंख्याकानां समूहरूपं पञ्चविंशं द्विसंख्याके पञ्चविंशे ते ऊरू दध्यात्पञ्चाशत्संख्याकैर्वृन्तैरूरुद्वयं निष्पादयेदित्यर्थः । एवं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नवत्य(चत्वारिंशद)धिकशतद्व(त्र)ये गते सति शेषं सप्त(विंश)तिसंख्याकं शिर-स्युपरि प्रक्षिपेत् ।

प्रवसतो मृतस्याग्निहोत्रवैकल्यप्रायश्चित्तं निगमयति—

सा तत्र प्रायश्चित्तिः ॥ २ ॥ इति ।

सा प्रोक्तक्रिया तत्र वैकल्ये प्रायश्चित्तिः समाधानकरणम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये द्वात्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ ( २ ) [ १२५ ] ।

---

पञ्चमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमानोपविशेत्का तत्र प्रायश्चित्तिरिति तामभिमन्त्रयेत, इति ।

अग्निहोत्रहविरर्थं दोग्धव्या धेनुरग्निहोत्री । यस्याग्निहोत्रिणः संबन्धिनी सा धेनुरुपावसृष्टा वत्सेन संयोजिता दुह्यमाना सती दोहनस्य विघ्नं कृत्वा यद्युप-विशेत्तदानीं वक्ष्यमाणेन मन्त्रेण तामभिमन्त्रयेत । यद्यप्येतत्पञ्चविंशाध्यायस्य द्वितीयखण्डे वर्णितं तथाऽपि तत्र बुद्धिस्थसंगतिः । अत्र तु प्रायश्चित्तप्राधान्ये-नोपक्रमात्साक्षादेव संगतमित्यभिप्रेत्य पुनरप्याम्नातम् ।

तत्रोत्तरशेषं दर्शयति—

यस्माद्भीषा निषीदसि ततो नो अभयं कृधि । प-शून्नः सर्वान्गोपाय नमो रुद्राय मीढ्ळुष इति ता-मुत्थापयेदुदस्थाद्देव्यदितिरायुर्यज्ञपतावधात् । इन्द्रा-य कृण्वती भागं मित्राय वरुणाय चेत्यथास्या उदपात्रमूधसि च मुखे चोपगृह्णीयादथैनां ब्राह्म-णाय दद्यात्सा तत्र प्रायश्चित्तिः, इति ।

एतत्सर्वं पूर्वत्रैव व्याख्यातम् ।

षष्ठे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना वाश्येत का तत्र प्रायश्चित्तिरित्यशनायां ह वा एषा यजमा-नस्य प्रतिख्याय वाश्यते तामन्नमप्यादयेच्छान्त्यै



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शान्तिर्वा अन्नं सूयवसाद्भगवती हि भूयादिति सा तत्र प्रायश्चित्तिः, इति ।

एतदपि पूर्वत्र व्याख्यातम् ।

सप्तमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्र्युपावसृष्टा दुह्यमाना स्पन्देत का तत्र प्रायश्चित्तिरिति सा यत्तत्र स्कन्दयेत्तदभिमृश्य जपेद्यदद्य दुग्धं पृथिवीमसृप्त यदोषधीरत्यसृपद्यदापः । पयो गृहेषु पयो अघ्न्यायां पयो वत्सेषु पयो अस्तु तन्मयीति तत्र यत्परिशिष्टं स्यात्तेन जुहुयाद्यद्यलं होमाय स्याद्यद्यु वै सर्वं सिक्तं स्यादथान्यामाहूय तां दुग्ध्वा तेन जुहुयादा त्वेव श्रद्धायै होतव्यं सा तत्र प्रायश्चित्तिः ॥ ३ ॥ इति ।

एतदपि पूर्वत्र व्याख्यातम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ ( ३ ) [१२६] ।

---

अष्टमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सायं दुग्धं सांनाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरिति प्रातर्दुग्धं द्वैधं कृत्वा तस्यान्यतरां भक्तिमातच्य तेन यजेत सा तत्र प्रायश्चित्तिः, इति ।

दर्शपूर्णमासयोर्दध्यर्थं सायंकाले दुग्धं पयः सांनाय्यरूपं केशकीटादिभिर्दुष्येद्यः कश्चिदपहरेद्वा तदानीं परेद्युः प्रातर्दुग्धं पयो भागद्वयं कृत्वा तत्रैकभागमातच्य तेन संस्कृत्य दधिस्थानीयेन तेन यजेत ।

१ ख. °त्रैकं भा° । /

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नवमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य प्रातर्दुग्धं सांनाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वा पुरोळाशं तस्य स्थाने निरुप्य तेन यजेत सा तत्र प्रायश्चित्तिः, इति ।

प्रातर्दुग्धरूपस्य सांनाय्यस्य दोषापहाराभ्यां वैकल्ये सति तस्य दुग्धस्य स्थाने इन्द्रदेवताकं महेन्द्रदेवताकं वा पुरोडाशं कृत्वा तेन यजेत । इन्द्रयाजिमहेन्द्रयाजिभेदाद्देवताव्यवस्था ।

दशमे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्वमेव सांनाय्यं दुष्येद्वाऽपहरेद्वा का तत्र प्रायश्चित्तिरित्यैन्द्रं वा माहेन्द्रं वेति समानं सा तत्र प्रायश्चित्तिः, इति ।

सायं दुग्धं प्रातर्दुग्धं चेत्युभयं सर्वम् ।

एकादशे दश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्वाण्येव हवींषि दुष्येयुर्वाऽपहरेयुर्वा का तत्र प्रायश्चित्तिरित्याज्यस्यैनानि यथादेवतं परिकल्प्य तयाऽऽज्यहविषेष्ट्या यजेतातोऽन्यामिष्टिमनुल्बणां तन्वीत यज्ञो यज्ञस्य प्रायश्चित्तिः ॥ ४ ॥ इति ।

पुरोडाशदधिपयोरूपाणि हवींषि सर्वाणीत्युच्यन्ते । आज्यस्य संबन्धीन्येतानि त्रीणि हवींषि तत्तद्देवतामनतिक्रम्य तदनुसारेण परिकल्प्याऽऽज्यहविर्युक्तया तयेष्ट्या यजेत । इष्ट्वा च तत्तदूर्ध्वमन्यामिष्टिमनुल्बणामन्यूनानधिकां यथाशास्त्रं तन्वीत विस्तारयेत् । यथाशास्त्रमनुष्ठितो यज्ञः पूर्वस्य विकलस्य यज्ञस्य प्रायश्चित्तिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (४) [ १२७ ] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



द्वादशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत का तत्र प्रायश्चित्तिरिति सर्वमेवैनत्स्रुच्यभिपर्यासिच्य प्राङुदेत्याऽऽहवनीये हैतां समिधमभ्यादधात्यथोत्तरत आहवनीयस्योष्णं भस्म निरूह्य जुहुयान्मनसा वा प्राजापत्यया वर्चा तद्धुतं चाहुतं च स यद्येकस्मिन्नुन्नीते यदि द्वयोरेष एव कल्पस्तच्चेद्व्यपनयितुं शक्नुयान्निःषिच्यैतद्दुष्टमदुष्टमभिपर्यासिच्य तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिः, इति।

अग्निहोत्रार्थं पयो गार्हपत्ये पाकार्थं यदधिश्रितं तद्यदि किंचिदमेध्यं पा... नर्हं केशकीटादिकमापद्येत प्राप्नुयात्तदानीमेतद्धविः सर्वमप्यग्निहोत्रहवण्यां स्रुचि साकल्येन सिक्त्वा प्राङ्मुख उदेत्योत्थायाऽऽहवनीयं प्रति गत्वा तस्मि... न्नेतां नित्यां समिधमादध्यात् । अथानन्तरमाहवनीयस्योत्तरभागे किंचिदुष्णं भस्म ततो निःसार्य तस्मिन्मनसा नित्याग्निहोत्रमन्त्रमनुस्मृत्य वाचा वा प्रजापते न त्वदेतानीति मन्त्रमुच्चार्य जुहुयात् । तदेतद्भस्मन उष्णत्वाद्धुतं भवति । अग्नेराहित्यादहुतमपि भवति । न केवलमधिश्रित एवामेध्यपात एतत्प्रायश्चित्तं किं तर्हि चतुरुन्नयनावस्थायां यद्येकस्मिन्नुन्नीते यदि वा द्वयोरुन्नीतयोरमेध्यपातस्तदानीमेष एव कल्पः प्रकारः । उन्नयनं नामाग्निहोत्रहवण्यामासेचनम् । तत्केशकीटादिदूषितमग्निहोत्रहवण्यामुन्नीतं यद्यपनेतुं शक्नुयात्तदानीमेतद्दुष्टं निःषिच्य निःसार्य स्थाल्यामवस्थितमदुष्टं क्षीरमग्निहोत्रहवण्यामभिपर्यासिच्य यथोन्नीती स्यात्, उन्नीती येन प्रकारेण भवति तेन प्रकारेण जुहुयात् । अदुष्टं द्रव्यान्तरमधिश्रयणादिना संस्कृत्य जुहुयादित्यर्थः ।

त्रयोदशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्रमधिश्रितं स्कन्दति वा विष्यन्दते वा का तत्र प्रायश्चित्तिरिति तदद्भिरुपानिनयेच्छान्त्यै शान्तिर्वा आपोऽथैनद्दक्षिणेन पाणिनाऽभिमृश्य जपति, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अग्निहोत्रद्रव्यं गार्हपत्ये पाकार्थमधिश्रितं सत्कदाचित्स्कन्दति स्खलति । क्षीरबिन्दुरधः पततीत्यर्थः । विष्यन्दते विशेषेण स्यन्दनं दाहाधिक्येन स्थालीमुखस्योपर्युद्गमनम् । तत्स्कन्नं विष्यन्दितं वा द्रव्यं दक्षिणेन पाणिना स्पृष्ट्वा वक्ष्यमाणं मन्त्रं जपेत् ।

तं दर्शयति—

दिवं तृतीयं देवान्यज्ञोऽगात्ततो मा द्रविणमाष्टान्तरिक्षं तृतीयं पितॄन्यज्ञोऽगात्ततो मा द्रविणमाष्ट पृथिवीं तृतीयं मनुष्यान्यज्ञोऽगात्ततो मा द्रविणमाष्ट, इति ।

अस्य स्कन्नस्य विष्यन्दितस्य वा पयसस्तृतीयमंशस्वरूपं दिवं स्वर्गलोकमगात्प्राप्नोतु । तेन यज्ञोऽपि देवान्प्राप्नोतु । प्रापणाद्वैकल्यपरिहारे सति मामग्निहोत्रिणं द्रविणमाष्ट धनं प्राप्नोतु । तथैवापरं तृतीयं द्रव्यांशस्वरूपमन्तरिक्षमगात् । तेन यज्ञोऽपि पितॄन्प्राप्नोतु । ततः प्रापणान्मां धनं प्राप्नोतु । पुनरप्यपरं तृतीयं द्रव्यांशस्वरूपं पृथिवीमगात् । तेन यज्ञोऽपि मनुष्यानगात् । ततस्तदुभयप्रापणान्मां द्रविणं धनमाष्ट प्राप्नोतु ।

मन्त्रान्तरजपं विधत्ते—

ययोरोजसा स्कभिता रजांसीति वैष्णुवारुणीमृचं जपति विष्णुर्वै यज्ञस्य दुरिष्टं पाति वरुणः स्विष्टं तयोरुभयोरेव शान्त्यै, इति ।

ययोरोजसेत्याद्यृक्सूत्रे पठिता । तस्याश्चतुर्थपादे विष्णू अगन्वरुणा पूर्वहूताविति श्रुतत्वादियं विष्णुवरुणदेवताका । यज्ञस्य यद्दुरिष्टमङ्गवैकल्यं तच्छमयित्वा विष्णुः पाति । यज्ञस्य यत्स्विष्टं यथाशास्त्रमनुष्ठितमङ्गं तद्वरुणः पाति । फलप्रतिबन्धनिवारणं तत्प्रतिपालनम् । तस्मादयं जपस्तयोरुभयोर्दुरिष्टस्विष्टयोर्यथोक्तप्रकारेण शान्त्यर्थं संपद्यते ।

उत्तरवाक्यमुपसंहरति—

सा तत्र प्रायश्चित्तिः, इति ।

चतुर्दशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्निहोत्रमधिश्रितं प्राङुदायन्स्खलते वाऽ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पि वा भ्रंशते का तत्र प्रायश्चित्तिरिति स यद्युपानिवर्तयेत्स्वर्गाल्लोकाद्यजमानमावर्तयेदत्रैवास्मा उपविष्टायैतमग्निहोत्रपरीशेषमाहरेयुस्तस्य यथोन्नीती स्यात्तथा जुहुयात्सा तत्र प्रायश्चित्तिः, इति ।

अग्निहोत्रद्रव्यं गार्हपत्येऽधिश्रितं पाकादूर्ध्वमादाय प्राङ्मुख आहवनीयं प्रत्युदायन्नुद्गच्छन्नध्वर्युर्यदा भवति तदानीं तद्द्रव्यं स्खलते यद्वा भ्रंशते। किंचित्पतनं स्खलनम्। साकल्येन द्रव्यपतनं भ्रंशः। पुनरप्यग्निहोत्रस्थाल्या द्रव्यं ग्रहीतुं सोऽध्वर्युर्यदि पश्चिमामुखो निवृत्तो भवेत्तदानीं स्वर्गप्राप्तं यजमानं तस्माल्लोकादावर्तयेत्। अतो निवृत्तिमकृत्वा स्खलनभ्रंशदेश एवोपविष्टायास्मा अध्वर्यवेऽत्रैव स्थालीगतमग्निहोत्रद्रव्यशेषमन्ये पुरुषा आहरेयुः। तस्य द्रव्यस्य स्रौवेणाध्वर्युर्यथोन्नीती स्यात्तथा जुहुयात्। उन्नीतमुन्नयनम्। स्थालीगतस्य द्रव्यस्याग्निहोत्रहवण्यां चतुर्वारं प्रक्षेपश्चतुरुन्नयतीति श्रुतत्वात्। उन्नयनादिसंस्कारपूर्वकं जुहुयादित्यर्थः।

पञ्चदशे प्रश्नोत्तरे दर्शयति—

तदाहुरथ यदि स्रुग्भिद्येत का तत्र प्रायश्चित्तिरित्यन्यां स्रुचमाहृत्य जुहुयादथैनां स्रुचं भिन्नामाहवनीयेऽभ्यादध्यात्प्राग्दण्डां प्रत्यक्पुष्करां सा तत्र प्रायश्चित्तिः, इति ।

स्रुगग्निहोत्रहवणी। तद्भेदे स्रुगन्तरेण हुत्वा भिन्नां स्रुचमाहवनीये प्रक्षिपेत्। तदानीं तदीयो दण्डः प्राच्यामवस्थितस्तदीयं पुष्करं बिलं प्रतीच्यामवस्थितं यथा भवति तथा प्रक्षिपेत्।

षोडशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याऽऽहवनीये ह्यग्निर्विद्येताथ गार्हपत्य उपशाम्येत्का तत्र प्रायश्चित्तिरिति स यदि प्राञ्चमुद्धरेत्प्राऽऽयतनाच्च्यवेत यत्प्रत्यञ्चं यजमानमसुरवयज्ञं तन्वीत यन्मन्थेद्भ्रातृव्यं यजमा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



नस्य जनयेद्यदनुगमयेत्प्राणो यजमानं जह्यात्स-र्वमेवैनं सह भस्मानं समोप्य गार्हपत्यायतने निधा-याथ प्राञ्चमाहवनीयमुद्धरेत्सा तत्र प्रायश्चित्तिः ॥ ५ ॥ इति ।

प्रतिदिनमाहवनीयग्निर्होमोर्ध्वमुपशाम्यति । गार्हपत्याग्निस्तु सर्वदा धार्यते । तस्माद्गार्हपत्यात्तत्तद्धोमकाल आहवनीयार्थमग्निं विहरेदित्येषोऽनुष्ठानक्रमः । एवं सति यदि कदाचिदाहवनीयस्य स्थानेऽग्निरनुपशान्तो विद्येत तदानीं गार्हपत्यश्चोपशाम्येत् । तत्र तस्य वैकल्यस्य परिहाराय पक्षाः पञ्चविधाः संभवन्ति । विद्यमानमाहवनीयं गार्हपत्यतया संभाव्य ततोऽपि पूर्वदेश आहवनीयं कर्तुं तस्मात्पूर्वसिद्धाहवनीयात्प्राञ्चमग्निमुद्धरेदिति प्रथमः पक्षः । तस्मिन्पक्षे यजमान आयतनात्स्वकीयस्थानात्प्रच्यवेताऽऽहवनीयस्थानात्प्रच्युतत्वात् । अथ गार्हपत्यार्थं पूर्वसिद्धादाहवनीयात्प्रत्यञ्चमग्निमुद्धरेदिति द्वितीयः पक्षः । तस्मिन्द्वितीयपक्षे यज्ञ एषोऽसुरयज्ञसमानः स्यात् । असुरयज्ञश्च शाखान्तरे तानसुरान्प्रकृत्यैवमाम्नायते—'त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम्' इति । तदीयदोषोऽपि तत्रैवाऽऽम्नातः-'भद्रा भूत्वा परा भविष्यन्ति' इति । गार्हपत्यार्थमग्निमथनं कर्तव्यमिति तृतीयः पक्षः । तदानीं विद्यमान आहवनीये तद्विरोधिनोऽग्न्यन्तरस्य मथनाद्यजमानस्य शत्रुमुत्पादयेत् । पुनराधानं कर्तुं विद्यमानमाहवनीयमनुगमयेदुपशमयेदिति चतुर्थः पक्षः । तस्मिन्पक्षे विद्यमानस्य विनाशनात्प्राणो यजमानं परित्यजेत् । आहवनीयगतं भस्मसहितं सर्वमप्यग्निं कस्मिंश्चित्पात्रे प्रक्षिप्य नीत्वा गार्हपत्यस्थाने प्रक्षिप्यानन्तरं ततो गार्हपत्यात्प्राञ्चमाहवनीयमुद्धरेदिति पञ्चमः पक्षः । अस्मिन्पक्षे दोषाभावात्सैव प्रायश्चित्तिर्भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( ५ ) [ १२८ ] ।

---

सप्तदशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नावग्निमुद्धरेयुः का तत्र प्रायश्चि-त्तिरिति स यद्यनुपश्येदुदूह्य पूर्वमपरं निद-

---

१ क. ख. ग. °क्षः । अस्मि° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ध्यायदुद्य नानुपश्येत्सोऽग्नयेऽग्निवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निनाऽग्निः समिध्यते त्वं ह्यग्ने अग्निनेत्याहुतिं वाऽऽहवनीये जुहुयादग्नयेऽग्निवते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

सायंप्रातराहवनीयेऽग्नौ स्थित एव सति पुनरपि गार्हपत्याग्निं य उद्धरे-त्तदानीमुद्धृतस्याग्नेः प्रक्षेपात्पूर्वमेव विद्यमानस्याग्नेर्दर्शने तं पूर्वं विद्यमान-मग्निमुद्धृत्य तस्मादाहवनीयस्थानादुद्धृत्य तस्मिन्स्थाने पुनरपरमिदानीमानीतम-निदध्यात् । यद्यदि तु * विद्यमानं नानुपश्येत्तदानीमानीतमग्निं तत्र प्र-पश्चादग्निद्वयमवगत्याग्निवतेऽग्नये देवतायै पुरोळाशं निरुप्य तस्यैते याज्या-वाक्ये कुर्यात् । अग्निनाऽग्निरिति पुरोनुवाक्या । त्वं ह्यग्ने अग्निनेति याज्या । सोऽयमेकः पक्षः । दर्विहोमवद्याज्यानुवाक्ये परित्यज्याग्नयेऽग्निवते स्वाहेति मन्त्रेणाऽऽहवनीय आज्यं जुहुयादिति द्वितीयः पक्षः ।

अष्टादशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य गार्हपत्याहवनीयौ मिथः संसृज्येयातां का तत्र प्रायश्चित्तिरिति सोऽग्नये वीतयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्न आयाहि वीतये यो अग्निं देववीतय इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये वीतये स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

अग्न्युद्धरणादूर्ध्वं व्यवस्थितयोराहवनीयगार्हपत्ययोः सतोर्यदि गार्हपत्य-गतोऽङ्गार आहवनीये प्रमादात्पतेदाहवनीयगतो वा गार्हपत्ये पतेत्सोऽयं मिथः संसर्गः । तत्र प्रायश्चित्तार्थस्य पुरोडाशस्य वीतिगुणयुक्तोऽग्निर्देवता । अन्य-त्पूर्ववद्व्याख्येयम् ।

---

अग्निनाऽग्निः समिध्यते०—१-१२-६ । त्वं ह्यग्ने अग्निना०—८-४३-१४ ।
अग्न आयाहि वीतये०—६-१६-१० । यो अग्निं देववीतये०—१-१२-९ ।

---

* मूलस्थयेत्यव्ययार्थप्रदर्शकस्तुशब्दः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एकोनविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्वं एवाग्नयो मिथः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये विविचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये स्वर्णवस्तोरुषसामरोचि त्वामग्ने मानुषीरीळते विश इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये विविचये स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहवनीयगार्हपत्यदक्षिणाग्नीनां सर्वेषां परस्परसंसर्गे सति विविचिगुणयुक्तोऽग्निः पुरोडाशदेवता । अन्यत्पूर्ववद्व्याख्येयम् ।

विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयोऽन्यैरग्निभिः संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये क्षामवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अक्रन्ददग्निस्तनयन्निव द्यौरधा यथा नः पितरः परास इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये क्षामवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ६ ॥ इति ।

यस्याग्निहोत्रिणः संबन्धिन आहवनीयाद्यग्नयोऽन्यदीयैराहवनीयादिभिर्लौकिकाग्निभिर्वा संसृज्येरंस्तस्य प्रायश्चित्तीये पुरोडाशे क्षामवद्गुणयुक्तोऽग्निर्देवता । अन्यत्पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ६ ) [१२९] ।

---

एकविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयो ग्राम्येणाग्निना संदह्येरन्का तत्र

---

स्वर्णवस्तोरुषसामरोचि०—७—१०—२ । त्वामग्ने मानुषीरीळते विशः०—१—८—३ । अक्रन्ददग्निस्तनयन्निव द्यौः०—१०—४५—४ । अधा यथा नः पितरः परासः०—४—२—१६ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रायश्चित्तिरिति सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये कुवित्सु नो गविष्टये मा नो अस्मिन्महाधन इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः, इति।

ग्राम्योऽग्निर्महानसादिगतः। स कदाचित्प्रमादेन प्रवृद्धो ग्रामगतानि गृहाणि दहन्नग्निहोत्रशालागतानाहवनीयादीनग्नीन्सम्यग्दहति तदानीं प्रायश्चित्तस्य पुरोडाशस्य संवर्गगुणयुक्तोऽग्निर्देवता। अन्यत्पूर्ववत्।

द्वात्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयो दिव्येनाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नयेऽप्सुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अप्स्वग्ने सधिष्टव मयो दधे मेधिरः पूतदक्ष इत्याहुतिं वाऽऽहवनीये जुहुयादग्नयेऽप्सुमते स्वाहेति सा तत्र प्रायश्चित्तिः, इति।

दिव्याग्निर्वैद्युतः। अशनिपाते सति तदीयेनाग्निनाऽऽहवनीयादीनां संसर्गे प्रायश्चित्तपुरोडाशस्याप्सुमानग्निर्देवता। अन्यत्पूर्ववत्।

त्रयोविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नयः शवाग्निना संसृज्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये शुचयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निः शुचिव्रततम उदग्ने शुचयस्तवेत्याहुतिं वाऽऽहवनीये जुहुयादग्नये शुचये स्वाहेति सा तत्र प्रायश्चित्तिः, इति।

---

कुवित्सु नो गविष्टये०—८–७५–११। मा नो अस्मिन्महाधने०—८–७५–१२। अप्स्वग्ने सधिष्टव०—८–४३–९. मयो दधे मेधिरः पूतदक्षः०—३–१–३। अग्निः शुचिव्रततमः०—८–४४–२१! उदग्ने शुचयस्तव०—८–४४–१७।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रेतदहनाय प्रवृत्तोऽग्निः शवाग्निस्तत्संसर्गे पुरोडाशस्य शुचिगुणयुक्तोऽग्निर्देवता । अन्यत्पूर्ववद्व्याख्येयम् ।

चतुर्विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्याग्नय आरण्येनाग्निना संदह्येरन्का तत्र प्रायश्चित्तिरिति समेवाऽऽरोपयेदरणी वोल्मुकं वा मोक्षयेद्यद्याहवनीयाद्यदि गार्हपत्याद्यदि न शक्नुयात्सोऽग्नये संवर्गायाष्टाकपालं पुरोळाशं निर्वपेत्तस्योक्ते याज्यानुवाक्ये आहुतिं वाऽऽहवनीये जुहुयादग्नये संवर्गाय स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ७ ॥ इति ।

दावाग्निररण्यादागत्याग्निहोत्रशालां दहन्नाहवनीयादीन्यदा सम्यग्दहति तदानीं तद्दहनात्पूर्वमेवाग्नीनरणी द्वयोररण्योः सह समारोपयेदेव ॥ तदशक्तौ गार्हपत्याहवनीयादुल्मुकं मोक्षयेत् । सहसोल्मुकमादाय परितो गच्छेत् । समारोपणं वोल्मुकमोचनं वेति पक्षद्वयस्याग्निदाहत्वरया यदा न शक्तिस्तदा संवर्गगुणयुक्तोऽग्निः पुरोडाशदेवता । तदीययाज्यानुवाक्ये च पूर्वमेवाभिहिते ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये षष्ठः खण्डः ॥ ६ ॥ (७) [ १३० ] ।

---

पञ्चविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरुपवसथेऽश्रु कुर्वीत का तत्र प्रायश्चित्तिरिति सोऽग्नये व्रतभृतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वमग्ने व्रतभृच्छुचिर्व्रतानि बिभ्रद्व्रतपा अदब्ध इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये व्रतभृते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

उपवसथे यजनीयदिनात्पूर्वदिने शिरोव्यथादिना मृतबन्धुस्मरणादिना

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वा नेत्रयोरश्रुमोचने पुरोडाशस्य व्रतभृद्गुणकोऽग्निर्देवता । त्वमग्ने व्रतभृदित्यादिके सूत्रकारेण पठिते [ याज्यानुवाक्ये ] ।

षड्विंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरुपवसथेऽव्रत्यमापद्येत का तत्र प्रायश्चित्तिरिति सोऽग्नये व्रतपतयेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये त्वमग्ने व्रतपा असि यद्वो वयं प्रमिनाम व्रतानीत्याहुतिं वाऽऽहवनीये जुहुयादग्नये व्रतपतये स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

व्रतविरुद्धं निषिद्धाचरणमव्रत्यं दिवास्वापादिकमापद्येत प्राप्नुयात्तत्र व्रतपतिगुणयुक्तोऽग्निः पुरोडाशदेवता ।

सप्तविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निरमावास्यां पौर्णमासीं वाऽतीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये पथिकृतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वेत्था हि वेधो अध्वन आ देवानामपि पन्थामगन्मेत्याहुतिं वाऽऽहवनीये जुहुयादग्नये पथिकृते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहिताग्निरमावास्येष्टिं पौर्णमासेष्टिं वा यदि कदाचिदतिक्रामेत्तदा पथिकृद्गुणयुक्तोऽग्निः पुरोडाशदेवता ।

अष्टाविंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्यस्य सर्व एवाग्नय उपशाम्येरन्का तत्र प्रायश्चित्तिरिति सोऽग्नये तपस्वते जनद्वते पावकवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य

---

त्वमग्ने व्रतपा असि०—८–११–१ । यद्वो वयं प्रमि०—१०–२–४ । वेत्था हि वेधो अध्वनः०—६–१६–३ । आ देवानामपि पन्थां०—१०–२–३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

याज्यानुवाक्ये आयाहि तपसा जनेष्वा नो याहि तपसा जनेष्वित्याहुतिं वाऽऽहवनीये जुहुयादग्नये तपस्वते जनद्वते पावकवते स्वाहेति सा तत्र प्रायश्चित्तिः ॥ ८ ॥ इति ।

आहवनीयगार्हपत्यदक्षिणाग्नीनां सर्वेषामुपशान्तौ तपस्वज्जनद्वत्पावकवद्गुणत्रययुक्तोऽग्निः पुरोडाशदेवता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (८) [ १३० ] ।

---

एकोनत्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निराग्रयणेनानिष्ट्वा नवान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये वैश्वानराय द्वादशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये वैश्वानरो अजीजनत्पृष्टो दिवि पृष्टो अग्निः पृथिव्यामित्याहुतिं वाऽऽहवनीये जुहुयादग्नये वैश्वानराय स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

गृहेषु नवधान्ये समागते सत्याग्रयणेष्टिं कृत्वा पश्चान्नवान्नं भोक्तव्यम् । तस्या इष्टेरकरणे वैश्वानरगुणयुक्तोऽग्निः पुरोडाशदेवता ।

त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि कपालं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽश्विभ्यां द्विकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अश्विना वर्तिरस्मदा गोमता नासत्या रथेनेत्याहुतिं वाऽऽहवनीये जुहुयादश्विभ्यां स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

---

पृष्टो दिवि पृष्टो अग्निः ०—१—९८—२ । अश्विना वर्तिः ०—१—९२—१६ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


य आहिताग्निर्यस्याऽऽहिताग्नेः पुरोडाशनिष्पादकं कपालं यदि नश्येत्त-दानीमश्विनौ पुरोडाशदेवता ।

एकत्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि पवित्रं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽग्नये पवित्रवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये पवित्रं ते विततं ब्रह्मणस्पते तपोष्पवित्रं विततं दिवस्पद इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये पवित्रवते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहिताग्नेः पवित्रनाशे पवित्रवद्गुणयुक्तोऽग्निः पुरोडाशदेवता ।

द्वात्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि हिरण्यं नश्येत्का तत्र प्रायश्चित्तिरिति सोऽग्नये हिरण्यवतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये हिरण्यकेशो रजसो विसार आ ते सुपर्णा अमिनन्तँ एवैरित्याहुतिं वाऽऽहवनीये जुहुयादग्नये हिरण्यवते स्वाहेति सा तत्र प्रायश्चित्तिः इति ।

आहिताग्नेर्हिरण्यनाशे हिरण्यवद्गुणयुक्तोऽग्निः पुरोडाशदेवता ।

त्रयस्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि प्रातरस्नातोऽग्निहोत्रं जुहुयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये वरुणायाष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानु-

---

पवित्रं ते विततं ब्रह्मणस्पते० ९—८४—१ । तपोष्पवित्रं विततं—९—८४—१ । हिरण्यकेशो रजसो विसारे०—१—७९—१ । आ ते सुपर्णा अमिनन्तँ एवैः०—१—७९—२ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

वाक्ये त्वं नो अग्ने वरुणस्य विद्वान्स त्वं नो अग्नेऽवमो भवोतीत्याहुतिं वाऽऽहवनीये जुहुयादग्नये वरुणाय स्वाहेति सा तत्र प्रायश्चित्तिः इति ।

आहिताग्नेः स्नानमन्तरेणाग्निहोमे वरुणगुणकोऽग्निः पुरोडाशदेवता ।

चतुस्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यदि सूतकान्नं प्राश्नीयात्का तत्र प्रायश्चित्तिरिति सोऽग्नये तन्तुमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये तन्तुं तन्वन्रजसो भानुमन्विह्यक्षानहो नह्यतनोत सोम्या इत्याहुतिं वाऽऽहवनीये जुहुयादग्नये तन्तुमते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहिताग्नेः सूतकान्नप्राशने तन्तुमद्गुणकोऽग्निर्देवता ।

पञ्चत्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्जीवे मृतशब्दं श्रुत्वा का तत्र प्रायश्चित्तिरिति सोऽग्नये सुरभिमतेऽष्टाकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये अग्निर्होता न्यसीदद्यजीयान्साध्वीमकर्देववीतिं नो अद्येत्याहुतिं वाऽऽहवनीये जुहुयादग्नये सुरभिमते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहिताग्निः स्वस्मिञ्जीवत्येव स्वकीयमरणशब्दं यदा द्वेषिमुखाच्छृणुयात्तदानीं सुरभिमद्गुणयुक्तोऽग्निर्देवता ।

---

त्वं नो अग्ने वरुणस्य विद्वान्०—४-१-४ । स त्वं नो अग्नेऽवमो भवोति०—४-१-५ । तन्तुं तन्वन्रजसो भानुमन्विहि०—१०-५३-६ । अक्षानहो नह्यतनोत सोम्याः०—१०-५३-७ । अग्निर्होता न्यसीदद्यजीयान्०—५-१-६ । साध्वीमकर्देववीतिं नो अद्य०—१०-५३-३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


षट्त्रिंशे प्रश्नोत्तरे दर्शयति—

तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति सोऽग्नये मरुत्वते त्रयोदशकपालं पुरोळाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षयेऽरा इवेदचरमा अहेवेत्याहुतिं वाऽऽहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिः, इति ।

आहिताग्निर्योऽस्ति तस्येत्यस्मिन्नर्थे यस्येति शब्दः प्रयुक्तः । तस्याऽऽहिताग्नेर्भार्या वा तद्गृहावस्थिता गौर्वा यमावपत्यद्वयं सह जनयेत्तदानीं मरुद्गुणयुक्तोऽग्निर्देवता ।

सप्तत्रिंशे पर्याये कंचिद्विचारमुद्भावयति—

तदाहुरपत्नीकोऽप्यग्निहोत्रमाहरे३त् । नाऽऽहरे३त्, इति ।

पुरुषे जीवति सति यदा भार्या म्रियते तदानीमाहितैरग्निभिर्भार्याया दाहः इत्येकः पक्षः । तथा च मनुः—

" भार्यायै पूर्वमारिण्यै दत्त्वाऽग्नीनन्त्यकर्मणि ।
पुनर्दारक्रियां कुर्यात्पुनराधानमेव च " ॥ इति ।

आहितेभ्योऽग्निभ्योऽन्येनाग्निना भार्यां दहेदिति द्वितीयः पक्षः । तथा चाऽऽश्वलायनः—'आहार्येणानाहिताग्निं पत्नीं च' इति । भरद्वाजोऽप्याह—'निर्मन्थ्येन पत्नीम्' इति । अस्मिन्पक्षे पुनरपि विवाहेच्छारहितत्वादयमपत्नीक एव वर्तते । सोऽग्निहोत्रमाहरेदनुतिष्ठेन्न वेति श्रुतिद्वयं विचारार्थम् ।

तत्र निर्णयं दर्शयति—

आहरेदित्याहुः, इति ।

अननुष्ठाने बाधं दर्शयति—

यदि नाऽऽहरेदनद्धा पुरुषः, इति ।

---

मरुतो यस्य हि क्षये०—१—८६—१ । अरा इवेदचरमाः०—५—५८—५ ।

---

१ क. ख. 'न्याहानि' । २ ङ. म. 'मन्थ्येन ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अद्धेति सत्यनाम । तद्विपरीत्यादनृतः पुरुषोऽनद्धा । पुरुषोऽननुष्ठानेनानृतो भवेदित्यर्थः ।

प्रश्नोत्तराभ्यां शब्दार्थं निश्चिनोति—

**कोऽनद्धा पुरुष इति न देवान्न पितॄन्न मनुष्यां-निति, इति ।**

अनद्धाशब्देन को विवक्षित इति प्रश्नः । यः पुमान्देवान्न पूजयेदिति शेषः । पितॄनपि न पूजयेत् । मनुष्यानतिथीनपि न पूजयेत् । तादृशः पुमाननद्धा पुरुष इत्युत्तरम् ।

अग्निहोत्रस्याननुष्ठाने सत्यनद्धा पुरुषो भवेदिति विपक्षे बाधमुक्त्वा स्वपक्षमुपसंहरति—

**तस्मादपत्नीकोऽप्यग्निहोत्रमाहरेत्, इति ।**

उक्तार्थदार्ढ्याय शाखान्तरगतां गाथामुदाहरति—

**तदेषाऽभि यज्ञगाथा गीयते, इति ।**

तत्तस्मिन्नवश्यानुष्ठानरूपेऽर्थ एषा वक्ष्यमाणा यज्ञमभिलक्ष्य सर्वैर्गीयमाना यज्ञगाथा याज्ञिकैर्गीयते पठ्यते ।

तां गाथां दर्शयति—

**यजेत्सौत्रामण्यामपत्नीकोऽप्यसोमपः । माता-पितृभ्यामनृणार्थाद्यजेति वचनाच्छ्रुतिरिति, इति ।**

अपत्नीकोऽपि पुमान्सौत्रामण्यां यजेत्सौत्रामणीयागमपि कुर्यात्किमुताग्निहोत्रादिकम् । हविर्यज्ञेष्वस्याधिकारोऽस्तीत्यर्थः । तद्वत्सोमयागेष्वधिकारशङ्कायां तद्व्यावृत्त्यर्थमसोमप इत्युच्यते । यथा पत्नीरहितोऽपि मात्रे पित्रे चाशनाच्छादनादिकं ददाति तद्वदग्निहोत्रमपि कुर्यादिति शेषः । अत्र हेतुरनृणार्थादिति ऋणपरिहारनिमित्तम् । तथा च शाखान्तरे श्रूयते—जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवाञ्जायते ब्रह्मचर्येणर्षिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासीति (?) । अनेनैवाभिप्रायेण श्रुतिः । श्रुतेर्यजेति वचनमस्ति । यज देवानधीष्व वेदान्प्रजामुत्पादयेति शाखान्तरे वचनमस्ति । तस्माद्वचनादनुष्ठानपक्ष एव युक्त इति गाथाया अर्थः ।

१ ग. घ. ङ. च. छ. °ष्या इति । २ क. °वाञ्जाय° ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तथा च विष्णुः स्मरति—

मृतायामपि भार्यायां वैदिकं न त्यजेद्द्विजः ।
उपाधिनाऽपि यत्कर्म यावज्जीवं समापयेत् ॥ इति ।

उपाधिः कुशमयादिपत्नीकल्पनां । तथा च स्मृत्यन्तरम्—

अन्ये कुशमयीं पत्नीं कृत्वा तु गृहमेधिनः ।
अग्निहोत्रमुपासन्ते(ते) यावज्जीवमनुव्रताः ॥ इति ।

तथा च मैत्रायणीयश्रुतिर(तात्र)प्याम्नायते—

यस्तु स्वैरग्निभिर्भार्यां संस्करोति कथंचन ।
असौ मृतः स्त्री भवति स्त्री चैवास्य पुमान्भवेत् ॥ इति ।

तस्मान्मृतभार्योऽपि स्वकीयानग्नीनवस्थाप्याग्निहोत्रमाहरेत् ।

तदेतदभिमेत्योपसंहरति—

**तस्मात्सौम्यं याजयेत् ॥ ९ ॥ इति ।**

ऋणापाकरणार्थी दोषराहित्यात्सौम्यः । तादृशमवश्यमग्निहोत्राद्यनुष्ठापयेत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मण-
भाष्ये द्वात्रिंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (९) [१३२] ।

---

अत ऊर्ध्वं खण्डद्वयं देशविशेषेण केचिदामनन्ति केचिन्नाऽऽमनन्ति । अत एव पूर्वनिबन्धकाराः पाठरहितदेशानुसारेण तद्व्याख्यानमुपेक्षितवन्तः । अस्माभिस्तु पाठोपेतदेशानुसारेण तद्व्याख्यायते । तद्व्रतनिमित्तमुपवासं विधत्ते—

**तदाहुर्यद्दर्शपूर्णमासयोरुपवसति न ह वा अव्रतस्य देवा हविरश्नन्ति तस्मादुपवसत्युत मे देवा हविरश्नीयुरिति, इति ।**

तत्तस्मिन्निष्ट्यनुष्ठानविषये ब्रह्मवादिन एवमाहुः । यः कोऽप्यनुष्ठाता दर्शपूर्णमासयोरुपवासं कुर्यात् । यागरूपं व्रतं निश्चित्य गार्हपत्याद्यग्निसमीपे देवा[ः] स उपवासः । यदि (ह्य) देवा अस्यापि यज्ञे समीपे वसन्तीत्येवं योऽनुष्ठानसंकल्प उपवासः । अग्न्युपस्तरणादिना तदीयोऽनुष्ठाननिश्चयो ज्ञेयो गन्तव्यः । अत एव शाखान्तरे श्रूयते—उपास्मिञ्छ्वो यक्ष्यमाणे देवता

१ ख. °ना । ग्रन्थान्तरे—" मृतस्त्री(स्त्रीः) कतिचित्कालं कर्मातीतो भवेद्यदि । अशो यथोक्तं गोयुग्मं दत्त्वा भार्यां समुद्वहेत् । विरक्तो वा वयोतीतः कथंचिन्नोद्वहेद्यदि । भार्यां स्वर्णमयीं कृत्वा कौशां(कौशीं) वाऽऽधानमाचरेत्" इति ॥ ग्र° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वसन्ति । य एवं विद्वानग्निमुपस्तृणा[ती]ति । अत्रतस्य नियमविशेषस्वीकारव्रतरहितस्य पुरुषस्य हविर्देवा नैवाश्नन्ति । तस्मात्कारणादुत मे ममापि हविर्देवा अश्नीयुरित्यभिप्रेत्य नियमं स्वीकृत्याग्निसमीप उपवसेत् । एतदेवाभिप्रेत्याऽऽपस्तम्ब आह—'आहवनीयागारे गार्हपत्यागारे वा शेते' इति । यद्वा ग्राम्याशनपरित्याग उपवासः । तत्परित्यज्याऽऽरण्याशनरूपं नियमं स्वीकुर्यात् । अत एव शाखान्तरीया आहुः—'यद्ग्राम्यानुपवसति तेन ग्राम्यानवरुन्धे यदारण्यस्याश्नाति तेनाऽऽरण्यान्यदनाश्वानुपवसेत्पितृदेवत्यः स्यादारण्यस्याश्नाति' इति ।

अत्रोपवासतिथिविषये शाखाभेदवचनमाश्रित्य विकल्पं दर्शयति—

**पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यमुत्तरामिति कौषीतकं या पूर्वा पौर्णमासी साऽनुमतिर्योत्तरा सा राका, इति ।**

खण्डतिथिवशाद्यदा दिनद्वये पौर्णमासी तिथिः संपद्यते तदानीं पूर्वां पौर्णमासीमुपवसेत्पूर्वदिन उपवासं कृत्वा परेद्युर्यजेतेति सामशाखाप्रवर्तकस्य पैङ्गिमहर्षेर्मतम् । उत्तरां पौर्णमासीमुपवसेदुत्तरस्मिन्दिन उपवासं कृत्वा ततोऽपि परेद्युर्यजेतेत्यृक्शाखाप्रवर्तकस्य कौषीतकिमहर्षेर्मतम् ।

एतदेव मतद्वयमुपजीव्य स्मार्ता एवं वर्णयन्ति—

पर्वप्रतिपदोः संधिर्मध्याह्ने पूर्वतोऽपि वा ।
अन्वाधानं पूर्वदिने तद्दिने याग इष्यते ॥
परतश्चेत्परेऽह्नीष्टिस्तद्दिनेऽन्वाहितिर्भवेत् ॥ इति ।

न च पौर्णमासीद्वयसद्भावे वेदितव्यम् । अनुमतिराकाशब्दाभ्यां पौर्णमासीभेदस्य सर्वत्र व्यवहृतत्वात् । तयोः स्वरूपमभिधानकार आह—'कलाहीने साऽनुमतिः पूर्णे राका निशाकरे' इति । चतुर्दशीसंयोगाच्चन्द्रमसि कलाहीने सत्यनुमतिरित्युच्यते । तत्संयोगाभावेन चन्द्रमण्डले पूर्णे सति राकेत्युच्यते ।

पौर्णमासीन्यायममावास्यायामपि दर्शयति—

**या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः, इति ।**

अत्रापि चतुर्दशीसंयोगाच्चन्द्रदर्शने सत्यमावास्या सिनीवाल्युच्यते । तयो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


गराहित्येन चन्द्रदर्शनाभावे कुहूरिति । तदप्यभिधानकारेणोक्तम्—'दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः' इति । अत्राप्युपवासयागविषये मतभेदः पूर्ववद्द्रष्टव्यः ।

अत्र पूर्वोत्तरविभागनिर्णयाय कर्मोपयोगिन्यास्तिथेः स्वरूपं दर्शयति—

यां पर्यस्तमियादभ्युदियादिति सा तिथिः, इति ।

अमावास्यां पौर्णमासीं वा यां परिप्राप्य सूर्योऽस्तमियात् । तथा यामभिलक्ष्य सूर्य उदियात्सेयमुदयास्तमयव्यापिनी कर्मोपयुक्ता तिथिः । तादृशे तिथावुदयास्तमययोर्मध्ये पूर्वोत्तराभ्यां चतुर्दशीप्रतिपद्भ्यां मिश्रणे सति पर्वणो द्वैविध्यं भवति । तस्मिन्द्वैविध्ये पूर्वोक्तमतद्वयं द्रष्टव्यम् ।

तदेतदुपसंहरति—

पूर्वां पौर्णमासीमुपवसेदनिर्ज्ञाय पुरस्तादमावास्यायां चन्द्रमसं यदुपैति यद्यजते तेन सोमं क्रीणन्ति तेनोत्तरामुत्तरामुपवसेदुत्तराणि ह वै सोमो यजते सोममनु दैवतमेतद्वै देवसोमं यच्चन्द्रमास्तस्मादुत्तरामुपवसेत् ॥ * ११ ॥ इति ।

पूर्वामिति पैङ्गिमतस्योपसंहारः । अमावास्यादिने पुरस्तात्पूर्वस्यां दिशि चन्द्रमसमनिर्ज्ञाय च शास्त्रमार्गेण चन्द्रमदृष्ट्वा चन्द्रोदयो न भविष्यतीति निश्चित्य यदुपैत्युपवसति प्रारभत इति यदस्ति यद्यजते परेद्युर्यागं करोतीति यदस्ति तेनोपवासेन यागेन चोत्तरामुत्तरामागामिपक्षगतां पौर्णमासीममावास्यां चोपवसेत् । उत्तराण्युपवासदिनादुत्तरेषु दिनेषु यजते । स यागः सोमो भवति सोमयागसदृशो भवति । तं सोममनु सर्वमपि दैवतं तृप्यतीति शेषः । योऽयं चन्द्रमा अस्त्येतदेव सोमं देवानामपेक्षितं सोमद्रव्यसदृशं वस्तु । यस्माच्चन्द्रमण्डलं देवानां प्रियं तस्मान्मण्डलं संपूर्णमभिलक्ष्योत्तरां पौर्णमासीमुपवसेदिति कौषीतकिमतस्योपसंहारः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये नवमः खण्डः ॥ ९ ॥ (११) [१३३] ।

---

१ ख. ग. 'मसं ह' ।

* मूलानुरोधेनायमेकादशोऽङ्कः । भाष्यकारेण त्वर्थानुरोधेनायं खण्डः पूर्वं गृहीतोऽभिमस्तु मूलानुरोधेन दशमः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्वमपत्नीकस्याग्निहोत्रादिहविर्यज्ञानुष्ठानं प्रतिपादितम् । अथ तस्यैवापत्नीकस्य वाचिकं मानसं च द्विविधमग्निहोत्रं प्रतिपादनीयम् । तत्र वाचिकविषयं प्रश्नमुद्भावयति—

तदाहुर्वाचाऽपत्नीकोऽग्निहोत्रं कथमेव जुहोति, इति ।

योऽपत्नीकः पुरुषस्तस्य वाचा निष्पाद्यं यदग्निहोत्रं तत्केन प्रकारेणानुष्ठाप्यमिति प्रश्नः ।

तमेव प्रश्नं पुनर्विस्पष्टयति—

निविष्टे मृता पत्नी नष्टा वाऽग्निहोत्रं कथमग्निहोत्रं जुहोति, इति ।

नैष्ठिकब्रह्मचर्यादावप्यपत्नीकत्वमस्ति तत्राग्निहोत्रप्रसङ्ग एव नास्ति। विध्यभावात् । अतोऽपत्नीकत्वं विशेष्यते । विवाहादूर्ध्वमग्निहोत्रे निविष्टेऽनुष्ठातुमुपक्रान्ते सति पश्चात्पत्नी मृता भवति । तादृशोऽत्रापत्नीकः । तस्याग्निहोत्रं नष्टा वा नष्टमेव भवति । पूर्वसिद्धैरग्निभिः पत्नीदाहपक्षे पुनरग्निहोत्रहेतूनामग्नीनामभावात् । अतोऽपत्नीकः कथमग्निहोत्रं जुहोतीति प्रश्नः ।

तस्योत्तरमाह—

पुत्रान्पौत्रान्नप्तॄनित्याहुरस्मिंश्च लोकेऽमुष्मिंश्चास्मिँल्लोकेऽयं स्वर्गोऽस्वर्गेण स्वर्गं लोकमारुरोहेत्यमुष्यैव लोकस्य संततिं धारयति यस्यैषां पत्नीं नैच्छेत्तस्मादपत्नीकस्याऽऽधानं कुर्वन्ति, इति ।

योऽपत्नीकोऽग्निरहितः स्थविरत्वेनानुष्ठातुमशक्तश्च तादृशः पुमान्पुत्रादीन्प्रत्येवं ब्रूयात् । आहुरिति बहुवचनं छान्दसम् । हे पुत्रपौत्रप्रपौत्राः शृणुत । अस्मिँल्लोकेऽमुष्मिन्स्वर्गे लोके च श्रेयः संपादनीयम् । अस्मिँल्लोके तु स्थितैः पुरुषैर्योऽयं स्वर्गः शास्त्रेण श्रुत इति शेषः । तं स्वर्गलोकमस्वर्गेण स्वर्गविलक्षणेन कामकर्मानुष्ठानेनाऽऽरुरोह।ऽऽरोहेदित्येवं पुत्रादीन्प्रति वाचोपदिशति । एतदेव वाजसनेयिभिर्विस्पष्टमाम्नायते—'तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः । तस्मादेनमनुशासति ' इति। अनेन पुत्राद्यनुशासनेनामुष्यैव लोकस्य संततिमविच्छेदं धारयति संपादयति । कुलपरम्परयाऽग्निहोत्रानुष्ठानेन सर्वेषां स्वर्गप्राप्तौ तद्विच्छेदाभावात् । यस्यः यः पुमानेषां पत्नीं नेच्छेत् । स्वस्यानुष्ठातुमशक्तत्वेन पुनर्विवाहसाध्यामेतां पत्नीं नापेक्षेत । तस्मात्तस्यापत्नीकस्य वाचा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रेरिताः पुत्रपौत्रादय आधानं कुर्वते । तदाधानपूर्वकमग्निहोत्रमपत्नीकस्य वाचिकमित्युच्यते ।

अथ मानसमग्निहोत्रं प्रश्नोत्तराभ्यां दर्शयति—

अपत्नीकोऽग्निहोत्रं कथमग्निहोत्रं जुहोति श्रद्धा पत्नी सत्यं यजमानः श्रद्धा सत्यं तदित्युत्तमं मिथुनं श्रद्धया सत्येन मिथुनेन स्वर्गाँल्लोकाञ्जयतीति ॥ १० ॥ इति ।

पूर्वोक्तः स्थविरोऽपत्नीकोऽग्निहोत्रं स्वयमेव मनसा जुहोमीति यदीच्छेदिति शेषः । तदानीं केन प्रकारेण तस्य मानसो होम इति प्रश्नः । श्रद्धेत्यादिकमुत्तरम् । येयं कर्मश्रद्धा सैव पत्नी । यत्तु सत्यं सत्यवाक्यं वैदिकमन्त्रोच्चारणं स एव यजमानः । श्रद्धा सत्यं चेति यदुभयमस्ति तदुक्तेन प्रकारेण भावितमुत्तमं मिथुनं भवति । तादृशेन श्रद्धासत्यरूपेण मिथुनेन मानसमनुष्ठानं निष्पाद्य स्वर्गाँल्लोकाञ्जयतीत्येवमुत्तरं संपन्नम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये द्वात्रिंशाध्याये दशमः खण्डः ॥ १० ॥ (१०)[ १३४ ]।

---

इत्थमग्निहोत्रप्रायश्चित्तप्रसङ्गादागतमपत्नीकाग्निहोत्रादिकं परिसमाप्य प्रकृतमेव प्रायश्चित्तमनुसरन्प्रश्नमुत्थापयति—

तदाहुर्यस्याग्निमनुद्धृतमादित्योऽभ्युदियाद्वाऽभ्यस्तमियाद्वा प्रणीतो वा प्राग्घोमादुपशाम्येत्का तत्र प्रायश्चित्तिरिति, इति ।

सायंकाल आदित्यस्यास्तमयात्पुराऽग्निहोत्रार्थं गार्हपत्यादग्निमुद्धरेत् । प्रातःकाले तु सूर्योदयात्पुरोद्धरेदित्याम्नातम् । एवं सति यस्याग्निहोत्रिणोऽनुद्धृतमग्निमभिलक्ष्याऽऽदित्य उदियाद्वाऽस्तमियाद्वाऽग्न्युद्धरणात्प्रागेवोदयास्तमयौ भवत इत्यर्थः । अथवा स्वस्वकाले प्रणीतोऽग्निराहवनीयदेशे स्थित्वा होमात्पूर्वमेवोपशाम्येत् । तेषु त्रिषु विषयेषु प्रायश्चित्तं पृच्छति ।

तस्योत्तरमाह—

हिरण्यं पुरस्कृत्य सायमुद्धरेज्ज्योतिर्वै शुक्रं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


हिरण्यं ज्योतिः शुक्रमसौ तदेव तज्ज्योतिः शुक्रं पश्यन्नुद्धरति रजतमन्तर्धाय प्रातरुद्धरेदेतद्रात्रिरूपं पुरा संभेदाच्छायानामाहवनीयमुद्धरेन्मृत्युर्वै तमश्छाया तेनैव तज्ज्योतिषा मृत्युं तमश्छायां तरति सा तत्र प्रायश्चित्तिः, इति ।

यदा सूर्यास्तमयादूर्ध्वमुद्धरणीयं तदानीं हिरण्यं पुरस्कृत्योपर्यवस्थाप्य वह्निमुद्धरेत् । यदेतद्धिरण्यमस्ति तदेतच्छुक्रं ज्योतिर्वा अत्यन्तभास्वरः प्रकाशः । असावादित्योऽपि शुक्रं ज्योतिरत्यन्तं भास्वरः प्रकाशः । तथा सति तदेव हिरण्यमेव तज्ज्योतिरादित्यप्रकाशः । अतः शुक्रं दीप्तिमद्धिरण्यं पश्यन्नेवाग्निमुद्धरेत् । प्रातःकाले तु रजतमन्तर्धायोपर्यवस्थाप्याग्निमुद्धरेत् । एतच्च रजतं रात्रेः स्वरूपम् । रात्रौ हि चन्द्रतारादिकं रजतसमानं दृश्यते । अतो रजतेन सूर्योदयात्प्राचीनो रात्रिकाल एव संपद्यते । यदाऽप्येतावतैव त्रिविधप्रश्नोत्तरं संपन्नं तथाऽपि तत्प्रसङ्गान्नित्यमुद्धरणं पुरेत्यादिना प्रदश्य(दर्श्य)ते । छायानां संभेद एकीभावः । सूर्यास्तमये सत्येषा मनुष्यच्छाया, एषा वृक्षच्छायेति विभागो न जायते सोऽयं संभेदः । तस्मात्पुरा सूर्यप्रकाशवशाच्छायाविशेषो विज्ञायते । तस्मिन्नेव काले सायंहोमार्थमाहवनीयमुद्धरेत् । तत्रोपपत्तिर्मृत्युरित्यादिः । यदिदं तमो या च च्छाया तदुभयं मृत्युस्वरूपमेव । अतः सत्यादित्यप्रकाशे तेनैव ज्योतिषा मृत्युरूपं तमस्तद्रूपां छायां च तरत्युल्लङ्घयति । सेयमुक्ता तत्र वैकल्ये प्रायश्चित्तिः । नित्योद्धरणस्यापि वैकल्यान्निरोधित्वादुपचरितं प्रायश्चित्तत्वम् । पूर्वत्र सप्तत्रिंशे पर्याये पत्नीरहितस्याग्निहोत्रं विधायाष्टात्रिंशे पर्याये दर्शपूर्णमासयोः प्रवासनिर्णय एकोनचत्वारिंशे पर्याये वाचिकं मानसं वाऽग्निहोत्रमपत्नीकस्य विधाय चत्वारिंशे वह्न्युद्धरणकालात्मकं प्रायश्चित्तमुक्तम् ।

अथैकचत्वारिंशे प्रश्नोत्तरं दर्शयति—

तदाहुर्यस्य गार्हपत्याहवनीयावन्तरेणानो वा रथो वा श्वा वा प्रतिपद्येत का तत्र प्रायश्चित्तिरिति नैनन्मनसि कुर्यादित्याहुरात्मन्यस्य हि तौ भवन्तीति तच्चेन्मनसि कुर्वीत गार्हपत्यादविच्छिन्ना-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मुदकधारां हरेत्तन्तुं तन्वन्रजसो भानुमन्विहीत्याह-
वनीयात्सा तत्र प्रायश्चित्तिः, इति ।

गार्हपत्याहवनीययोर्मध्ये शकटं वा रथो वा श्वा वा यदा गच्छेत्तदा- मेतच्छकटादिकं मनसि न कुर्यात् । अस्यानुष्ठातुरात्मनि स्वकीये पारमार्थिक- स्वरूपे वेदान्तप्रतिपाद्ये वस्तुनि हि ता भवन्ति तानि शकटादीन्यवच्छिन्ने- अतः शकटादिरूपबुद्धिं परित्यज्य परमात्मबुद्धिं कुर्यात् । यद्यात्मविवेका- भावेन तच्छकटादिकं मनसि कुर्वीत शकटादिबुद्धिं न परित्यजेत्तदानीं गार्ह- पत्यादारभ्याऽऽहवनीयपर्यन्तमविच्छिन्नामुदकधारां हरेत् । तत्र तन्तुं तन्व- न्निति मन्त्रः ।

अथ द्विचत्वारिंशे पर्याये कंचिद्विचारमुद्भावयति—

तदाहुः कथमग्नीनन्वादधानोऽन्वाहार्यपचनमाहार-
ये३त्, नाऽऽहारये३त्, इति, इति ।

अन्वाहार्यनामक ओदनः पच्यते यस्मिन्दक्षिणाग्नौ सोऽयमन्वाहार्यपचनः । तस्याऽऽहरणमभिज्वलनम् । इष्टेरादावन्वाधानकाले दक्षिणाग्नेरभिज्वलनं कुर्यान्न वेति विचारार्थं प्लुतिद्वयम् ।

तत्र निर्णयं दर्शयति—

आहारयेदित्याहुः प्राणान्वा एषोऽध्यात्मं धत्ते
योऽग्नीनाधत्ते तेषामेषोऽन्नादतमो भवति यदन्वाहार्य-
पचनस्तस्मिन्नेतामाहुतिं जुहोत्यग्नयेऽन्नादायान्नपतये
स्वाहेति, इति ।

आहारयेत्प्रज्वलयेदित्येवमभिज्ञा आहुः । तत्रेयमुपपत्तिः । यः पुमानग्नी- नाधत्त एष एव पुमानध्या( ध्या )त्मं स्वात्मस्वरूपे प्राणानेव धारयति । योऽयमन्वाहार्यपचनोऽस्त्येष तेषामाहितानां चाग्नीनां मध्येऽतिशयेनान्नादः । तस्मात्प्राणधारिणामन्नभक्षणसिद्ध्यै सोऽयं प्रज्वलनीयः । प्रज्वलिते तस्मि- न्दक्षिणाग्नावग्नयेऽन्नादायेत्यादिमन्त्रेणैतामाहुतिं जुहुयात् ।

---

तन्तुं तन्वन्रजसो भानुमन्विहि०—१०-५३-६ ।

---

१ ख. घ. ङ. 'पत्वद्' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

वेदनं प्रशंसति—

अन्नादो ह्यन्नपतिर्भवत्यश्नुते प्रजयाऽन्नाद्यं य एवं वेद, इति ।

वेदिता स्वयमन्नादो रोगराहित्येन भोक्तुं समर्थोऽन्नपतिरन्नस्वामी च भवति। तथा प्रजया हि पुत्रादिरूपया सहान्नाद्यं प्राप्नोति । पूर्वं गार्हपत्याहवनीययो-र्मध्ये शकटादिगमनं निषिद्धं तद्वद्यागकर्तुरपि मध्ये संचारनिषेधशङ्कायां तद्व्यावर्तयितुमाह—

अन्तरेण गार्हपत्याहवनीयौ होष्यन्संचरेतैतेन ह वा एनं संचरमाणमग्नयो विदुरयमस्मासु होष्य-तीत्येतेन ह वा अस्य संचरमाणस्य गार्हपत्या-हवनीयौ पाप्मानमपहतः सोऽपहतपाप्मोर्ध्वः स्वर्गं लोकमेतीति वै ब्राह्मणमुदाहरन्ति, इति ।

यः पुमान्होष्यति स पुमान्गार्हपत्याहवनीयावन्तरेण तन्मध्यगतेन मार्गेण संचरेत । एतेन मार्गेण संचरमाणमेनं होमकर्तारमग्नयः स्वमनसैवं विदुः । अय-मस्मासु होष्यतीति । तस्मादग्नीनामभीष्टत्वात्तस्य संचारो युक्तः । किंच होमार्थं संचरमाणस्य पाप्मानमुभावग्नी विनाशयतः । स च पापरहित ऊर्ध्वगामी स्वर्गं लोकं प्राप्नोति । अस्मिन्नर्थे शाखान्तरगतं बहुविधं ब्राह्मणमभिज्ञा उदाहरन्ति ।

अथ त्रिचत्वारिंशे प्रश्नोत्तरे दर्शयति—

तदाहुः कथमग्नीन्प्रवत्स्यन्नुपतिष्ठेत प्रोष्य वा प्रत्ये-त्याहरहर्वेति तूष्णीमित्याहुस्तूष्णीं वै श्रेयस आका-ङ्क्षन्तेऽथाप्याहुरहरहर्वा एते यजमानस्याश्रद्धयो-द्वासनात्प्रप्लावनाद्बिभ्यति तानुपतिष्ठेतैवाभयं वोऽभयं मेऽस्त्वित्यभयं हैवास्मै भवत्यभयं हैवास्मै भव-ति ॥ १२ ॥ इति ।

यदाऽग्निहोत्री स्वगृह एवाग्नीनवस्थाप्य स्वयं ग्रामान्तरं प्रति प्रवसंति तदानीं प्रवत्स्यन्नग्निहोत्री प्रवासकाले कथमग्नीनुपतिष्ठेत । अथवा प्रोष्य ग्रामा-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

न्तरे गत्वा प्रत्येत्य पुनरागत्य कथमुपतिष्ठेत । अथवा स्वगृहे निष्ठन्नहरहः प्रतिदिनं कथमुपतिष्ठेत । इत्येतस्य प्रश्नत्रयस्य तूष्णीमित्यादिकमुत्तरम् । नात्र मन्त्रपाठः कश्चिदस्ति । किंतु तूष्णीमेवाञ्जल्यादिना विनयं प्रदर्शयन्नुपतिष्ठेत । लोकेऽपि सेवकास्तूष्णींभूता एव सन्तो विनीताः श्रेयसः श्रेष्ठान्राजगुर्वादीन्पुरुषानाकाङ्क्षन्त आगत्य स्वाभीष्टं प्रार्थयन्ते । तस्मात्तूष्णीमुपस्थानमित्येकः पक्षः । अथाप्याहुः । अपि चाभिज्ञाः केचिदेवं पक्षान्तरं वदन्ति । अहरहः प्रतिदिनमेवैतेऽग्नयो बिभ्यति । भयकारणं यजमानस्येत्यादिनोच्यते । होमे निष्पन्ने सति पश्चादुपयोगाभावाद्यजमानस्याग्निष्वश्रद्धा भवत्यतोऽयमग्नीनु-द्वासयेदित्येको भयहेतुः । प्रप्लावयेल्लौकिकपाकार्थं नीत्वा प्रप्लावनं कुर्यादिति द्वितीयो भयहेतुः । अतो भयपरिहाय तानेतेन मन्त्रेण सर्वत्रोपतिष्ठेत । हेऽग्नयो मत्तः सकाशाद्वो युष्माकमभयमस्तु । युष्मत्सकाशान्ममाप्यभयमस्त्विति मन्त्रार्थः । एवमुपस्थानं कुर्वतेऽस्मै यजमानायाभयमेव भवति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये द्वात्रिंशाध्याय एकादशः खण्डः ॥ ११ ॥ (१२) [१३५] ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्य-
धुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

अथ त्रयस्त्रिंशोऽध्यायः ।

---

आहिताग्नेर्मृतावग्निहोत्राङ्गे विकले तथा ।
प्रायश्चित्तमपत्नीकहोम इत्यादि वर्णितम् ॥
उक्तं द्वात्रिंशदध्यायैः कर्म वर्णत्रयान्वितम् ।
अथ त्वष्टभिरध्यायैर्वर्ण्यते राजकर्तृकम् ॥
तत्र क्रतौ राजसूये वह्निष्टिपशुसोमके ।
मध्येऽभिषेचनीयेऽह्नि शौनःशेपं श्रुतं श्रुतौ ॥
त्रयस्त्रिंशोऽयमध्यायः शौनःशेपेतिनामवान् ।
हरिश्चन्द्रकथा तत्र कथिता बहुपुत्रदा ॥

---

१ क, ख, घ, 'दै द्वि शौ'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

तदेतदुपाख्यानं दर्शयति—

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजाऽपुत्र आस तस्य ह शतं जाया बभूवुस्तासु पुत्रं न लेभे तस्य ह पर्वतनारदौ गृह ऊषतुः स ह नारदं पप्रच्छ, इति ।

हरिश्चन्द्रो नाम राजर्षिः 'प्रस्कण्वहरिश्चन्द्रावृषी' इति पाणिनिना सूत्रितत्वात् । स च वेधसो नृपतेः पुत्र इक्ष्वाकुवंशोद्भवो राजा पुत्रहीन आस । स च शतसंख्यानां जायानां मध्ये कस्यांचिदपि जायायां पुत्रं न लेभे । तस्य राज्ञो गृहे पर्वतनारदनामानौ यावृषी तौ निवासं चक्रतुः । तयोर्मध्ये नारदमृषिमेतया गाथया राजा पप्रच्छ ।

तां गाथां दर्शयति—

यं न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न ।
किंस्वित्पुत्रेण विन्दते तन्म आचक्ष्व नारदेति, इति ।

ये देवमनुष्यादयो विजानन्ति विवेकज्ञानयुक्ताः । ये च पश्वादयो न विजानन्ति विवेकज्ञानरहिताः । ते सर्वेऽपि नु क्षिप्रं यमिमं पुत्रमिच्छन्ति तेन पुत्रेण किंस्विद्विन्दते किंनाम फलं पिता लभते हे नारद मे मह्यं तत्फलमाचक्ष्वेति राज्ञः प्रश्नः ।

तस्योत्तरमवतारयति—

स एकया पृष्टो दशभिः प्रत्युवाच, इति ।

स नारद एकया गाथया पृष्टः सन्दशभिर्गाथाभिः प्रत्युत्तरमुक्तवान् ।

तत्र प्रथमां गाथामाह—

ऋणमस्मिन्संनयत्यमृतत्वं च गच्छति । पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम्, इति ।

उत्पन्नस्य सुखेन जीवतः पुत्रस्य मुखं पिता यदि पश्येत्तदानीमस्मिन्पुत्रे स्वकीयमृणं लौकिकं वैदिकं च संनयति । सम्यगवस्थापयति । लौकिकस्यावस्थापनात्पुत्रपौत्रादिभिर्ऋणं प्रत्यर्पणीयमिति स्मृतिकारा आहुः । वैदिकं तु त्रिभिर्ऋणवा जायत इत्यादिश्रुत्युक्तं पूर्वमेवोदाहृतम् । तस्य च पुत्रावस्थापनं संपत्तिनामकेन कर्मणा संपद्यते । तच्च कर्म वाजसनेयिभिराम्नातम्—अथातः संप्रत्तिर्यदा प्रैष्यन्मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति । स पुत्रः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति । ब्रह्म मया कर्तव्यं वेदाध्ययनं मयाऽनुष्ठेया यज्ञाश्च मया संपाद्या उत्तमा लोकाश्चेत्येतत्सर्वं पुत्रेण त्वयैव संपादनीयमिति पितृवाक्यस्यार्थः । सर्वमहं संपादयिष्यामीति पुत्रवाक्यस्यार्थः । बृहदारण्यककाण्डे संक्षिप्य संदर्शयिष्यते—' सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते ' इति । एवमृणं पुत्रे समर्पयति । तथैवामृतत्वं मरणरहितं मुक्तिपदं च गच्छति । पुत्रार्पितलौकिकवैदिकभारस्याविघ्नेन तत्त्वज्ञानसंपादनात् ।

द्वितीयां गाथामाह—

यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः, इति ।

पृथिव्यां भोगाः सस्यनिवासादयः । जातवेदस्यग्नौ भोगा दहनपचनादयः । अप्सु भोगाः स्नानपानादयः । प्राणिनामेते सर्वे भोगा यावन्तः सन्ति ततस्तावद्भ्यः सर्वेभ्यो भोगेभ्यो भूयानभ्यधिकः पितुः पुत्रे भोगो विद्यते । अत्यन्तसुखहेतुत्वात् । तथा चाऽऽहुः—

'पुत्रोत्पत्तिविपत्तिभ्यां नापरं सुखदुःखयोः' इति ।

तृतीयां गाथामाह—

शश्वत्पुत्रेण पितरोऽत्यायन्बहुलं तमः । आत्मा हि
जज्ञ आत्मनः स इरावत्यतितारिणी, इति ।

पितरो जनका उत्पन्नेन पुत्रेण शश्वत्सर्वदा लोकद्वयेऽपि बहुलमभ्यधिकं तम ऐहिकमामुष्मिकं च दुःखमत्यायन्नतिक्रामन्ति । तथा च बौधायन आह—

'पुदिति नरकस्याऽऽख्या दुःखं च नरकं विदुः ।
पुत्त्राणात्ततः पुत्रमिहेच्छन्ति परत्र च' इति ।

किंच हि यस्मात्कारणात्पितुः पुत्र उत्पन्न इत्युक्ते सति पिता स्वस्मात्स्वयमेव जज्ञ उत्पन्न इत्युक्तं भवति । ततः पिता यथा स्वयं स्वकीयं दुःखं विनाशयति तथा पुत्रोऽप्येतद्दुःखं विनाशयतीति द्रष्टव्यम् । तस्मात्स पुत्र इरावत्यन्नयुक्ताऽतितारिणी नदीसमुद्रादेरतितरणहेतुर्नौरिति शेषः । यथा नौर्दुर्गनद्यादिकं तारयत्येवं पुत्रोऽप्यैहिकमामुष्मिकं च दुःखं तारयतीत्यर्थः ।

चतुर्थीं गाथामाह—

किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पुत्रं ब्रह्माण इच्छध्वं स वै लोकोऽवदावदः, इति ।

अत्र मलाजिनश्मश्रुतपःशब्दैराश्रमचतुष्टयं विवक्षितम् । मलरूपाभ्यां शुक्ल(क्र)शोणिताभ्यां संयोगान्मलशब्देन गार्हस्थ्यं विवक्षितम् । कृष्णाजिनसंयोगादजिनशब्देन ब्रह्मचर्यं विवक्षितम् । क्षौरकर्मराहित्याच्छ्मश्रुशब्देन वानप्रस्थ्यं विवक्षितम् । इन्द्रियनियमसद्भावात्तपःशब्देन पारिव्राज्यं विवक्षितम् । मलं गार्हस्थ्यं किं नु किं नाम सुखं करिष्यति न किंचिदित्यर्थः । एवमुत्तरत्रापि योज्यम् । हे ब्रह्माणो विप्रा विप्रक्षत्रियाद्याः सर्वे यूयं सुखहेतुत्वात्पुत्रमिच्छध्वम् । स वै स एव पुत्रोऽवदावदो लोकः । वदितुमयोग्यानि निन्दावाक्यान्यवदास्तैर्वाक्यैर्नोद्यते न कथ्यत इत्यवदावदः । ( * एवं प्रपदेन तेन कथ्यत इति ) । अवदावदो दोषराहित्यान्निन्दानर्ह इत्यर्थः । तादृशो लोको भोगहेतुः पुत्रः । तस्मादाश्रमेभ्योऽप्याधिक्येन पुत्रेच्छा कर्तव्या । यद्यपि हरिश्चन्द्र एवात्र प्रष्टा तथाऽपि तेन सह ऋषीणां बहूनां सभायामवस्थानाद्ब्रह्माण इति संबोधनम् ।

पञ्चमीं गाथामाह—

अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो
विवाहाः । सखा ह जाया कृपणं ह दुहिता
ज्योतिर्ह पुत्रः परमे व्योमन्, इति ।

अन्नादयो लोके सुखहेतुत्वेन प्रसिद्धाः । तथा हि शरीरे प्राणावस्थितिहेतुत्वादन्नमेव प्राणः । वासः शीतोपद्रवाद्रक्षकत्वेन शरणं गृहसमानम् । हिरण्यं कर्णाभरणादिकं दृष्टिप्रियत्वाद्रूपसंपादकम् । पशवो गवाश्वादयो विवाहविशेषेण निर्वाहकाः । जाया भोगे सहकारित्वात्सखा ह सखिस्वरूपैव । एवमेते सुखहेतुत्वेन प्रसिद्धा अपि तात्कालिकमल्पमेव सुखं प्रयच्छन्ति । दुहिता ह पुत्रीति कृपणं केवलदुःखकारित्वाद्दैन्यहेतुः । तथा च स्मर्यते—

"संभवे स्वजनदुःखकारिका संप्रदानसमयेऽर्थहारिका ।
यौवनेऽपि बहुदोषकारिका दारिका हृदयदारिका पितुः" इति ।

पुत्रो ह पुत्रस्तु ज्योतिः स्वरूपं तमोनिवारकत्वेन स हि पितरं परमे व्योमन्नुत्कृष्ट आकाशे परब्रह्मस्वरूपेऽवस्थापयति । आकाशस्तल्लिङ्गादित्यनेन व्यास-

---

* धनुश्चिह्नान्तर्गतमसंगतम् ।

१ ख. एवमवदे° । २ ख. प्रघट्टेन । ३ क. ख. ज. °न प्रकाशरूपत्वेन स ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सूत्रेणाऽऽकाशव्योमादिशब्दानां ब्रह्मपरत्वं निर्णीतम् । पुत्रस्य च ब्रह्मज्ञानहेतुत्वं पूर्वमेवामृतत्वं च गच्छतीत्यत्र प्रतिपादितम् ।

षष्ठीं गाथामाह—

पतिर्जायां प्रविशति गर्भो भूत्वा स मातरम् ।
तस्यां पुनर्नवो भूत्वा दशमे मासि जायते, इति ।

पत्युराकारद्वयमस्ति । वर्तमानपुरुषाकार एको रेतोरूपेण गर्भाकारो द्वितीयः । जायाया अप्याकारद्वयमस्ति । पतिरूपमाकारं प्रति जाया भवति । गर्भरूपमाकारं प्रति माता भवति । अतः स तादृशः पतिः स्वयं रेतोरूपेण गर्भो भूत्वा पूर्वमवस्थितां जायां भविष्यदाकारेण मातरं सतीं प्रविशति । तस्यां मातरि पुनर्नवो भूत्वा पूर्वमन्यस्यां मातर्युत्पन्नो जरठः । इदानीं पुनर्नूतनबालो भूत्वा तस्यामिदानींतन्यामस्यां मातरि गर्भपाके सति दशमे मास्युत्पद्यते । तस्मात्पुत्रः स्वस्मादन्यो न भवति ।

सप्तमीं गाथामाह—

तज्जाया जाया भवति यदस्यां जायते पुनः ।
आभूतिरेषा भूतिर्बीजमेतन्निधीयते, इति ।

यद्यस्मात्कारणादस्यां गर्भधारिण्यामयं पिता पुत्ररूपेण पुनर्जायते तत्तस्मात्कारणाल्लोकप्रसिद्धा या जायाऽस्ति सा जायतेऽस्यामिति व्युत्पत्त्या जायाशब्दवाच्या भवति । किं चैषा भूत्याभूतिशब्दाभ्यामभिधीयते । भवत्यस्यां पुत्ररूपेण पतिरित्येषा भूतिशब्दवाच्या रेतोरूपेणाऽऽगत्यास्यां पुत्ररूपेण भवतीत्याभूतिशब्दवाच्या । एतदेतस्यां स्त्रियां बीजं रेतोरूपं निधीयते प्रक्षिप्यते तस्मादुक्ताः शब्दा उपपद्यन्ते ।

अष्टमीं गाथामाह—

देवाश्चैतामृषयश्च तेजः समभरन्महत् । देवा
मनुष्यानब्रुवन्नेषा वो जननी पुनः, इति ।

एतामेतस्यां योषिति देवाश्च महर्षयश्च स्वकीयं महत्तेजो रेतोरूपं सारं समभरन्पुत्रोत्पादनाय संपादितवन्तः । स्वयमेव संपाद्य ततो मनुष्यानित्यब्रुवन् । हे मनुष्या सेयमिदानीं जायारूपेण वर्तते सेयं पुनर्वो युष्माकं पुत्ररूपे जन्मनि जननी भवति ।

नवमीं गाथामाह—

नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्मात् पुत्रो मातरं स्वसारं चाधिरोहति, इति ।

लोको लोकजन्यं सुखमपुत्रस्य नास्ति । न हि पुत्रदर्शनेन यत्सुखं तदन्यदर्शनेन क्वचिदपि दृश्यत इति यदस्ति तत्सर्वे गोमहिष्यादयो जानन्ति यस्मात्तस्मादेव कारणात्पशुजातौ जातः पुत्रो वत्सः स्वकीयां मातरं भगिनीं वा पुत्रोत्पादनार्थमधिरोहति ।

दशमीं गाथामाह—

एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः । तं पश्यन्ति, पशवो वयांसि च तस्मात्ते मात्राऽपि मिथुनी भवन्ति, इति ।

पुत्रिणः पुत्रवन्तो देवमनुष्यादयो विशोकाः शोकरहिताः सन्तो यं पन्थानं सुखानुभवरूपं मार्गमाक्रमन्ते प्राप्नुवन्त्येष पन्थाः पुत्रसुखानुभवरूपो मार्ग उरुगाय उरुभिर्महद्भिः शास्त्रज्ञैः राजामात्यादिभिश्च गीयते । तथा सुशेवः सुष्ठु सेवितुं योग्यः सुखाधिक्यस्य विद्यमानत्वात् । तं पुत्रसुखानुभवरूपं पशवो गवादयो वयांसि पक्षिणः संपश्यन्ति जानन्ति । तस्मात्ते पशुपक्ष्यादयः पुत्रसुखार्थं मात्रा सह मिथुनी भवन्ति किं किमुतान्यया स्त्रिया सहेत्यर्थः ।

नारदेनोक्तां दशमीं गाथां निगमयति—

इति हास्मा आख्याय ॥ १३ ॥ इति ।

हानेनैव प्रकारेणास्मै तस्मै हरिश्चन्द्रायाऽऽख्यायोत्तरमभिधायावस्थित इति शेषः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ ( १३ ) [ १३६ ] ।

---

पुत्रनिमित्तलाभप्रतिपादिका नारदोक्ता दश गाथा उदाहृत्य पुत्रजन्मोपायोपदेशपरं नारदवाक्यमवतारयति—

अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति, इति ।

अथ पुत्रेच्छानिमित्तकथनानन्तरमेनं पुत्रार्थिनं हरिश्चन्द्रं नारद उवाच । हे हरिश्चन्द्र वरुणं राजानमुपधाव प्रार्थयस्व । येन प्रकारेण निश्चयः सोऽभिधी-

---

१ क. ग घ. ङ. च. छ. झ. ञ. 'ति ह स्मा' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यते । हे वरुण त्वत्प्रसादान्मे पुत्रो जायतां ततस्तेन पुत्रेण त्वां यजै त्वामु-दिश्य यज्ञं करवाणीति ।

प्रार्थनाप्रकारं नारदोपदेशमुक्त्वा हरिश्चन्द्रवृत्तान्तं दर्शयति—

तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति तथेति तस्य पुत्रो जज्ञे रोहितो नाम, इति ।

नारदोपदेशमङ्गीकृत्य हरिश्चन्द्रो वरुणमुपससार प्रार्थयामास । स वरुणोऽपि तथाऽस्त्विति तदीयपुत्रोत्पत्त्यै वरं दत्तवान् । तेन च वरेणोत्पन्नस्य रोहित इत्येतन्नामाभूत् ।

अथ बहुभिः पर्यायैर्वरुणस्योक्तिर्हरिश्चन्द्रस्य प्रत्युक्तिश्चेत्युभयं प्रतिपाद्यते । तत्र प्रथमं पर्यायं दर्शयति—

तं होवाचाजनि वै ते पुत्रो यजस्व माऽनेनेति स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशो न्वस्त्वथ त्वा यजा इति तथेति, इति ।

तं हरिश्चन्द्रं वरुण उवाच । हे हरिश्चन्द्र ते पुत्रोऽजनि वा उत्पन्न एवानेन पुत्रेण मामुद्दिश्य यागं कुर्विति । एवं वरुणेनोक्ते हरिश्चन्द्रः पुनः प्रत्युवाच । यागार्थः पशुर्यदा निर्दशो भवति तदा स पशुर्मेध्यो यागयोग्यो भवति । निर्गतान्यशौचदिनानि दशसंख्याकानि यस्मात्पशोः सोऽयं निर्दशः । तस्मादयं नु क्षिप्रं निर्दशोऽस्तु । अथानन्तरं त्वा प्रत्यहं यजा इत्येतद्वाक्यं वरुणस्तथाऽस्त्वित्यङ्गी चकार ।

द्वितीयमुक्तिप्रत्युक्तिपर्यायं दर्शयति—

स ह निर्दश आस तं होवाच निर्दशो न्वभूद्यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ता जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य जायन्तामथ त्वा यजा इति तथेति, इति ।

दशदिनाशौचापगमे शुद्धत्वाद्यथा यागयोग्यत्वं तथा दन्तोत्पन्नत्वादवयवसंपूर्त्या यागयोग्यत्वमित्यभिप्रायः । स्पष्टमन्यत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयं पर्यायं दर्शयति—

तस्य ह दन्ता जज्ञिरे तं होवाचाज्ञत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ताः पद्यन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति तथेति, इति ।

अज्ञत वै जाता एव । पद्यन्ते पतन्ति । प्रथमोत्पन्नानां दन्तानामस्थायित्वेन मुख्यपश्ववयवत्वाभावात्तत्पाते सति पशोर्मेध्यत्वम् ।

चतुर्थं पर्यायं दर्शयति—

तस्य ह दन्ता पेदिरे तं होवाचापत्सत वा अस्य दन्ता यजस्व माऽनेनेति स होवाच यदा वै पशोर्दन्ताः पुनर्जायन्तेऽथ स मेध्यो भवति दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति तथेति, इति ।

अपत्सत वै पतिताः । पुनरुत्पन्नानां दन्तानां स्थिरत्वेन संपूर्णावयवत्वात्पशोर्मेध्यत्वम् ।

पञ्चमं पर्यायं दर्शयति—

तस्य ह दन्ताः पुनर्जज्ञिरे तं होवाचाज्ञत वा अस्य पुनर्दन्ता यजस्व माऽनेनेति स होवाच यदा वै क्षत्रियः सांनाहुको भवत्यथ स मेध्यो भवति संनाहं नु प्राप्नोत्वथ त्वा यजा इति तथेति, इति ।

अज्ञत वै जाता एव । पश्वन्तरस्य पुनर्दन्तोत्पत्तिमात्रेण मेध्यत्वेऽप्यस्य पशोः क्षत्रियत्वात्स्वजात्युचितधनुर्बाणकवचादिसंनाहशीलित्वे सति जात्युचितव्यापारसंपूर्तौ मेध्यत्वम् । तस्मान्नु क्षिप्रमेवासौ संनाहं प्राप्नोत्वनन्तरमेव यजा इत्युत्तरं वरुणोऽङ्गी चकार ।

षष्ठं पर्यायं दर्शयति—

स ह संनाहं प्रापत्तं होवाच संनाहं नु प्रापद्यजस्व माऽनेनेति स तथेत्युक्त्वा पुत्रमामन्त्रयामास ततायं



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वै मह्यं त्वामददादहन्त त्वयाऽहमिमं यजा इति, इति।

संनाहमाप्तेरूर्ध्वं स हरिश्चन्द्रो वरुणोक्तिमङ्गीकृत्य पुत्रमामन्त्र्यैवमुवाच। उपलालनार्थं पुत्रे पितृवाचिततशब्दप्रयोगः। हे तत हे पुत्रायमेव वरुणो मह्यं त्वां पुत्रवरेण दत्तवान्। हन्त दुष्टोऽहमिमं वरुणं यत्त्वया पुत्रेण यजै यागद्वारा पूजां करवाणीति हरिश्चन्द्रस्योक्तिः।

अथ रोहितनाम्नः पुत्रस्य कृत्यं दर्शयति—

स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ स संवत्सरमरण्ये चचार ॥ १४ ॥ इति।

स ह स खलु रोहिताख्यः पुत्रः पितुर्वाक्यं निषिध्य स्वरक्षणार्थं धनुः स्वीकृत्यारण्यं प्रत्युपगतोऽभूत्। कस्मिंश्चिदरण्ये नैरन्तर्येण स रोहितः संवत्सरं चचारेति।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये द्वितीयः खण्डः॥ २ ॥ (१४) [१३७]।

रोहितस्यारण्ये संवत्सरचरणानन्तरं(र)भाविनं हरिश्चन्द्रादीनां वृत्तान्तं दर्शयति—

अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं जज्ञे तदु ह रोहितः शुश्राव सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

नानाश्रान्ताय श्रीरस्तीति रोहित शुश्रुम।

पापो नृषद्वरो जन इन्द्र इच्चरतः सखा चरैवेति, इति।

अथ रोहितस्यारण्ये संवत्सरवासानन्तरमेवैक्ष्वाकमिक्ष्वाकुवंशोत्पन्नं हरिश्चन्द्रं वरुणो देवो रोगरूपेण जग्राह। वरुणेन गृहीतस्य हरिश्चन्द्रस्योदरं जज्ञे जलेन पूरितमुच्छूनं महोदरनामकं रोगस्वरूपमुत्पन्नम्। तदु ह तदपि सर्वमरण्ये स्थितो रोहितः पुत्रो मनुष्यमुखाच्छुश्राव। श्रुत्वा च स रोहितः पितरं द्रष्टुमरण्याद्ग्रामं प्रत्याजगाम। आगच्छन्तं रोहितं मार्गमध्य इन्द्रः केनचिद्ब्राह्मण-

१ ग. घ. ङ. च. छ. झ. ञ. 'ण्यमपा'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



षरूपेण प्राप्येदमुक्तवान् । आ समन्ताच्छ्रान्त आश्रान्तः सर्वत्र पर्यटनेन श्रान्ति प्राप्तस्तद्विपरीतोऽनाश्रान्त एकत्रैव निवासशीलस्तादृशाय तथाविधस्य पुरुषस्य श्रीर्बहुविधा संपन्नास्ति । यद्वा नानेति पदच्छेदः । श्रान्ताय सर्वत्र पर्यटनेन श्रान्तस्य नाना श्रीर्बहुविधा संपदस्तीत्यनेन प्रकारेण रोहित वयं नीतिकुशलानां पुरुषाणां मुखाच्छुश्रुम । वरो जनो विद्यादिभिः श्रेष्ठोऽपि पुरुषो नृपत्पापो नृषु मनुष्येषु सीदतीति नृषत् । श्रेष्ठोऽपि बन्धुगृहेषु सर्वदाऽवस्थितस्तैरवज्ञातः पापस्तुच्छो भवेत् । अतस्तव पितृगृहे वासो न युक्तः । न चारण्ये चरतो मम सहायो नास्तीति शङ्कनीयम् । इन्द्र एवं परमेश्वर एव चरतस्तव सखा भविष्यति । तस्माच्चरैव सर्वथाऽरण्ये चरस्वेत्येवमुवाच । एवं उत्तरेष्वपि पर्यायेषु द्रष्टव्यम् ।

तत्रेन्द्ररोहितयोः संवादे प्रथमं पर्यायं दर्शयित्वा द्वितीयं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह द्वितीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः ।
शेरेऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हतश्चरैवेति, इति ।

ब्राह्मणरूपस्येन्द्रस्य वाक्यं श्रुत्वा ब्राह्मणोऽयमरण्ये चरैवेत्येवं मामुक्तवानिति मनसि ब्राह्मणवाक्ये महान्तमादरं कृत्वा पुनरप्येकं संवत्सरमरण्ये चरित्वा पश्चात्पितरं द्रष्टुं ग्रामं तमागच्छन्तं पुनरपीन्द्रो ब्राह्मणरूपेणाऽऽगत्यैवमुवाच । चरतः पर्यटनं कुर्वतः पुरुषस्य जङ्घे पुष्पिण्यौ भवतः । यथा पुष्पयुक्तो वृक्षः शाखा लता वाऽथवा सुगन्धोपेता सेव्या भवत्येवं चरतो जङ्घे श्रमजयेन सेव्ये भवतः । तथैवाऽऽत्मा मध्यदेहो भूष्णुर्वर्धिष्णुः फलग्रहिरारोग्यरूपफलयुक्तो भवति । यथा वर्धमानो वृक्षः कालेन फलानि गृह्णात्येवं चरतः पुरुषस्य बीजादिदीपनादिपाटवेन मध्यदेह आरोग्यरूपं फलं गृह्णाति । तथैवास्य चरतः पुरुषस्य सर्वे पाप्मानः सर्वपापानि प्रपथे प्रकृष्टे तीर्थक्षेत्रादिमार्गे श्रमेण तत्तद्देवतादिदर्शने तीर्थयात्रादिप्रयासेन हता विनाशिताः सन्तः शेरे शेरते शयाना इव भवन्ति । यथा शयानाः पुरुषाः स्वकार्यं कृषिवाणिज्यादिकं कर्तुमशक्ता एवं पुण्येन विनष्टाः पाप्मानो नरकं दातुमसमर्था इत्यर्थः । तस्मात्सर्वथाऽरण्ये चर न पितुर्गृहेऽवतिष्ठस्व ।

१ क. ख. झ. ञ. °भा संपदस्ति सं° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह तृतीयं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

आस्ते भग आसीनस्योर्ध्वस्तिष्ठति तिष्ठतः।
शेते निपद्यमानस्य चराति चरतो भगश्चरैवेति, इति।

भगः सौभाग्यमासीनस्योपविष्टस्याऽऽस्ते तथैव तिष्ठति न तु वर्धते। अभिवृद्धिहेतोरुद्योगस्याभावात्। तिष्ठत उपवेशनं परित्यज्योत्थापनं कुर्वतः पुरुषस्य भग ऊर्ध्वोऽभिवृद्धेरुन्मुखस्तिष्ठति। कृषिवाणिज्याद्युद्योगस्य संभावितत्वात्। निपद्यमानस्य भूमौ शयानस्य भगः शेते निद्रां करोति। विद्यमानधनरक्षादिचिन्ताया अप्यभावात्सर्वथैव विनश्यति। चरतस्तेषु तेषु देशेष्वर्जनार्थं पर्यटनं कुर्वतः पुरुषस्य भगः सौभाग्यं चरति दिने दिने वर्धते। तस्मात्त्वं चरैवेति न त्वेकत्र तिष्ठ।

चतुर्थं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह चतुर्थं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

कलिः शयानो भवति संजिहानस्तु द्वापरः।
उत्तिष्ठंस्त्रेता भवति कृतं संपद्यते चरंश्चरैवेति, इति।

चतस्रः पुरुषस्यावस्थाः। निद्रा तत्परित्याग उत्थानं संचरणं चेति। ताश्चोत्तरोत्तरश्रेष्ठत्वात्कलिद्वापरत्रेताकृतयुगैः समानाः। ततश्चरणस्य सर्वोत्तमत्वाच्चरैवेति।

पञ्चमं पर्यायं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह पञ्चमं संवत्सरमरण्ये चचार सोऽरण्याद्ग्राममेयाय तमिन्द्रः पुरुषरूपेण पर्येत्योवाच—

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरंश्चरैवेति, इति ।

चरन्नेव पुरुषः क्वचिद्वृक्षाग्रे मधु माक्षिकं लभते । क्वचित्स्वादु मधुरमुदुम्बरादिफलविशेषं लभते । एतदुभयमुपलक्षणम् । तत्र तत्र विद्यमानं भोगविशेषं लभते । तत्र सूर्यो दृष्टान्तः । यः सूर्यः सर्वत्र चरन्नपि न तन्द्रयते कदाचिदप्यलसो न भवति तस्य सूर्यस्य श्रेमाणं :श्रेष्ठत्वं जगद्वन्द्यत्वं पश्य । तस्माच्चरैव ।

इत्थमिन्द्रकृतेन रोहितोपदेशेन चरतो रोहितस्य स्वजीवने पितुरारोग्ये च कारणभूतं श्रेयोलाभं दर्शयति—

चरैवेति वै मा ब्राह्मणोऽवोचदिति ह षष्ठं संवत्सरमरण्ये चचार सोऽजीगर्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय, इति ।

षष्ठे संवत्सरे पूर्ववदरण्यसंचारी स ह रोहितः कंचिदृषिं तस्मिन्नरण्य उपेयाय प्राप्तवान् । कीदृशमृषिमजीगर्तनामकं सूयवसस्य पुत्रमशनया परीतमन्नाभावेन क्षुत्पीडितम् ।

अथाजीगर्तरोहितयोः संवादं दर्शयति—

तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेपः शुनोलाङ्गूल इति तं होवाच ऋषेऽहं ते शतं ददाम्यहमेषामेकेनाऽऽत्मानं निष्क्रीणा इति स ज्येष्ठं पुत्रं निगृह्णान उवाच नन्विममिति नो एवेममिति कनिष्ठं माता तौ ह मध्यमे संपादयांचक्रतुः शुनःशेपे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद्ग्राममेयाय, इति ।

तस्याजीगर्तस्य शुनःपुच्छादिनामकास्त्रयः पुत्रा आसुः । पुत्रवन्तमृषिं रोहित उवाच । हे ऋषे ते तुभ्यमहं गवां शतं ददामि । ( * दत्त्वा चाहमेषां पुत्राणां मध्य एकेन केनचित्पुत्रेणाऽऽत्मानं मदेहं वरुणान्निष्क्रीणै मूल्यं दत्त्वाऽऽत्मानं मोचयामीति । एवमुक्तः सोऽजीगर्तो) ज्येष्ठं पुत्रं शुनःपुच्छनामकं हस्तेन निगृह्णानः स्वसमीपे समाकर्षन्रोहितं प्रत्येयमुवाच । तुभ्यमेकः पुत्रो दीयत इमं

* धनुश्चिह्नान्तर्गता पङ्क्तिः सर्वपुस्तकेषु नोपलभ्यते परं चापेक्षितत्वाद्विरचिता ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तु शुनःपुच्छं तु न ददामि । मम प्रियत्वादिति । ततो माता कनिष्ठं गृहीत्वैवमुवाच । इमं शुनोलाङ्गूलं मम प्रियं नो एव सर्वथा न ददामीति । ततस्तावुभौ मातापितरौ मध्यमे पुत्रे शुनःशेपे दानं संपादयांचक्रतुरङ्गीकृतवन्तौ । ततस्तस्याजीगर्तस्य स रोहितो गवां शतं दत्त्वा तं शुनःशेपमादाय स्थितः । ततः स रोहितस्तेन शुनःशेपेन सहारण्यात्स्वकीयं ग्रामं प्रत्याजगाम ।

तदागमनादूर्ध्वकालीनं वृत्तान्तं दर्शयति—

स पितरमेत्योवाच तत हन्ताहमनेनाऽऽत्मानं निष्क्रीणा इति स वरुणं राजानमुपससारानेन त्वा यजा इति तथेति भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाच तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच तमेतमभिषेचनीये पुरुषं पशुमालेभे ॥ १५ ॥ इति ।

स रोहितः पितरमागत्यैवमुवाच । हे तत पितर्हन्ताऽऽवयोर्हर्षः संपन्नः । अहमनेन शुनःशेपरूपेण मूल्येनाऽऽत्मानं मद्देहं वरुणान्निष्क्रीणै मूल्यं दत्त्वाऽऽत्मानं मोचयामीत्यर्थः । तथोक्ते स हरिश्चन्द्रो वरुणमुपेत्यानेन शुनःशेपेन ब्राह्मणेन त्वा त्वां यक्ष्यामीत्युक्तवान् । स वरुणोऽपि तथेत्यङ्गीकृत्यैवमब्रवीत् । क्षत्रियात्तव पुत्राद्रोहितादप्ययं ब्राह्मणो भूयानभ्यधिक एव मम प्रिय इति । उक्त्वा तस्मै हरिश्चन्द्राय कर्तव्यत्वेन राजसूयमुपदिदेश च । स हरिश्चन्द्रो राजसूयं प्रक्रम्य तस्य मध्ये योऽयमभिषेचनीयाख्य एकाहः सोमयागस्तस्मिंस्तमेतं शुनःशेपं पुरुषं पशुमालेभे सवनीयपशुत्वेनाऽऽलब्धुं निश्चितवान् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये तृतीयः खण्डः ॥३॥ (१५) [१३८]

---

हरिश्चन्द्रस्य राजसूयानुष्ठानं दर्शयति—

तस्य ह विश्वामित्रो होताऽऽसीज्जमदग्निरध्वर्युर्वसिष्ठो ब्रह्माऽयास्य उद्गाता तस्मा उपाकृताय नियोक्तारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं नियोक्ष्यामीति तस्मा अपरं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


शतं ददुस्तं स निनियोज, इति ।

विश्वामित्रादयो महर्षयस्तस्य हरिश्चन्द्रस्य यागे राजसूये होत्रादयश्चत्वारो महर्त्विज आसन् । तत्र जमदग्निरध्वर्युरभिषेचनीये सोमयागे तं शुनःशेपं सवनीयपशुत्वेनोपाकृतवान् । बर्हिर्युक्तया प्लक्षशाखया मन्त्रपुरःसरं समुपस्पृश्य स्वीकार उपाकरणम् । तत ऊर्ध्वं यूपबन्धनं नियोजनम् । तस्य क्रूरकर्मत्वादध्वर्युर्न नियोजने प्रवृत्तः । तत उपाकृतायास्मा उपाकरणेन संस्कृतस्य शौ(शु)नःशेपस्य नियोक्तारं यूपे बन्धनकर्तारं क्रूरं कंचिदपि पुरुषं न विविदुर्न लेभिरे । तदानीं सूयवसस्य पुत्रः शुनःशेपस्य पिता सोऽजीगर्त [उवाच]मह्यं पूर्वस्माच्छतादपरं गोशतं हे यजमानर्त्विजो दत्त ततोऽहमेनं शुनःशेपं यूपे नियोक्ष्यामि रशनया कट्यां शिरसि पादयोर्बद्ध्वा रशनाग्रस्य यूपे बन्धनं नियोजनं तदहं करिष्यामीति । तस्मा अजीगर्तायापरं गोशतं ददुः । तं च शुनःशेपं सोऽजीगर्तो निनियोज । धातोर्द्विर्भावं परित्यज्योपसर्गस्य द्विर्भावश्छान्दसः ।

अथ विशसनप्रवृत्तिं दर्शयति—

तस्मा उपाकृताय नियुक्तायाऽऽप्रीताय पर्यग्निकृताय विशासितारं न विविदुः स होवाचाजीगर्तः सौयवसिर्मह्यमपरं शतं दत्ताहमेनं विशसिष्यामीति तस्मा अपरं शतं ददुः सोऽसिं निःशान एयाय, इति ।

उपाकरणनियोजने पूर्वमुक्ते । आप्रीसंज्ञिताभिरेकादशभिः प्रयाजयाज्याभिर्यजनं तदाप्रीणनम् । दर्भरूपेणोल्मुकेन त्रिःप्रदक्षिणीकरणं तत्पर्यग्निकरणम् । तथाविधसंस्कारचतुष्टययुक्ताय तस्मै तस्य शुनःशेपस्य विशसितारं हिंसितारं पुरुषं क्रूरात्मानं कंचिदपि पुरुषं न लेभिरे । ततोऽजीगर्तः पूर्ववदपरं गोशतं गृहीत्वा मारयितुमसिं खड्गं निःशानो निशितं तीक्ष्णं कुर्वन्नेवोपाय जगाम ।

पितुरजीगर्तस्य ( शुनःशेपस्य ) वृत्तान्तं दर्शयति—

अथ ह शुनःशेप ईक्षांचक्रेऽमानुषमिव वै मा विशसिष्यन्ति हन्ताहं देवता उपधावामीति

१ ग. 'शाने नि' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



**स प्रजापतिमेव प्रथमं देवतानामुपससार कस्य नूनं कतमस्यामृतानामित्येतयर्चा, इति ।**

अथ पितुः पुत्रमारणोद्योगानन्तरं शुनःशेपः पुत्रो मनस्येवमीक्षांचक्रे वि[चा]रितवान् । अन्यत्र पर्यग्निकृतं पुरुषमारण्यांश्चोत्सृजन्ति । अहिंसाया इति श्रु[तेः] पर्यग्निकरणादूर्ध्वं मनुष्यं परित्यजन्ति । एते तु माममानुषमिव मनुष्यत्व[व्यति]रिक्तमजादिपशुमिव विशसिष्यन्ति मारयिष्यन्ति । हन्त हा कष्टमेतत्संपन्न[म्] अहमितःपरं रक्षार्थं देवता उपधावामि भजामीति विचार्य देवानां मध्ये प्र[थमं] मुख्यं प्रजापतिमेव कस्य नूनमित्यृचोपससार सेवितवान् ।

तस्य प्रजापतेः सहकारित्वेनाग्नेः सेवां दर्शयति—

**तं प्रजापतिरुवाचाग्निर्वै देवानां नेदिष्ठस्तमेवोपधावेति सोऽग्निमुपससाराग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा, इति ।**

तं सेवकं शुनःशेपं प्रजापतिरेवमुक्तवान् । अग्निः सर्वेषां देवानां नेदिष्ठः हविर्वहनेनातिसमीपवर्ती । अतस्तमेवोपास्स्वेत्युक्तः शुनःशेपोऽग्नेर्वयमित्यृचा[ऽग्नि]मुपासितवान् ।

तस्य चाग्नेः सहकारित्वेन सवितुरुपासनं दर्शयति—

**तमग्निरुवाच सविता वै प्रसवानामीशे तमेवोपधावेति स सवितारमुपससाराभि त्वा देव सवितरित्येतेन तृचेन, इति ।**

प्रसवानां सर्वेषु कार्येषु प्रेरणारूपाणामनुज्ञानात्सवितेशः स्वामी भवति । तस्मात्तमेवोपधावेत्यग्निनोपदिष्टोऽभि त्वेति तृचेन सवितारमुपासितवान् ।

तस्य च सवितुः सहकारित्वेन वरुणस्योपासनं दर्शयति—

**तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि तमेवोपधावेति स वरुणं राजानमुपससारात उत्तराभिरेकत्रिंशता, इति ।**

---

कस्य नूनं कतमस्यामृतानाम्०—१–२४–१ । अग्नेर्वयं प्रथमस्यामृतानाम्०—१–२४–२ । अभि त्वा देव सवितः०—१–२४–३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


हे शुनःशेप वरुणार्थं त्वं यूपे बद्धोऽस्यतो वरुणमुपास्स्वेति सवित्रोक्तः पूर्वस्मात्सवितृविषयात्तृचादुत्तराभिरेकत्रिंशत्संख्याकाभिर्ऋग्भिर्वरुणमुपासितवान् । न हि ते क्षत्रम् [ १–२४–६ ] इत्याद्याः सूक्तशेषभूता दशर्चो यच्चिद्धि ते विशः [ १–२९–१ ] इत्यादिकमेकविंशत्यृचं सूक्तमित्येवमेकत्रिंशत्संख्या द्रष्टव्या ।

तस्य च वरुणस्य सहकारित्वेन पुनरप्यग्नेरुपासनं दर्शयति—

तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या, इति ।

अयमग्निः सर्वेषां देवानां मुखं मुख्यस्थानीयः । अग्निद्वारेणैव सर्वैर्देवैर्हविःस्वीकारात् । अत एव प्रीत्या हविर्वहनादतिशयेन सुहृदयः । सुहृदयतमं तमग्निं नु क्षिप्रं स्तुहीति वरुणेनोक्तः पूर्वोक्ताभ्य ऋग्भ्य उत्तराभिर्द्वाविंशतिसंख्याकाभिर्ऋग्भिरग्निं तुष्टाव । वसिष्वाहीत्यादिकं [ १–२६–१ ] दशर्चं सूक्तम् । अश्वं नत्वा [ १–२७–१ ] इत्यादिकं त्रयोदशर्चं सूक्तम् । तत्रान्त्यां परित्यज्य वसिष्वसूक्तद्वयगता ऋचो द्वाविंशतिसंख्याकाः ।

अग्नेः सहकारित्वेन विश्वेषां देवानामुपासनं दर्शयति—

तमग्निरुवाच विश्वान्नु देवान्स्तुह्यथ त्वोत्स्रक्ष्याम इति स विश्वान्देवांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्य इत्येतयर्चा, इति ।

यद्यपि वरुणपाशेन बद्धत्वाद्वरुण एव शुनःशेपमुत्स्रष्टुं समर्थस्तथाऽप्यग्न्यादीनां सहकारित्ववचनं दार्ढ्यार्थं द्रष्टव्यम् । विश्वे देवा गणरूपा न भवन्ति किंतु सर्वे देवास्तान्नमो महद्भ्य इत्येतयर्चोपासितवान् ।

तेषां च विश्वेषां देवानां सहकारित्वेनेन्द्रस्योपासनं दर्शयति—

तं विश्वे देवा ऊचुरिन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स इन्द्रं तुष्टाव

---

नमो महद्भ्यो नमो अर्भकेभ्यः० — १–२७–१३ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनो-त्तरस्य च पञ्चदशभिः, इति ।

ओजोबलादिशब्दाः पूर्वाचार्यैरेवं व्याख्याताः—

" ओजो दीप्तिर्बलं दाक्ष्यं प्रसह्यकरणं सहः ।

सुजनः सम्पारयिष्णुरुपक्रान्तसमाप्तिकृत् " ॥ इति ।

इष्ठप्रत्ययतमप्प्रत्ययाभ्यां तत्र तत्रातिशय उच्यते । तादृशमिन्द्रं यच्चिद्धि सत्य सोमपा इत्यनेन संपूर्णेन सूक्तेनोत्तरस्मिन्नप्याव इन्द्रमित्यादिके तृत्यृचे सूक्ते पञ्चदशभिर्ऋग्भिश्च तुष्टाव । पूर्वमप्यनुग्रहेण चैवैतयेत्यभि-हितं प्रत्युपदिदेश ।

तस्योपदेशस्य फलपर्यवसायित्वमनुस्मरतस्तस्येन्द्रस्य शुनःशेपस्तुत्यतिशयं दर्शयति—

तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ तमेतया प्रतीयाय शश्वदिन्द्र इति, इति ।

शुनःशेपेनेन्द्रः स्तूयमानः प्रीतो भूत्वा तस्मै शुनःशेपाय सुवर्णमयं रथमारोहणार्थं स्वकीयेन मनसैव ददौ । शुनःशेपोऽपि तदीयमनुग्रहं पूर्वोक्ताभ्यः पञ्चदशभ्य उत्तरया शश्वदिन्द्र इत्येतयर्चा तं रथं प्रतीयाय सैव प्रतिजगाम ।

इन्द्रस्य सहकारित्वेनाश्विनोरुपासनं दर्शयति—

तमिन्द्र उवाचाश्विनौ नु स्तुह्यथ त्वोत्स्रक्ष्याम इति सोऽश्विनौ तुष्टावात उत्तरेण तृचेन, इति ।

पूर्वोक्तायाः शश्वदिन्द्र इत्यस्या उत्तरेणाऽऽश्विनावश्वावत्या [१-३०-] इति तृचेनाश्विनौ स्तुतवान् ।

अश्विनोः सहकारित्वेनोपस उपास्तिं दर्शयति—

तमश्विना ऊचतुरुषसं नु स्तुह्यथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन, इति ।

---

यच्चिद्धि सत्य सोमपाः०—१–२९–१ । शश्वदिन्द्रः पोप्रुथद्भिर्जिगाय— ३०–१६ ।

---

१ ख. सर्वेण ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कस्त उपः [ १-३०-२० ] इत्यादिक उत्तरस्तृचः ।

अथोक्तानां सर्वासां देवतानामनुग्रहेण शुनःशेपस्य बन्धमोक्षं हरिश्चन्द्रस्याऽऽरोग्यं च दर्शयति—

तस्य ह स्मर्च्यृच्युक्तायां वि पाशो मुमुचे कनीय ऐक्ष्वाकस्योदरं भवत्युत्तमस्यामेवर्च्युक्तायां वि पाशे मुमुचेऽगद ऐक्ष्वाक आस ॥ १६ ॥ इति ।

तस्य पूर्वोक्तस्य तृचस्य संबन्धिन्यामृच्यृच्येकैकस्यामृच्युक्तायां क्रमेण शुनःशेपस्य पाशो विमुमुचे विशेषेण मुक्तोऽभूत् । ऐक्ष्वाकस्य हरिश्चन्द्रस्य यन्महोदरं तदपि क्रमेण कनीयोऽत्यल्पं भवति । उत्तमस्यामृच्युक्तायां पाशो विमुमुच एव सर्वात्मना मुक्तोऽभूत् । ऐक्ष्वाकोऽप्यगदो निःशेषेण रोगरहित आस ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ ( १६ ) [ १३९ ] ।

---

बन्धनान्मुक्तस्य शुनःशेपस्योत्तरकालीनं वृत्तान्तं दर्शयति—

तमृत्विज ऊचुस्त्वमेव नोऽस्याह्नः संस्थामधिगच्छेत्यथ हैतं शुनःशेपोऽञ्जःसवं ददर्श तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्वं गृहे गृह इत्यथैनं द्रोणकलशमभ्यवनिनायोच्छिष्टं चम्वोर्भरेत्येतयर्चाऽथ हास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभिः स स्वाहाकाराभिर्जुहवांचकाराथैनमवभृथमभ्यवनिनाय त्वं नो अग्ने वरुणस्य विद्वानित्येताभ्यामथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयांचकार शुनश्चिच्छेपं निदितं सहस्रादिति, इति ।

---

यच्चिद्धि त्वं गृहे गृहे०—१-२८-५ । उच्छिष्टं चम्वोर्भर०—१-२८-९ । त्वं नो अग्ने वरुणस्य विद्वान्—४-१-४ । शुनश्चिच्छेपं निदितं सहस्रात्०-५-२-७ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवतानुग्रहयुक्तं तं शुनःशेपं विश्वामित्रादयः सर्व ऋत्विज एवमूचुः। शुनःशेप त्वमेव नोऽस्माकमस्याह्नोऽभिषेचनीयाख्यस्य संस्थां समाप्तिमपि गच्छ प्राप्नुहि। अनुष्ठापयेत्यर्थः। तैरेवमुक्ते सत्यनन्तरं शुनःशेप एतमभिषेचनीयाख्यं सोमयागमञ्जःसवं ददर्श। अञ्जसर्जुमार्गेण सवः सोमाभिषवो यस्मिन्यागे सोऽञ्जःसवस्तादृशं प्रयोगप्रकारं निश्चितवान्। निश्चित्य च सोमं यच्चिद्धीत्यादिभिश्चतसृभिर्ऋग्भिरभिषुतं कृतवान्। अथैनमभिषुतं सोममेतमोच्छिष्टं चम्वोरित्यृचा द्रोणकलशमभिलक्ष्यावनिनाय द्रोणकलशे प्रक्षिप्तवान्। अथानन्तरमस्मिन्हरिश्चन्द्रेणान्वारब्धे शुनःशेपदेहमुपस्पृष्टवति सत्युक्ताभ्य ऋग्भ्यः पूर्वाभिर्यत्र ग्रावेत्यादिभिश्चतसृभिर्ऋग्भिः स्वाहाकारसहिताभिः सोमं जुहवांचकार। यत्र ग्रावेत्यादिकं सूक्तं नवर्चं तत्र यच्चिद्धीति पञ्चमी तामारभ्य चतसृभिर्ऋग्भिराभिषवः। उच्छिष्टमित्यादिका नवमी तया द्रोणकलशे प्रक्षेपः। यत्र ग्रावेत्यादिभिश्चतसृभिर्होम इत्येवं कृत्स्नस्य सूक्तस्य विनियोगः। अथ होमानन्तरमेव कर्तव्यमवभृथमभिलक्ष्यावनिनाय सर्वमवभृथसाधनं तत्र नीत्वा त्वं नो अग्न इत्यादिकाभ्यामृग्भ्यामवभृथयागं कृतवान्। अथ तथा कृत्वा तत ऊर्ध्वमेनमाहवनीयमग्निं शुनश्चिदित्यानोपस्थापयांचकार हरिश्चन्द्रमुपस्थाने प्रेरयामास। सोऽयमञ्जःसवः। इष्टिपशुसांकर्यमन्तरेणाञ्जसर्जुमार्गेणानुतिष्ठत्वात्।

विश्वामित्राजीगर्तयोः कंचित्संवादं दर्शयति—

अथ ह शुनःशेपो विश्वामित्रस्याङ्कमाससाद स होवाचाजीगर्तः सौयवसिर्ऋषे पुनर्मे पुत्रं देहीति नेति होवाच विश्वामित्रो देवा वा इमं मह्यमरासतेति स ह देवरातो वैश्वामित्र आस तस्यैते कापिलेयबाभ्रवाः, इति।

अथाभिषेचनीयसमाप्तेरनन्तरं हरिश्चन्द्रसहितेष्वृत्विक्षु विस्मितेषु स शुनःशेप इत ऊर्ध्वं कस्य पुत्रोऽस्त्विति विचारे सति तदीयेच्छैव नियामिकेति महर्षीणां वचनं श्रुत्वा शुनःशेपः स्वेच्छया विश्वामित्रपुत्रत्वमङ्गीकृत्य सहसा तदीयमङ्कमाससाद। पुत्रो हि सर्वत्र पितुरङ्के निषीदति। तदानीं सूयवसः पुत्रोऽजीगर्तो विश्वामित्रं प्रत्येवमुवाच। हे महर्षे मदीयपुत्रमेनं पुनरपि मह्यं

१ झ. °मप्स्व°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


देहीति। स विश्वामित्रो नेति निराकृत्यैवमुवाच। प्रजापत्यादयो देवा एवेमं शुनःशेपं मह्यमरासत दत्तवन्तस्तस्मात्तुभ्यं न दास्यामीति। स च शुनःशेपो देवैर्दत्तत्वाद्देवरात इति नामधारी विश्वामित्रपुत्र एवाऽऽस। तस्य च देवरातस्यैते कपिलगोत्रोत्पन्ना बभ्रुगोत्रोत्पन्नाश्च बन्धवोऽभवन्।

अथ शुनःशेपाजीगर्तयोः संवादं दर्शयति—

स होवाचाजीगर्तः सौयवसिस्त्वं वेहि विह्वयावहा इति स होवाचाजीगर्तः सौयवसिराङ्गिरसो जन्मनाऽस्याजीगर्तिः श्रुतः कविः। ऋषे पैतामहात्तन्तोर्माऽपगाः पुनरेहि मामिति स होवाच शुनःशेपोऽदर्शुस्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत। गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिर इति, इति।

विश्वामित्रेण निराकृतः सोऽजीगर्तः शुनःशेपं प्रत्येवमुवाच। हे पुत्र त्वं वा त्वमेव विश्वामित्रादपगतः सन्निह्यस्मद्गृहे गच्छ। त्वदीयमाता चाहं चोभावावां विह्वयावहै विशेषेण तवाऽऽह्वानं करवावहै। इत्युक्त्वा तूष्णीमवस्थितं तं शुनःशेपं प्रति पुनरपि कयाचिद्गाथयैवमुवाच। हे शुनःशेप त्वं जन्मनाऽऽङ्गिरसोऽङ्गिरोगोत्रोत्पन्न आजीगर्तिरजीगर्तस्य पुत्रः कविर्विद्वांश्श्रुत इत्येवं सर्वत्र प्रसिद्धः। अतो हे महर्षे शुनःशेप पैतामहात्पितामहेन प्रजापतिना संपादितात्तन्तोः संतानादङ्गिरोवंशान्माऽपगा अपगतो मा भव। तस्मात्पुनरपि मामेहि मद्गृहे समागच्छेत्युक्तः शुनःशेपः स्वयमपि गाथया प्रत्युत्तरं ददौ। शासो विशसनहेतुः खड्गः। हेऽजीगर्त मद्वधाय शासहस्तं खड्गहस्तं त्वां सर्वेऽप्यदर्शुर्दृष्टवन्तः। यत्क्रूरं कर्म शूद्रेष्वत्यन्तनीचेष्वपि नालप्सत न लब्धवन्तो लौकिका जनास्तादृशं क्रौर्यं त्वया कृतम्। हेऽङ्गिर आङ्गिरसगोत्रोत्पन्नाजीगर्त मन्मां निमित्तीकृत्य त्वं गवां शतानि त्रीण्यवृणीथा वृतवानसि। तदिदमत्यन्तकष्टमित्युक्तवान्।

पुनरप्यजीगर्तशुनःशेपयोरुक्तिप्रत्युक्ती दर्शयति—

स होवाचाजीगर्तः सौयवसिस्तद्वै मा तात तपति पापं कर्म मया कृतम्। तदहं निह्नुवे[1] तुभ्यं

१ क. ग. घ. ङ. च. छ, झ. ञ. निह्नवे।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतियन्तु शता गवामिति स होवाच शुनःशेपो यः सकृत्पापकं कुर्यात्कुर्यादेनत्ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतमिति, इति ।

शुनःशेपेनोपालब्धोऽजीगर्तः स्वकीयमनुतापं दर्शयितुं कांचिद्गाथामेवमुवाच । हे तात पितृवदुपलालनीय शुनःशेप मया यत्पापं कृतं तद्वै मा तपति तदेव मां मनसि संतप्तं करोति । अहं तत्पापं निह्नुवे[1] परिहरामि । गवां शतानि पूर्वं मया गृहीतानि त्रीणि यानि तानि तुभ्यं त्वदर्थं प्रतियन्तु प्रत्येकमेव प्राप्नुवन्तु । इतरयोः पुत्रयोर्गावो मा भूवंस्तवैव सर्वाः सन्त्विति । ततः स शुनःशेपो गाथया प्रत्युत्तरं ददौ । यः पुमान्धर्मशास्त्रभीतिरहितः सकृत्पापकं कुर्यात्स पुमांस्ततः पापादन्यदेनत्पापं तदभ्यासवशात्कुर्यादेव । त्वं तु शौद्रान्न्यायान्नीचजातिसंबन्धिनः क्रूरादाचरणान्नापागा अपगतो न भवसि । असंधेयं प्रतिसंधानरहितं पापं त्वया कृतमित्येषा शुनःशेपस्य प्रत्युक्तिः ।

अथ विश्वामित्रकृत्यं दर्शयति—

असंधेयमिति ह विश्वामित्र उपपपाद स होवाच विश्वामित्रो भीम एव सौयवसिः शासेन विशिशासिषुः । अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रतामिति, इति ।

असंधेयमप्रतिसमाधेयं पापमिति शुनःशेपेन यदीरितं तदेतदप्रतिसमाधेयत्वं विश्वामित्र उपपपाद युक्तिभिरुपपादितवान् । तदुपपादनार्थमेव विश्वामित्र इमां गाथामुवाच । सूयवसस्य पुत्रोऽजीगर्तो भीम एव भयहेतुरेव सञ्शासेन हस्तगतखड्गेन स विशिशासिपुरस्थाद्विशसनकर्तुमिच्छुरवस्थितवान् । अतो हे शुनःशेपैतस्य पापिष्ठस्य पुत्रो मा भूः किंतु ममैव पुत्रतामुपेहि ।

अथ शुनःशेपविश्वामित्रयोरुक्तिप्रत्युक्ती दर्शयति—

स होवाच शुनःशेपः स वै यथा नो ज्ञपयाऽऽराजपुत्र तथा वद । यथैवाऽऽङ्गिरसः सन्नुपेयां तव पुत्रतामिति स होवाच विश्वामित्रो ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात् । उपेया-

१ क. झ. ञ. निह्नवे ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दैवं मे दायं तेन वै त्वोपमन्त्रय इति, इति ।

विश्वामित्रेणैवं बोधितः शुनःशेपः पुनरपि गाथया विश्वामित्रं प्रत्येवमुवाच। अयं विश्वामित्रो जन्मना क्षत्रियः सन्स्वकीयेन तपोमहिम्ना ब्राह्मण्यं प्राप्तवानित्येवं तद्वृत्तान्तं सूचयितुं हे राजपुत्रेति संबोधितवान् । स वै तथाविधो राजजातीय एव सन्यथा येन प्रकारेण नोऽस्माभिः सर्वैरा समन्ताज्ज्ञपय ब्राह्मणत्वेन ज्ञायसे तथैवास्मद्विषयेऽपि त्वं वद । कथं वदितव्यमिति तदुच्यते । अहमिदानीमङ्गिरोगोत्रः संस्तत्परित्यागेन तव पुत्रत्वं येनैव प्रकारेणोपेयां तथैवानुगृहाणेति शेषः । एतद्वाक्याभिप्रायः पूर्वैः संक्षिप्य दर्शितः—

"पुराऽऽत्मानं नृपं विप्र(प्रं) तपसा कृतवानसि ।
एवमाङ्गिरसं मा त्वं वैश्वामित्रमृपे कुरु" ॥ इति ।

ततो विश्वामित्रो गाथया प्रत्युत्तरमुक्तवान्। हे शुनःशेप त्वं मे पुत्राणां मध्ये ज्येष्ठः स्या ज्येष्ठो भव । तव पुत्रादिरूपा प्रजाऽपीतरस्याः श्रेष्ठा स्यात् । मे मदीयं विश्वामित्राय दैवं देवैः प्रसन्नैर्दत्तं दायं पुत्रत्वरूपं लाभमुपेयाः प्राप्नुहि । तेन वै तेनैव प्रकारेण त्वोपमन्त्रये त्वां पुत्रत्वेन व्यवहरामि ।

पुनरपि शुनःशेपविश्वामित्रयोर्वृत्तान्तं दर्शयति—

स होवाच शुनःशेपः संज्ञानानेषु वै ब्रूयात्सौहार्दाय मे श्रियै । यथाऽहं भरतऋषभोपेयां तव पुत्रतामित्यथ ह विश्वामित्रः पुत्रानामन्त्रयामास मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः । ये के च भ्रातरः स्थ नास्मै ज्यैष्ठ्याय कल्पध्वमिति ॥ १७ ॥ इति ।

विश्वामित्रेण प्रलोभितः शुनःशेपः स्वकार्यदार्ढ्यार्थं गाथयैवमुवाच । संज्ञानानेषु मद्विषयैकमत्यं प्राप्तेषु त्वदीयपुत्रेषु [ स ]र्वोऽपि मां ब्रूयात् । ज्येष्ठभ्रातृत्वेन व्यवहरतु । तच्च मे मम सौहार्दाय भ्रातृभिरितरैः स्नेहातिशयाय श्रियै धनलाभाय च संपद्यते । हे भरतऋषभ भरतवंशश्रेष्ठ विश्वामित्राहं तव पुत्रतां यथोपेयां तथैवैतेषां पुत्राणामग्रेऽनुगृहाणेति शेषः . ततो विश्वामित्र इतरान्पुत्रानाहूय गाथयैवमाज्ञापितवान् । यो मधुच्छन्दा नाम यश्चर्षभो योऽपि रेणुर्योऽप्यष्टक एते मुख्या हे पुत्रकाः शृणोतन मदीयामाज्ञां शृणुत । केचियूयं सर्वे भ्रातरः स्थ ते सर्वेऽप्यस्मै शुनःशेपादस्मादपि ज्यैष्ठ्याय न कल्पध्वं

Digitized by Arya Samaj Foundation Chennai and eGangotri


ज्येष्ठत्वाभिमानं मा कुरुत । किंत्वसावेव युष्माकं मध्ये ज्येष्ठो भूत्वाऽवतिष्ठतामिति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (१७) [१४०]।

---

अथ विश्वामित्रपुत्राणां वृत्तान्तमाह—

तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पञ्चाशदेव ज्यायांसो मधुच्छन्दसः पञ्चाशत्कनीयांसः, इति ।

मधुच्छन्दोनामकः कश्चित्पुत्रो मध्यमस्ततोऽपि ज्येष्ठाः कनिष्ठाश्च प्रत्येकं पञ्चाशत्संख्याका इत्येवमेकशतं तस्य पुत्राः ।

तेषां मध्ये ज्येष्ठानां वृत्तान्तमाह—

तये ज्यायांसो न ते कुशलं मेनिरेताननु व्याजहारान्तान्वः प्रजा भक्षीष्टेति त एतेऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो वैश्वामित्रा दस्यूनां भूयिष्ठाः, इति ।

तत्तेष्वेकशतसंख्याकेषु पुत्रेषु मध्ये ये मधुच्छन्दसो ज्येष्ठाः पञ्चाशत्संख्याकाः सन्ति ते शुनःशेपस्य विश्वामित्रपुत्रत्वं कुशलं न मेनिर इदं समीचीनमित्येवं नाङ्गीकृतवन्तः । ताञ्ज्येष्ठान्पञ्चाशत्संख्याकाननुलक्ष्य विश्वामित्रो व्याजहार व्याहरणं शापरूपं वाक्यमुक्तवान् । हे ज्येष्ठपुत्रा युष्माकं मदीयाज्ञातिलङ्घिनां प्रजाः पुत्रादिका अन्तान्भक्षीष्ट चण्डालादिरूपान्नीचजातिविशेषान्भजतामिति । त एते शप्ताः सन्तोऽन्ध्रत्वादिपञ्चविधनीचजातिविशेषा भवन्ति । इतिशब्दस्य तत्प्रदर्शनार्थत्वादन्येऽपि नीचजातिविशेषाः सर्वे विवक्षिताः । उद्गतोऽन्त उदन्तोऽत्यन्तनीचजातिस्तत्र भवा उदन्त्याः । ते बहवोऽनेकविधा वैश्वामित्रा विश्वामित्रसंततिजा दस्यूनां तस्कराणां मध्ये भूयिष्ठा अत्यधिकाः ।

ज्येष्ठानां वृत्तान्तमुक्त्वा मधुच्छन्दसस्तत्कनिष्ठानां च वृत्तान्तं गाथया दर्शयति—

स होवाच मधुच्छन्दाः पञ्चाशता सार्धं यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम् । पुरस्त्वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसीति, इति ।

कनिष्ठपुत्राणां पञ्चाशता सह मधुच्छन्दोनामकः स मध्यमः पुत्रः शुनःशेपं प्रत्येवमुवाच । हे शुनःशेप नोऽस्माकं पिता विश्वामित्रो यत्कार्यं त्वदीयज्येष्ठपुत्रत्वरूपं संजानीते सम्यग्जानात्यङ्गी करोति तस्मिन्कार्ये वयं तिष्ठामहे तत्कार्यमङ्गी कुर्मः । सर्वे वयं त्वा शुनःशेपनामानं त्वां पुरस्कुर्महे पुरस्कृत्य ज्येष्ठं कृत्वा वर्तामहे । त्वामन्वञ्चः शुनःशेपमनुगच्छन्तः स्मसि भवाम इत्युक्तवान् ।

विश्वामित्रवृत्तान्तं दर्शयति—

अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव, इति ।

अथ मधुच्छन्दःसहितानां पञ्चाशत्कनिष्ठपुत्राणां शुनःशेपविषयज्येष्ठपुत्रत्वाङ्गीकारानन्तरं स विश्वामित्रः प्रतीतस्तेषु प्रत्ययं मदनुकूला इति विश्वासं प्राप्तः प्रीत्या पुत्रान्गाथाभिस्तुष्टाव ।

तत्र प्रथमां गाथामाह—

ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ ।
ये मानं मेऽनुगृह्णन्तो वीरवन्तमकर्त मा, इति ।

हे मधुच्छन्दःप्रमुखाः कनिष्ठपुत्रा ये यूयं मे मानं मदीयं मतमनुगृह्णन्तोऽऽनुकूल्येन स्वीकुर्वन्तो मां विश्वामित्रं वीरवन्तं स्वधर्मशूरपुत्रयुक्तमकर्त कृतवन्तस्ते वै तादृशा यूयं बहुविधपुत्रयुक्ता बहुविधानुकूलपुत्रयुक्ताश्च भविष्यथ ।

द्वितीयां गाथामाह—

पुर एत्रा वीरवन्तो देवरातेन गाथिनाः ।
सर्वे राध्याः स्थ पुत्रा एष वः सद्विवाचनम्, इति ।

गाथिनशब्दो विश्वामित्रस्य पितरमाचष्टे । हे गाथिना गाथिपौत्राः पुर एत्रा युष्माकं पुरतो गन्त्रा मुख्येन देवरातेन सह यूयं सर्वे वीरवन्तः श्रेष्ठपुत्रयुक्ता राध्याः स्थ सर्वैः पुरुषैराराधनीयाः पूज्या भवथ । हे पुत्रा मधुच्छन्दःप्रभृतय एष देवरातो वो युष्माकं सद्विवाचनं सन्मार्गस्य विशेषतोऽध्यापनं करिष्यतीति शेषः ।

तृतीयां गाथामाह—

एष वः कुशिका वीरो देवरातस्तमन्वित । युष्मांश्च
दायं म उपेता विद्यां यामु च विद्मसि, इति ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


हे कुशिकाः कुशिकनाम्नो मत्पितामहस्य संबन्धिनो मधुच्छन्दःप्रभृतय एष देवरातो वो युष्माकं ज्येष्ठभ्रातेति शेषः । तं देवरातं यूयमन्विताऽनुगता भवत । मे मदीयं दायं धनं युष्मांश्चोपेता प्राप्स्यति । चकाराद्देवरातं च । यामु च यामपि कांचिद्वेदशास्त्रादिरूपां विद्यां विद्मसि वयं जानीमः साऽपि युष्मानुपेता प्राप्स्यति ।

चतुर्थीं गाथामाह—

ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः ।
देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः, इति ।

हे वैश्वामित्रा विश्वामित्रस्य मम पुत्रा ये गाथिना गाथिपौत्रास्ते यूयं सर्वेऽपि सम्यञ्चः समीचीनबुद्धयो ये साकं देवरातेन सार्धं सरातयो रातिर्धनसंपत्तिस्तया युक्ताः सन्तो देवराताय मदीयश्रेष्ठपुत्रस्य देवरातस्य धृत्यै धारणं युष्मत्पोषणं श्रैष्ठ्याय युष्माकं मध्ये श्रेष्ठत्वं च तस्थिरेऽङ्गीकृतवन्तः ।

पञ्चमीं गाथामाह—

अधीयत देवरातो रिक्थयोरुभयोर्ऋषिः । जह्नूनां
चाऽऽधिपत्ये दैवे वेदे च गाथिनाम् , इति ।

इक् स्मरण इति धातुः । अधीयत स्मृतिकारैर्महार्षिभिः स्मर्यते । कथमिति तदुच्यते । अयं देवरातो द्व्यामुष्यायणत्वादुभयोरजीगर्तविश्वामित्रयोः संबन्धिनी ये रिक्थे धने तयोर्ऋषिर्द्रष्टा । तदुभयमर्हतीत्यर्थः । अजीगर्तस्य कूटस्थ ऋषिर्जह्नुसंज्ञकस्तस्य वंशे जाताः सर्वे जह्नवस्तेषां चाऽऽधिपत्ये स्वामित्वे देवरातो योग्यः । तथा दैवे देवसंबन्धिनि यागादिकर्मणि वेदे च मन्त्ररूपे समर्थः । गाथिनामस्मत्पितृवंशोत्पन्नानां च सर्वेषामाधिपत्ये योग्यः ।

तदेतत्परऋक्शतगाथं शौनःशेपमाख्यानम् , इति ।

उक्तमुपाख्यानमुपसंहरति—

कस्य नूनं निधारयेत्यन्ताः सप्ताधिकनवतिसंख्याका ऋचस्त्वं नः स त्वमित्यादिकास्तिस्र ऋच एवमृचां शतम् । परःशब्दोऽधिकवाची । पूर्वोक्तादृक्शतात्परोऽधिका एकत्रिंशत्संख्याका यं न्विममित्याद्या गाथा यस्मिन्नाख्याने तदेतत्परऋक्शतगाथम् । शुनःशेपेन दृष्टाः सप्ताधिकनवतिसंख्यायुक्ता ऋचो याः सन्त्यन्येन दृष्टास्तिस्र ऋचो याः सन्ति ब्राह्मणे प्रोक्ता एकत्रिंशद्गाथाविशेषा ये सन्ति तैः सर्वैरुपेत हरिश्चन्द्रो ह वैधस इत्यादिकं सर्वं शुनःशेपविषयमाख्यानम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तस्याऽऽख्यानस्य राजसूयक्रतौ विनियोगं दर्शयति—

**तद्धोता राज्ञेऽभिषिक्तायाऽऽचष्टे, इति ।**

राजसूयक्रतावभिषेचनीयाख्ये कर्मणि यदा राजाऽभिषिक्तो भवति तदानीं तस्मै राज्ञे तदाख्यानं होता कथयेत् ।

तत्रेतिकर्तव्यं दर्शयति—

**हिरण्यकशिपावासीन आचष्टे हिरण्यकशिपावासीनः प्रतिगृणाति यशो वै हिरण्यं यशसैवैनं तत्समर्धयति, इति ।**

होता यदोपाख्यानं कथयति तदानीं हिरण्यकशिपौ सुवर्णनिर्मितसूत्रैर्निष्पादिते कशिपौ स होतोपविशेत् । तदाख्यानमध्येऽध्वर्युश्च हिरण्यकशिपावासीनो वक्ष्यमाणं प्रतिगरं ब्रूयात् । हिरण्यस्य यशोहेतुत्वाद्यशस्त्वम् । तथा सत्येनं राजानं यशसैव समृद्धं करोति ।

अध्वर्युणा प्रयोक्तव्यं प्रतिगरविशेषं दर्शयति—

**ओमित्यृचः प्रतिगर एवं तथेति गाथाया ओमिति वै दैवं तथेति मानुषं दैवेन चैवैनं तन्मानुषेण च पापादेनसः प्रमुञ्चति, इति ।**

होत्रा प्रयुक्ताया एकैकस्या ऋचोऽन्तेऽध्वर्योरोमित्येतादृशः प्रतिगरो भवति । *ओमित्येतच्छन्दोरूपं दैवं देवैरङ्गीकारार्थे प्रयुज्यते । तत्तथेत्यन्तं ( तथेति ) मानुषं मनुष्या अङ्गीकारे तथेतिशब्दं प्रयुञ्जते । तत्तेन प्रतिगरेण दैवेन मानुषेण चाध्वर्युरेनं राजानं पापादैहिकादपकीर्तिरूपादेनसो नरकहेतोश्च प्रमुञ्चति प्रमुक्तं करोति ।

क्रत्वर्थत्वेनोपाख्यानं विधाय क्रतुनिरपेक्षपुरुषार्थत्वेन विधत्ते—

**तस्माद्यो राजा विजिती स्यादप्ययजमान आख्यापयेतैवैतच्छौनःशेपमाख्यानं न हास्मिन्नल्पं चनैनः परिशिष्यते, इति ।**

यस्मादुपाख्यानं पापप्रशमनहेतुस्तस्मादयजमानोऽपि राजसूयक्रतुरहितोऽपि राजा विजिती यदि विजयोपेतः स्यात्तदानीमेतच्छौनःशेपमाख्यानमाख्याप-

* अत्र किंचित्त्रुटितम् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


येत । तस्य राज्ञो यः कश्चिद्ब्राह्मण उपाख्यानं ब्रूयात् । तथा सति तस्मिन्नजनि अल्पं चन किंचिदप्येनः पापं न ह वै परिशिष्यते । सर्वं पापं नश्यतीत्यर्थः ।

आख्यानप्रयुक्तां दक्षिणां विधत्ते--

सहस्रमाख्यात्रे दद्याच्छतं प्रतिगरित्र एते चैवाऽऽसने श्वेतश्चाश्वतरीरथो होतुः, इति ।

योऽयमाख्याता होता तस्मै क्रत्वर्थदक्षिणामन्तरेणोपाख्यानप्रयुक्तां दक्षिणां गोसहस्ररूपां दद्यात् । प्रतिगरित्रेऽध्वर्यवे गोशतं दद्यात् । ये हिरण्यकशिपुरूपे द्वे आसने स्त एते अपि ताभ्यामेव दद्यात् । अश्वतरीभ्यां संकीर्णप्राणियुक्ताभ्यामधिकशक्तिभ्यां युक्तो रथोऽश्वतरीरथः । स च रजतेनालंकृतत्वाच्छ्वेतः । सोऽपि तादृशो होतुर्देयः ।

पूर्वप्रयज्ञसंयुक्तः कल्पो विजयिनो राज्ञोऽभिहितः । इदानीं पुत्रकामानामपि ( *सर्वेषामपि ) विधत्ते--

पुत्रकामा हाप्याख्यापयेरँल्लभन्ते ह पुत्राँल्लभन्ते ह पुत्रान् ॥ १८ ॥ इति ।

ये पुत्रकामाः सन्ति ते ह प्रसिद्धमेतदुपाख्यानमाख्यापयेरन्ब्राह्मणमुखाच्छृणुयुरित्यर्थः । ते पुत्राँल्लभन्ते । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये त्रयस्त्रिंशाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १८ ) [ १४१ ] ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

=====

अथ चतुस्त्रिंशोऽध्यायः ।

---

शौनःशेपप्रसङ्गेन याः क्रिया राजकर्तृकाः ।
तद्विशेषविधानार्थमध्यायोऽत्र प्रवक्ष्यते ॥

तत्राऽऽदौ किंचिदुपाख्यानमाह--

प्रजापतिर्यज्ञमसृजत यज्ञं सृष्टमनु ब्रह्मक्षत्रे

---

* धनुश्चिह्नान्तर्गतमधिकमिति प्रतिभाति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अमृज्येतां ब्रह्मक्षत्रे अनु द्व्यः प्रजा असृज्यन्त हुतादश्चाहुतादश्च ब्रह्मैवानु हुतादः क्षत्रमन्वहुताद एता वै प्रजा हुतादो यद्ब्राह्मणा अथैता अहुतादो यद्राजन्यो वैश्यः शूद्रः, इति ।

पुरा प्रजापतिर्ज्योतिष्टोमाख्यं यज्ञं सृष्ट्वा तदनन्तरं ब्राह्मणक्षत्रियजातिद्वयं तत ऊर्ध्वं हुतादश्चाहुतादश्चेत्युभयाविधाः प्रजा असृजत । तत्र ब्राह्मणजातिमेवानु तद्व्यक्तिभूता हुतादः सृष्टाः । क्षत्रियजातिमनु तद्व्यक्तिसजातीया अहुतादः प्रजाः सृष्टाः । ये ब्राह्मणाः सन्त्येताः प्रजा आर्त्विज्यसद्भावाद्धुतशेषमदन्ति भक्षयन्तीति हुतादः । ये राजन्यवैश्यशूद्रा एताः प्रजा आर्त्विज्याभावाद्धुतशेषं न भक्षयन्तीत्यहुतादः । इत्थं यज्ञं चतुरो वर्णांश्च स प्रजापतिः सृष्टवान् ।

अथ सृष्टस्य यज्ञस्य वृत्तान्तमाह—

ताभ्यो यज्ञ उदक्रामत्तं ब्रह्मक्षत्रे अन्वैतां यान्येव ब्रह्मण आयुधानि तैर्ब्रह्मान्वैद्यानि क्षत्रस्य तैः क्षत्रमेतानि वै ब्रह्मण आयुधानि यद्यज्ञायुधान्यथैतानि क्षत्रस्याऽऽयुधानि यदश्वरथः कवच इषुधन्व, इति ।

स यज्ञस्ताभ्यः प्रजाभ्योऽपरक्त उत्क्रम्य दूरेऽगच्छत् । तं गच्छन्तं यज्ञं ब्राह्मणजातिक्षत्रियजाती द्वे अन्वैतां पश्चादगच्छताम् । ब्राह्मणस्य योग्यानि यान्यायुधानि तैः सह क्षत्रिय(ब्राह्मण)जातिर्यज्ञमन्वगच्छत् । क्षत्रियस्य योग्यानि यान्यायुधानि तैः सह क्षत्रियजातिर्यज्ञमन्वगच्छत् । यानि यज्ञायुधत्वेन शाखान्तरे श्रूयन्ते—'स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या (म्या) चोलूखलं च मुसलं च दृषच्चोपला चैतानि वै दश यज्ञायुधानि' इति तान्येव ब्राह्मणजातेरुचितान्यायुधानि । योऽयमश्वयुक्तो रथो यश्च कवचो यदपि बाणयुक्तं धनुरेतान्यपि क्षत्रियजातेरुचितान्यायुधानि ।

यज्ञमनुगच्छन्त्योर्ब्राह्मणक्षत्रियजात्योर्मध्ये ब्राह्मणजातेर्यज्ञप्राप्तिं दर्शयति—

तं क्षत्रमनन्वाप्य न्यवर्तताऽऽयुधेभ्यो ह स्मास्य विजमानः पराङेवैत्यथैनं ब्रह्मान्वैत्तमाप्नोत्तमाप्त्वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


परस्तान्निरुध्यातिष्ठत्स आप्तः परस्तान्निरुद्धस्तिष्ठञ्ज्ञात्वा स्वान्यायुधानि ब्रह्मोपावर्तत तस्माद्धाप्येतर्हि यज्ञो ब्रह्मण्येव ब्राह्मणेषु प्रतिष्ठितः, इति ।

क्षत्रं क्षत्रियजातिस्तं यज्ञमनन्वाप्यानुगमनेन प्राप्तिमलब्ध्वा तस्मादनु न्यवर्तत । यज्ञोऽस्य क्षत्रियस्याऽऽयुधेभ्यो धनुरादिभ्यो विजमानो भीतिं वन्पराङेव पुनरावृत्तिरहित एवैति स्म पलाय्य दूरे गतः । अथानन्तरं ब्रह्म ब्राह्मणजातिरन्वैदन्वगच्छत् । अनुगम्य च तं यज्ञमाप्नोति स्म । च तं यज्ञमतिक्रम्य परस्तात्परभागे निरुध्य यज्ञगमनं प्रतिबु(ब)ध्यातिष्ठत् । न यज्ञ आप्तस्तथा ब्राह्मणजात्या प्राप्तः परस्तात्परभागे निरुद्धो गमन बद्धस्तत्रैव तिष्ठन्ब्राह्मणस्य हस्ते स्फ्यकपालादीनि स्वकीयान्यायुधानि ब्राह्मणजातिं प्रत्युपावर्तत समीप आगच्छत् । यस्मादेवं तस्मादिदानीं यज्ञो ब्रह्मण्येवाऽऽर्त्विज्ययोग्यायां ब्राह्मणजातावेव तत्रापि प्रयोक्तृ ब्राह्मणेषु प्रतिष्ठितो वर्तते ।

अथ क्षत्रियस्य यज्ञप्राप्तिं दर्शयति—

अथैनत्क्षत्रमन्वागच्छत्तदब्रवीदुप माऽस्मिन्यज्ञे ह्वयस्वेति तत्तथेत्यब्रवीत्तद्वै निधाय स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तस्वेति तथेति तत्क्षत्रं निधाय स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत तस्माद्धाप्येतर्हि क्षत्रियो यजमानो निधायैव स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तते ॥ १९ ॥ इति ।

अथ ब्राह्मणस्य यज्ञप्राप्तेरनन्तरमेनद्ब्रह्म ब्राह्मणजातिं क्षत्रं क्षत्रियजा न्वागच्छत् । आगत्य च तद्ब्रह्म प्रत्येवमब्रवीत् । हे ब्राह्मण मा क्षत्रियं न्यज्ञ उपह्वयस्वानुजानीहि मामाहूय यज्ञेन संयोजयेत्यर्थः । तदुक्तं कार्यं क स्त्विति ब्राह्मणोऽब्रवीत् । उक्त्वा च क्षत्रियायैवं बुद्धिप्रदानं कृतवान् क्षत्रिय तद्वै तथा सति तव यज्ञप्राप्तावपेक्षायां सत्यां स्वकीयानि धनुरा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


युधानि क्वचित्स्थापनीयानि । तान्यवस्थाप्य ब्राह्मणस्यैव योग्यैः स्फ्यकपालाद्यायुधैर्ब्राह्मणस्य योग्येन शान्तिश्रद्धालुत्वयुक्तेन रूपेण वेषेण च युक्तो ब्रह्म भूत्वा ब्राह्मणसदृशो भूत्वा यज्ञं प्रत्युपावर्तस्वेति । तत्क्षत्रं स च क्षत्रियस्तथेत्यङ्गीकृत्य स्वकीयानि धनुरादीन्यायुधानि परित्यज्य शान्तवेषेण यज्ञं प्राप्तवान् । यस्मादादिसृष्टावेवं संपन्नं तस्मादिदानीमपि क्षत्रियो ब्राह्मणवेषेण धनुरादिरहितेन यज्ञमनुतिष्ठति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ ( १९ ) [ १४२ ] ।

---

क्षत्रियस्य यज्ञप्राप्तिमुक्त्वा देवयजनलाभं वक्तुं प्रश्नमुद्भावयति—

**अथातो देवयजनस्यैव याच्ञस्तदाहुर्यद्ब्राह्मणो राजन्यो वैश्यो दीक्षिष्यमाणः क्षत्रियं देवयजनं याचति कं क्षत्रियो याचेदिति, इति ।**

अथ क्षत्रियस्य यज्ञेच्छानन्तरं यतो देवयजनमपेक्षितमतः कारणाद्देवयजनस्यैव देवा इज्यन्ते यस्मिन्देशे स देवयजनस्तस्यैव याच्ञो याचनमभिधीयत इति शेषः । तत्तत्र देवयजने ब्रह्मवादिनः प्रश्नमाहुः । यद्यस्मात्कारणाद्ब्राह्मणादयस्त्रयो वर्णाः क्षत्रियमभिषिक्तं राजानं प्रति देवयजनं याचन्ति तस्माद्राज्ञोऽपि देवयजनो याचितव्यः । क्षत्रियो राजा कमन्यं स्वामिनं याचेदिति प्रश्नः ।

तस्योत्तरमाह—

**दैवं क्षत्रं याचेदित्याहुरादित्यो वै दैवं क्षत्रमादित्य एषां भूतानामधिपतिः, इति ।**

राज्ञो मनुजेषु मध्ये स्वाम्यन्तराभावेऽपि देवसंबन्धिक्षत्रियजातेः स्वामित्वात्तत्रैव याचनमुचितमित्युत्तरमाहुः । योऽयमादित्योऽस्त्यसावेव दैवं देवसंबन्धि क्षत्रं क्षत्रियजातिः । अयमादित्य एषां प्राणिनां तमोनिवारणेनाधिष्ठाता पालयिता । ततः स्वामित्वात्तत्समीपे याचनमुचितम् ।

तस्य प्रकारं दर्शयति—

**स यदहर्दीक्षिष्यमाणो भवति तदहः पूर्वाह्ण एवो-**

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यन्तमादित्यमुपतिष्ठेतेदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमम् । देव सवितर्देवयजनं मे देहि देवयज्याया इति देवयजनं याचति, इति ।

स राजा यस्मिन्नेवाहनि दीक्षितुमुद्युक्तस्तस्याह्नः पूर्वाह्णकाल एवोयन्तमूर्ध्वं गच्छन्तमादित्यमृग्यजुर्भ्यामुपतिष्ठेत । इदं श्रेष्ठमित्यृचः प्रतीकम् । देव सवितरित्यादिकं यजुषः । हे देव सवितर्देवयज्यायै देवसंबन्धियागार्थं मे मह्यं देवयजनं देवोचितयागदेशं देहीत्यनेन प्रकारेण देशं याचेत् । ऋचोपस्थानं यजुषा याचनमिति व्यवस्थया द्रष्टव्यम् ।

राज्ञा याचितस्याऽऽदित्यस्य प्रत्युत्तरं संपादयति—

स यत्तत्र याचित उत्तरां सर्पत्यों तथा ददामीति हैव तदाह, इति ।

आदित्यो यद्यपि तत्र तदानीमनेन राज्ञा याचितः सन्नुत्तरां यत्र स्वां तिष्ठति तस्मादनन्तरभाविनीं दिशं प्रति सर्पति गच्छेत्तदानीं तत्तेन सर्पणेन तथा ददामीत्येवमुत्तरमाह ब्रूते । लोकेऽपि पृष्टः पुरुषो वाचा वा हस्तशिरश्चलनादि (दि) ना वोत्तरं प्रयच्छति तद्वदत्रापि सर्पणमेवोत्तरमस्तु । सर्पणस्याभिप्राय ओं तथा ददामीत्यनेन कथितः । ओं त्वदुक्तमङ्गी करोमि तथा तेनेव प्रकारेण देवयजनं ददामि ।

तामेतां देवयजनयाच्ञां प्रशंसति—

तस्य ह न काचन रिष्टिर्भवति देवेन सवित्रा प्रसूतस्योत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमुपस्थाय याचित्वा देवयजनमध्यवसाय दीक्षते क्षत्रियः सन् ॥ २० ॥ इति ।

यः पुमान्क्षत्रियः स्वयं राजा सन्नेवमृचाऽऽदित्यमुपस्थाय यजुषा याचित्वा ततो देवयजनं निश्चित्य दीक्षते दीक्षां प्राप्नोति तस्य राज्ञः सवित्रा देवेन प्रसूतस्यानुज्ञातस्य रिष्टिर्हिंसा काचन काचिदपि न भवति । न केवलं हिंसाराहित्यं किंतूत्तरोत्तरिणीं दिने दिने वर्धमानां श्रियमश्नुते प्राप्नोति । किं च

---

इदं श्रेष्ठं ज्योतिषां ज्योतिरुत्तमं० —१०—१७१—३ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रजानां सर्वासामैश्वर्यमीश्वरत्वं नियमनसामर्थ्यमाधिपत्यमधिष्ठाय पालयितृत्वं तत्तद्योगक्षेमसंपादनमश्नुते प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (२०) [ १४३ ] ।

---

तस्यैव क्षत्रियस्य होमं विधत्ते—

अथात इष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य स पुरस्ताद्दीक्षाया आहुतिं जुहुयाच्चतुर्गृहीतमाज्यमाहवनीय इष्टापूर्तस्यापरिज्यान्यै, इति ।

अथ देवयजननिश्चयानन्तरं यस्मादनुष्ठेयस्येष्टापूर्तस्यापरिज्यानिर्विनाशाभावोऽपेक्षितोऽतः कारणाद्यजमानस्य क्षत्रियस्य राज्ञ इष्टापूर्तस्यापरिज्यानिसंज्ञको होमोऽभिधीयत इति शेषः ।

इष्टापूर्तशब्दार्थः पूर्वाचार्यैर्दर्शितः—

" वर्णाश्रमान्वयी धर्म इष्टं पूर्तमथेतरत् ।
प्रपातटाकादिरूपं तच्च सर्वत्र दृश्यते ॥
स्मार्तं पूर्तं श्रौतमिष्टमिति केचिदिहोचिरे " ॥ इति ।

स राजा दीक्षायाः पूर्वमाहुतिं जुहुयात् । चतुर्गृहीतमाज्यं द्रव्यमाहवनीयो होमस्थानमनुष्ठेयस्येष्टापूर्तस्य फलपर्यवसायित्वलक्षणो विनाशाभावः प्रयोजनम् ।

होमे मन्त्रं दर्शयति—

पुनर्न इन्द्रो मघवा ददातु ब्रह्म पुनरिष्टं पूर्तं दात्स्वाहेति, इति ।

पुनर्न इत्यादिकमृचः प्रतीकम् । ब्रह्मेत्यादिकं यजुः । ब्रह्म वेदरूपो मन्त्र इष्टं पूर्तं यथोक्तलक्षणं पुनर्दात्, भूयो भूयो ददातु । तदर्थमिदं स्वाहा हुतमस्तु । दीक्षणीयेष्टेः पूर्वकालीनं होमं विधायानुबन्ध्याख्यपशोरुत्तरकालीनं होमं विधत्ते—

अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात्पुनर्नो अग्नि-

---

१.क. ख. ग. 'धातुव' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जातवेदा ददातु। क्षत्रं पुनरिष्टं पूर्तं दात्स्वाहेति, इति।

अथ प्राचीनहोमकथनानन्तरमुच्यत इति शेषः। अनुबन्ध्याया अनुबन्ध्याख्यपशोः संबन्धीनि यानि त्रीणि समिष्टयजूंषि सन्ति तेषामुपरिष्टाज्जुहुयादिति शेषः। पुनर्न इत्यृचः प्रतीकम्। इयं पूर्वोक्ता चेत्यृग्द्वयं शाखान्तरगतम्। क्षत्रं क्षत्रियजातिरिष्टं पूर्तं च पुनर्दाद्भूयो ददातु तदर्थं स्वाहुतमिदमस्तु।

पूर्वोत्तरकालीनमाहुतिद्वयं प्रशंसति—

सैषेष्टापूर्तस्यापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते होतव्ये ॥ २१ ॥ इति।

योऽयं क्षत्रियो राजा यजमानस्तस्यैते पूर्वोत्तरकालीने आहुती विधेये। सैषाऽऽहुतिक्रियेष्टस्य पूर्तस्य चापरिज्यानिरविनाशहेतुस्तस्मात्कारणादेते उभे आहुती होतव्ये ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये तृतीयः खण्डः ॥३॥ (२१) [१४४]।

---

अथ प्रकारान्तरेणाऽऽहुतिद्वयं विधत्ते—

तदु ह स्माऽऽह सौजात आराह्लिरजीतपुनर्वण्यं वा एतद्यदेते आहुती इति यथा ह कामयेत तथैते कुर्याद्य इतोऽनुशासनं कुर्यादितीमे त्वेव जुहुयात्, इति।

तदु ह तत्रैव पूर्वोक्तहोमस्थाने सौजातनामकः कश्चिदृषिः स चाऽऽराह्लिनामकस्य पुत्र एवमुवाच। कथमिति तदुच्यते। एते वक्ष्यमाणे आहुती इति यदस्ति तदेतदजीतपुनर्वण्यं वै नष्टमप्राप्तं वा यद्वस्तु तदेतदजीतं तस्य पुनर्वनसाधनं प्राप्तिकारणमजीतपुनर्वण्यं वक्ष्यमाणमाहुतिद्वयमेतन्नामकमित्यर्थः। इति यदेतत्सौजातस्य मतं तदेव यथेत्यादिना प्रशस्यते। यः पुमानितः सौजातवाक्यादनुशासनमुपदिष्टमनुष्ठानं कुर्यात्स पुमान्यथा येनैव प्रकारेण कामयते तथा तेनैव प्रकारेण सिद्धं फलमुद्दिश्यैते कुर्यात्। एतदनुष्ठानेन काम्यमानं फलं सिध्यति। तस्मात्कारणादिमे एवाऽऽहुती जुहुयान्न तु पूर्वे।

तत्र दीक्षणीयेष्टेः प्राचीनहोममन्त्रं दर्शयति—

ब्रह्म प्रपद्ये ब्रह्म मा क्षत्राद्गोपायतु ब्रह्मणे स्वाहेति, इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ब्रह्म ब्राह्मणजातिं प्रपद्ये रक्षकतया प्राप्नोमि। ब्रह्म सा ब्राह्मणजातिर्मा क्षत्रात्क्षत्रियजातेर्गोपायतु पालयतु। ब्रह्मणे ब्राह्मणजातये स्वाहुतमिदमस्तु। अनेन मन्त्रेणाऽऽहवनीये चतुर्गृहीतमाज्यं जुहुयात्।

अस्याऽऽहुतेः पूज्यतां दर्शयति—

तत्तदितीँ३, इति।

सर्वेऽपि याज्ञिकाः पूज्यहोमप्रसङ्गे तदा तदा तत्तदित्येवमेतद्देवानुष्ठानमुदाहरन्ति। पूजार्था सानुनासिका प्लुतिः।

अथ मन्त्रतात्पर्यं दर्शयति—

ब्रह्म वा एष प्रपद्यते यो यज्ञं प्रपद्यते ब्रह्म वै यज्ञो यज्ञाद्धु ह वा एष पुनर्जायते यो दीक्षते तं ब्रह्म प्रपन्नं क्षत्रं न परिजिनाति ब्रह्म मा क्षत्राद्गोपायत्वित्याह यथैनं ब्रह्म क्षत्राद्गोपायेद्ब्रह्मणे स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं क्षत्राद्गोपायति, इति।

यः पुमान्यज्ञं प्रपद्यते प्रारभत एष पुमान्ब्रह्म वै ब्राह्मणजातिमेव प्रारभते। ब्रह्म वै ब्राह्मणजातिरेव यज्ञस्तया जात्या साध्यत्वात्। एवं सति यः पुमान्दीक्षते दीक्षां प्राप्नोत्येष पुमान्पूर्वं जातोऽपि यज्ञादु ह वा अनुष्ठीयमानायज्ञादेव पुनरपि जायते। ब्रह्म प्रपन्नं यज्ञोपक्रमेण यज्ञरूपब्राह्मणजातिं प्रपन्नं तं यजमानं क्षत्रं क्षत्रियजातिर्न परिजिनाति नैव हिनस्ति। एतावता ब्रह्म प्रपद्य इत्यस्य मन्त्रपादस्य तात्पर्यं दर्शयति। यस्तु मध्यमो मन्त्रभागो ब्रह्म मा क्षत्राद्गोपायत्वित्येवं ब्रूते तस्मिन्भागे ब्राह्मणजातिरेनं यजमानं क्षत्रियजातेर्यथा गोपायेद्रक्षेत्तथा स मध्यमभागो ब्रूते। ब्रह्मणे स्वाहेत्येतादृशो यस्तृतीयभागस्तत्तेन भागेन ब्रह्म ब्राह्मणजातिं प्रीणाति तर्पयति। तदेतद्ब्रह्म प्रीतं सद्यजमानं क्षत्रियजातेर्गोपायति रक्षति।

पूर्वकालीनं होमं विधायोत्तरकालीनं होमं विधत्ते—

अथानूबन्ध्यायै समिष्टयजुषामुपरिष्टात्, इति।

---

१ क. ङ. ञ. 'थाजुब'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पूर्ववद्व्याख्येयम् ।

तस्मिन्होमे मन्त्रं तदीयतात्पर्यं च दर्शयति—

क्षत्रं प्रपद्ये क्षत्रं मा ब्रह्मणो गोपायतु क्षत्राय स्वाहेति तत्तदितीऽ३ँ क्षत्रं वा एष प्रपद्यते यो राष्ट्रं प्रपद्यते क्षत्रं हि राष्ट्रं तं क्षत्रं प्रपन्नं ब्रह्म न परिजिनाति क्षत्रं मा ब्रह्मणो गोपायत्वित्याह यथैनं क्षत्रं ब्रह्मणो गोपायेत्क्षत्राय स्वाहेति तदेनत्प्रीणाति तदेनत्प्रीतं ब्रह्मणो गोपायति, इति ।

पालनीयो देशो राष्ट्रम् । तच्च क्षत्रियेण पालनीयत्वात्क्षत्रस्वरूपम् । अन्यत्सर्वं ब्रह्मवाक्यवद्व्याख्येयम् ।

तदेतदाहुतिद्वयं प्रशंसति—

सैषेष्टापूर्तस्यैवापरिज्यानिः क्षत्रियस्य यजमानस्य यदेते आहुती तस्मादेते एव होतव्ये ॥ २२ ॥ इति ।

पूर्वोक्ताहुतिद्वयविषयवाक्यवद्व्याख्येयम् । एवकारः पूर्वोक्ताहुतिद्वयव्यावृत्त्यर्थः । एतदेव सौजाताख्यस्य महर्षेर्मतं प्रशस्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (२२) [१४५] ।

———

क्षत्रियस्याऽऽहवनीयोपस्थानं विधातुं प्रस्तौति—

अथैन्द्रो वै देवतया क्षत्रियो भवति त्रैष्टुभश्छन्दसा पञ्चदशः स्तोमेन सोमो राज्येन राजन्यो बन्धुना स ह दीक्षमाण एव ब्राह्मणतामभ्युपैति यत्कृष्णाजिनमध्यूहति यद्दीक्षितव्रतं चरति यदेनं ब्राह्मणा अभिसंगच्छन्ते तस्य ह दीक्षमाणस्येन्द्र एवेन्द्रियमादत्ते त्रिष्टुब्वीर्यं पञ्चदशस्तोम आयुः सोमो राज्यं पितरो यशस्कीर्तिमन्यो वा अयमस्म-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


भवति ब्रह्म वा अयं भवति ब्रह्म वा अयमुपावर्तत इति वदन्तः, इति ।

अथ होमकथनानन्तरमुपस्थानमुच्यत इति शेषः । योऽयं क्षत्रियोऽस्ति सोऽयं देवतयैन्द्रो वा इन्द्रसंबन्ध एव भवति । देवतानां मध्य इन्द्रः क्षत्रियस्याभिमा[नि]नी देवतेत्यर्थः । तथा छन्दसा त्रैष्टुभश्छन्दसां मध्ये त्रिष्टुबेतदभिमानिनी । स्तोमानां मध्ये पञ्चदश एतदभिमानी । राज्येन निमित्तेनायं सोमरूपः सोम एव तदीयराज्याभिमानी । बन्धुना पितृपितामहादिबन्धुवर्गेण राजन्यो राजजातीयः । एवं सति स ह स खलु क्षत्रियो दीक्षमाण एव दीक्षां स्वीकुर्वन्नेव ब्राह्मणत्वजातिं प्राप्नोति । कथमिति तदुच्यते । ब्राह्मणयजमानवत्कृष्णाजिनमध्यूहत्याच्छादयतीति यदस्ति तथा दीक्षितव्रतं मुष्टिबन्धनवाङ्नियमादिकं चरतीति यदस्ति तथा ब्राह्मणा ऋत्विजो भूत्वैनं क्षत्रियमभितः संगच्छन्ते संगता भवन्तीति यदस्ति तेन सर्वेण संस्कारेण क्षत्रियो ब्राह्मण्यं प्राप्नोति । तस्य ह तादृशस्यैव क्षत्रियस्य दीक्षमाणस्य दीक्षां प्राप्नुवत इन्द्रियं चक्षुरादिपाटवमिन्द्र एवाऽऽदत्तेऽपहरति । तथा वीर्यं युद्धादिसामर्थ्यं त्रिष्टुबपहरति । पञ्चदशस्तोम आयुरपहरति । सोमो राज्यमपहरति । पितरो यशस्कीर्तिमपहरन्ति । ऐहिकं युद्धादिविषयकं यशः । आमुष्मिकी यज्ञदानविषया कीर्तिः । एवमपहरतामिन्द्रत्रिष्टुबादीनां कोऽभिप्राय इति सोऽभिधीयते । अयं क्षत्रियोऽस्मदिन्द्रादिभ्योऽन्य एव स्वतन्त्र एव भवति । पूर्वमस्मदधीनः सन्निदानीं यागं कुर्वन्ब्रह्म वै ब्राह्मण एवायं भवति । कथमिति तदुच्यते । अयं क्षत्रियो ब्रह्म वै ब्राह्मणजातिमेव कृष्णाजिनाच्छादनादिभिरुपेत्य वर्तते । तथा सत्यस्मदपेक्षामन्तरेणैव सर्वपुरुषार्थसाधनसमर्थत्वादस्मदधीनतां परित्यज्यान्य एव स्वतन्त्रो भवतीति स्वाभिप्रायं परस्परं वदन्तः सर्वमप्येतदीयमपहरन्ति ।

तस्योपद्रवस्य शान्त्यर्थमुपस्थानं विधत्ते—

स पुरस्ताद्दीक्षाया आहुतिं हुत्वाऽऽहवनीयमुपतिष्ठेत, इति ।

दीक्षणीयेष्टेः पूर्वोक्तामाहुतिं हुत्वा तत्राऽऽहवनीयं वक्ष्यमाणेन मन्त्रेणोपतिष्ठेत ।

तं मन्त्रं दर्शयति—

नेन्द्राद्देवताया एमि न त्रिष्टुभश्छन्दसो न पञ्चदशा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



त्स्तोमान्न सोमाद्राज्ञो न पित्र्याद्बन्धोर्मा म इन्द्र इन्द्रियमादित मा त्रिष्टुब्वीर्यं मा पञ्चदशस्तोम आयुर्मा सोमो राज्यं मा पितरो यशस्कीर्तिं सहेन्द्रियेण वीर्येणाऽऽयुषा राज्येन यशसा बन्धुनाऽग्निं देवतामुपैमि गायत्रीं छन्दस्त्रिवृतं स्तोमं सोमं राजानं ब्रह्म प्रपद्ये ब्राह्मणो भवामीति, इति ।

क्षत्रियोऽहमिन्द्ररूपाया मदीयदेवताया नैमि पृथग्भूतो न गच्छामि । तथा मय्यभिमानिभ्यश्छन्दस्तोमराजबन्धुभ्यो नापगच्छामि । अयमिन्द्रो मदीयमिन्द्रियं माऽऽदित माऽपहरतु । तथा त्रिष्टुबादयो वीर्यादीन्माऽपहरन्तु । तेषामिन्द्रादीनामनुग्रहमिन्द्रियादिभिः सहावस्थितो भूत्वा तत्पालनसमर्थमग्निं देवतामुपैमि । तथा गायत्रीत्रिवृत्स्तोमब्राह्मणजातीः प्रपद्ये प्राप्नोमि । तेषामग्न्यादीनामनुग्रहाद्ब्राह्मणो भवामि ।

अनेन मन्त्रेण यदुपस्थानं तत्प्रशंसति—

तस्य ह नेन्द्र इन्द्रियमादत्ते न त्रिष्टुब्वीर्यं न पञ्चदशस्तोम आयुर्न सोमो राज्यं न पितरो यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थाय दीक्षते क्षत्रियः सन् ॥ २३ ॥ इति ।

यः पुमान्क्षत्रियजातियुक्तः सन्नुक्तक्रमेण दीक्षायाः प्राचीनामाहुतिं हुत्वा नेन्द्रादित्यादिमन्त्रेणाऽऽहवनीयमुपस्थाय पश्चाद्दीक्षां प्राप्नोति तस्य क्षत्रियस्येन्द्रियादीनिन्द्रादयो नापहरन्ति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( २३ ) [ १४६ ] ।

---

पूर्वहोमानन्तरमुपस्थानं विधायोत्तरहोमादूर्ध्वमुपस्थानं विधातुं प्रस्तौति—

अथाऽऽग्नेयो वै देवतया क्षत्रियो दीक्षितो भवति गायत्रश्छन्दसा त्रिवृत्स्तोमेन ब्राह्मणो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


बन्धुना सहोदवस्यन्नेव क्षत्रियतामभ्युपैति तस्य होदवस्यतोऽग्निरेव तेज आदत्ते गायत्री वीर्यं त्रिवृत्स्तोम आयुर्ब्राह्मणा ब्रह्म यशस्कीर्ति- मन्यो वा अयमस्मद्भवति क्षत्रं वा अयं भवति क्षत्रं वा अयमुपावर्तत इति वदन्तः, इति ।

अथ पूर्वोपस्थानानन्तरमुत्तरोपस्थानं वक्ष्यत इति शेषः । अयं यजमानः पुरा क्षत्रियोऽपीदानीं दीक्षितः सन्ब्राह्मण्यं प्राप्य देवतयाऽग्निसंबद्धो भवति । अग्निरस्य ब्राह्मणस्य स्वामी । एवं गायत्रीत्रिवृद्ब्राह्मणजातिसंबन्धो द्रष्टव्यः । तादृश इदानीं ब्राह्मणः सन्नुदवस्यन्नेवोदवसानीयेष्ट्या सोमयागं समापयन्नेव ब्राह्मण्यं परित्यज्य क्षत्रियत्वं प्राप्नोति । तस्मादु(तस्यो)दवसानीयेष्टिं कुर्वतो यजमानस्य तेजःप्रभृतीनग्न्यादयोऽपहरन्ति । ब्रह्म वेदस्तदध्ययनमैहिकं यश- स्तदनुष्ठाननिमित्ताऽऽमुष्मिकी कीर्तिः । अपहरतामग्न्यादीनां कोऽभिप्रायः सोऽभिधीयते । अयमिदानीं ब्राह्मणः सन्नस्मदन्यः स्वतन्त्रो भवति । अयं क्षत्रं वै क्षत्रिय एव भवति । तदपि कथमिति तदुच्यते । अयं यागकाले ब्राह्मणः सन्यागादूर्ध्वं ब्राह्मण्यं परित्यज्य स्वकीयां क्षत्रियजातिमेवोपेत्य वर्तते । तस्मादस्यास्मत्तोऽन्यत्वमिति परस्परं वदन्तोऽग्न्यादयस्तेजआदी- नपहरन्ति ।

तच्छान्त्यर्थमुपस्थानं विधत्ते—

सोऽनूबन्ध्यायै समिष्टयजुषामुपरिष्टाज्जुत्वाऽऽहुतिमा- हवनीयमुपतिष्ठेत, इति ।

पूर्ववद्व्याख्येयम् ।

तत्रोपस्थाने मन्त्रमाह—

नाग्नेर्देवताया एमि न गायत्र्याश्छन्दसो न त्रिवृतः स्तोमान्न ब्रह्मणो बन्धोर्मा मेऽग्निस्तेज आदित मा गायत्री वीर्यं मा त्रिवृत्स्तोम आयुर्मा ब्राह्मणा ब्रह्म यशस्कीर्तिं सह तेजसा वीर्येणाऽऽयुषा ब्रह्मणा यशसा कीर्त्येन्द्रं देवतामुपैमि त्रिष्टुभं छन्दः पञ्च-

१ क. झ. ग. 'तोऽस्य य' । २ क. झ. सोऽनुब' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


दर्शं स्तोमं सोमं राजानं क्षत्रं प्रपद्ये क्षत्रियो भवामि। देवाः पितरः पितरो देवा योऽस्मि स सन्यजे। स्वं म इदमिष्टं स्वं पूर्तं स्वं श्रान्तं स्वं हुतम्। तस्य मेऽयमग्निरुपद्रष्टाऽयं वायुरुपश्रोताऽसावादित्योऽनुख्यातेदमहं य एवास्मि सोऽस्मीति, इति।

अत्र नाग्नेर्देवताया इत्यादि क्षत्रियो भवामीत्यन्तं पूर्वमन्त्रवद्व्याख्येयम्। हे देवा अग्न्यादयः पितरः पालका यूयं शृणुतेति शेषः। पितरो देवा इति पुनर्वचनमादरार्थम्। भवदनुग्रहात्कृष्णाजिनाच्छादनादिसंस्कारेण यो ब्राह्मणोऽस्मि यज्ञसमाप्तिपर्यन्तं स एव ब्राह्मणः सन्यजे यागं कुर्वे। मे ममेदमिष्टं श्रौतं कर्म स्वं स्वाधीनं जातम्। तथा पूर्तं स्मार्तमपि कर्म स्वं स्वाधीनं जातम्। तथा श्रान्तं श्रमरूपं तपोऽपि स्वं स्वाधीनं जातम्। हुतमन्यदपि काम्यहोमादिकं स्वं स्वाधीनं जातम्। तस्य तादृशस्येष्टापूर्तादियुक्तस्य मे ममायं भूलोकावस्थितोऽग्निरुपद्रष्टा समीपे स्थित्वा साक्षित्वेनावलोकयिता। अयमन्तरिक्षावस्थितो वायुरुपश्रोता तस्याग्नेर्मुखादस्मद्वृत्तान्तं श्रोष्यति। असौ द्युलोकावस्थित आदित्यस्तं वायुमनु पश्चात्ख्याता स्वर्गलोके कथयिष्यतीदं कर्माहं कृतवानिति। एवं फलपर्यन्तं कर्मणि समाप्ते सति कर्मोपक्रमात्पूर्वं य एव क्षत्रियोऽस्मि स एवोर्ध्वं क्षत्रियो भूत्वा तिष्ठामीति।

अनेन मन्त्रेण यदुपस्थानं तत्प्रशंसति—

तस्य ह नाग्निस्तेज आदत्ते न गायत्री वीर्यं न त्रिवृत्स्तोम आयुर्न ब्राह्मणा ब्रह्म यशस्कीर्तिं य एवमेतामाहुतिं हुत्वाऽऽहवनीयमुपस्थायोदवस्यति क्षत्रियः सन्॥ २४॥ इति।

पूर्वं तस्य ह नेन्द्र इन्द्रियमित्यादि यद्वाक्यमुक्तं तद्वद्व्याख्येयम्॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये षष्ठः खण्डः॥ ६॥ (२४) [१४७]।

---

१ क. ङ. अ. 'र्यन्तक'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


क्षत्रियस्य दीक्षितत्वावेदनमन्त्रे संदेहात्प्रश्नमुद्भावयति—

अथातो दीक्षाया आवेदनस्यैव तदाहुर्यद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्ति कथं क्षत्रियस्याऽऽवेदयेदिति, इति ।

अथ दीक्षानन्तरं देवानां मनुष्याणां चाग्रे यत एतदीयदीक्षा कथनीयाऽतः कारणाद्दीक्षाया आवेदनस्य प्रकटीकरणस्यैव कश्चिन्निर्णय उच्यते । तत्र तस्मिन्नावेदने संदिहाना ब्रह्मवादिनः प्रश्नमाहुः । ब्राह्मणस्य दीक्षाया उर्ध्वमदीक्षिष्टायं ब्राह्मण इति मन्त्रेण दीक्षा प्रख्यापनीया । तथा च तैत्तिरीया आमनन्ति—'अदीक्षिष्टायं ब्राह्मण इति । त्रिरुपांश्वाऽऽह देवेभ्य एवैनं प्राह त्रिरुच्चैरुभयेभ्य एवैनं देवमनुष्येभ्यः प्राह' इति । एवं सति क्षत्रियस्य दीक्षावेदने किमस्मिन्मन्त्रे ब्राह्मणशब्दः क्षत्रियपरत्वेनोहनीय आहोस्विदविकृत एव पठनीय इति प्रश्नाभिप्रायः ।

तत्रोत्तरमाह—

यथैवैतद्ब्राह्मणस्य दीक्षितस्य ब्राह्मणोऽदीक्षिष्टेति दीक्षामावेदयन्त्येवमेवैतत्क्षत्रियस्याऽऽवेदयेत्पुरोहितस्याऽऽर्षेयेणेति, इति ।

अत्र शब्दो नोहितव्यः । अविकृत एव ब्राह्मणशब्दः क्षत्रियदीक्षावेदनेऽपि प्रयोक्तव्यः । यदि ब्राह्मणप्रवरोऽपेक्षितस्तदानीं पुरोहितस्य ब्राह्मणस्य संबन्धिनाऽऽर्षेयेण प्रयोगः कर्तव्यः । तथा चाऽऽपस्तम्बः क्षत्रियवैश्ययोरपि ब्राह्मणशब्देनैवाऽऽवेदनं दर्शयति—'अदीक्षिष्टायं ब्राह्मणोऽसावमुष्य पुत्रोऽमुष्य पौत्रोऽमुष्य नप्ताऽमुष्याः पुत्रोऽमुष्याः पौत्रोऽमुष्या नप्तेति ब्राह्मणो वा एष जायते यो दीक्षते तस्माद्राजन्यवैश्या अपि ब्राह्मण इत्येवाऽऽवेदयति' इति ।

ईदृशस्याऽऽवेदनस्य पूज्यतां दर्शयति—

तत्तदितीँ३, इति ।

पूर्ववद्व्याख्येयम् ।

ब्राह्मणत्वेनाऽऽवेदनमुपपादयति—

निधाय वा एष स्वान्यायुधानि ब्रह्मण एवाऽऽयुधैर्ब्रह्मणो रूपेण ब्रह्म भूत्वा यज्ञमुपावर्तत तस्मा-

११०

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


त्तस्य पुरोहितस्याऽऽर्षेयेण दीक्षामावेदयेयुः पुरोहितस्याऽऽर्षेयेण प्रवरं प्रवृणीरन्नु ॥ २५ ॥ इति ।

स्वान्यायुधानि धनुरादीनि ब्रह्मण आयुधानि स्फ्यकपालादीनि यस्त्स्वायुधपरित्यागपूर्वकं ब्रह्मायुधस्वीकारेण ब्राह्मणो भूत्वा यज्ञं प्राप्तवांस्तस्य तस्य यजमानस्य पुरोहितसंबन्धिना गोत्रेण दीक्षावेदनं तथा प्रवरोऽपि विज्ञेयः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ ( २५ ) [ १४८ ] ।

---

दर्शपूर्णमासयोर्यजमानभागप्राशनं विहितं, तदत्र दीक्षणीयादीष्टिषु चोदकप्राप्तं क्षत्रियस्य तत्प्राशने निर्णयं वक्तुं विचारमवतारयति—

अथातो यजमानभागस्यैव तदाहुः प्राश्नीयात्क्षत्रियो यजमानभागा३म्, न प्राश्नीया३त्, इति, इति ।

दीक्षावेदननिर्णयानन्तरं दीक्षणीयादीष्टयो यतो बुद्धिस्था अतः कारणात्तत्र यजमानभागस्यैव प्रकारविशेष उच्यत इति शेषः । तत्तस्मिन्भागे ब्रह्मवादिनो विचारमाहुः । क्षत्रियो ब्राह्मणवत्किं यजमानभागं प्राश्नीयादुत नेति । विचारार्थं प्लुतिद्वयम् ।

पक्षद्वये दोषमुद्भावयति—

यत्प्राश्नीयादहुतादहुतं प्राश्य पापीयान्स्याद्यन्न प्राश्नीयाद्यज्ञादात्मानमन्तरियाद्यज्ञो वै यजमानभागः, इति ।

हुतमत्तीति हुतात्तादृशो न भवतीत्यहुतात् । अथैता अहुतादो यद्ब्राजन्यो वैश्यः शूद्र इति पूर्वमुक्तम् । अतोऽयं क्षत्रियोऽहुताद्योग्यतारहितो यदि हुतशेषं प्राश्नीयात्तदानीं पापीयानत्यन्तपापयुक्तो भवेत् । अप्राशनपक्षे तु यज्ञादात्मानमन्तरियाद्विच्छिन्द्याद्यजमानभागस्य यज्ञहेतुत्वेन यज्ञस्वरूपत्वात्तत्परिहित्ये यज्ञात्स्वयं विच्छिन्नो भवति ।

उक्तदोषद्वयं परिहर्तुं पक्षान्तरमाह—

स ब्रह्मणे परिहृत्यः, इति ।

---

१ ख. °र्कं ब्राह्मणायु° । २ अ. °स्येन य° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स यजमानभाग ऋत्विग्विशेषाय ब्रह्मणे परिहृत्यः परितः सर्वात्मना समर्पणीयः ।

तत्समर्पणे दोषद्वयराहित्यं दर्शयति—

पुरोहितायतनं वा एतत्क्षत्रियस्य यद्ब्रह्माऽर्धात्मो ह वा एष क्षत्रियस्य यत्पुरोहित उपाह परोक्षेणैव प्राशितरूपमाप्नोति नास्य प्रत्यक्षं भक्षितो भवति, इति ।

ऋत्विग्रूपो ब्रह्मेति यदस्त्येतत्क्षत्रियस्य पुरोहितायतनं पुरोहितस्थानम् । पुरोहितो योऽस्त्येष क्षत्रियस्यार्धात्मो ह वा अर्धदेह एव । उ ह वा इति निपातसमूहोऽवधारणार्थः । अर्धशरीरस्थानीयपुरोहितरूपेण ब्रह्मणा तस्मिन्भागे भक्षिते सति परोक्षेणैव व्यवधानेनैव प्राशितरूपं प्राशितसादृश्यं प्राप्नोत्येव । अहशब्द उपशब्दश्च मिलित्वाऽवधारणार्थौ । अस्य क्षत्रियस्य प्रत्यक्षमव्यवधानेन स्वमुखे[न] स भागो भक्षितो न भवति । एवं सति व्यवधानेन भक्षितत्वाद्यज्ञान्तरायो न भविष्यति। स्वमुखेन भक्षणाभावादयं पापीयानपि न भविष्यति ।

ब्रह्मणस्तद्भागप्राशनं प्रशंसति—

यज्ञ उ ह वा एष प्रत्यक्षं यद्ब्रह्मा ब्रह्मणि हि सर्वो यज्ञः प्रतिष्ठितो यज्ञे यजमानो यज्ञ एव तद्यज्ञमप्यस्यर्जन्ति यथाऽप्स्वापो यथाऽग्नावग्निं तद्वै नातिरिच्यते तदेनं न हिनस्ति तस्मात्स ब्रह्मणे परिहृत्यः, इति ।

यो ब्रह्माऽस्त्येष प्रत्यक्षमव्यवधानं यथा भवति तथा यज्ञ उ ह वै यज्ञस्वरूप एव तत्साधकत्वात् । किंच ब्रह्मण्येव सर्वो यज्ञः प्रतिष्ठितः । वेदत्रयवैगुण्यपरिहर्तृत्वेन ब्रह्मणो भिषग्रूपत्वस्योक्तत्वात् । तस्मिंश्च प्रतिष्ठिते यज्ञे यजमानोऽपि प्रतिष्ठितः । तत्फलभागित्वात् । एवं सति तत्तेन भागप्राशनेन यज्ञ एव ब्रह्मरूपे भागरूपं यज्ञमप्यत्यर्जन्ति सम्यक्प्रक्षिपन्ति । तत्र दृष्टान्तः । यथा लोकेऽप्सु प्रक्षिप्ता आप एकत्वेन संसृज्यन्ते यथा वाऽग्नौ प्रक्षिप्तमग्निमेकीभूतं पश्यामस्तथा तद्वै ब्रह्मणा प्राशितं हविर्नातिरिच्यतेऽतिरिक्तं न भवति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


किंतु यज्ञरूपेण ब्रह्मणा सहैकी भवति। तदेकीभूतं हविरेनं क्षत्रियं न हिं-
न बाधते। तस्मात्स यजमानभागो ब्रह्मणे समर्पणीयः।

पक्षान्तरमुपन्यस्य दूषयति—

अग्नौ हैके जुह्वति प्रजापतेर्विभान्नाम लोकस्त-स्मिंस्त्वा दधामि सह यजमानेन स्वाहेति तत्तथा न कुर्याद्यजमानो वै यजमानभागो यजमानं ह सोऽग्नौ प्रवृणक्ति य एनं तत्र ब्रूयाद्यजमानमग्नौ प्रावार्क्षीः प्रास्याग्निः प्राणान्धक्ष्यति मरिष्यति यजमान इति शश्वत्तथा स्यात्तस्मात्तस्याऽऽशां नेयादाशां नेयात् ॥ २६ ॥ इति।

एके याज्ञिकास्तं यजमानभागमग्नौ जुह्वति। तत्र प्रजापतेरित्यादिको मन्त्रः। प्रजापतेः संबन्धी यो लोकस्तस्य विभानित्येतन्नामधेयम्। विशेषेण भातीति व्युत्पत्तेः। यजमानभाग यजमानेन सह त्वां तस्मिँल्लोके दधामि प्रक्षिपामि तदर्थमिदं स्वाहुतमस्तु। अनेन मन्त्रेण यद्धोमानुष्ठानमस्ति तत्तथा न कुर्यात्। यजमानभागस्य यजमानस्वरूपत्वेन तस्य भागस्य होमे स होमकर्ता यजमानमेवाग्नौ प्रवृणक्ति प्रवृक्तं दग्धं करोति। तत्र तदानीं यः शत्रुरागत्यैनं कर्तारं ब्रूयाच्छपेत। कथमिति तदुच्यते। हे होमकर्तस्त्वं यजमानमग्नौ प्रावार्क्षीः प्रवृक्तवान्दग्धवानसि। अस्य यजमानस्य प्राणानग्निः प्रकर्षेण धक्ष्यति ... यजमानो मरिष्यतीति। स शापोऽवश्यं तथैव स्यात्। तस्मात्तस्य होमस्याऽऽशामिच्छामपि नेयान्न प्राप्नुयात्। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये चतुस्त्रिंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ (२६) [१४९]

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये
चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ पञ्चत्रिंशोऽध्यायः ।

---

क्षत्रियो यजमानो यस्तस्य होमादि वर्णितम् ।
फलनामा तु चमसस्तस्यैवात्रोपवर्ण्यते ॥

तत्राऽऽदौ क्षत्रियस्य सोमभक्षराहित्यप्रदर्शनार्थमुपाख्यानमाह—

विश्वंतरो ह सौषद्मनः श्यापर्णान्परिचक्षाणो विश्यापर्णं यज्ञमाजह्रे तद्धानुबुध्य श्यापर्णास्तं यज्ञमाजग्मुस्ते ह तदन्तर्वेद्यासांचक्रिरे तान्ह दृष्ट्वोवाच पापस्य वा इमे कर्मणः कर्तार आसतेऽपूतायै वाचो वदितारो यच्छ्यापर्णा इमानुत्थापयतेमे मेऽन्तर्वेदि माऽऽसिषतेति तथेति तानुत्थापयांचक्रुः, इति ।

शोभनं सद्म राजगृहं यस्य राज्ञः सोऽयं सुषद्मा तस्य पुत्रः सौषद्मनः । स च विश्वंतरनामकः । स कदाचिद्यागं चिकीर्षुः श्यापर्णनामकान्ब्राह्मणविशेषान्परिचक्षाण आर्त्विज्ये निराकुर्वन्विश्यापर्णं यज्ञमाजह्रे श्यापर्णनामकब्राह्मणविरहितमेव यज्ञमनुष्ठितवान् । तद्ध तत्सर्वं श्यापर्णनामका ब्राह्मणा अनुबुध्य मनुष्यमुखादवगत्य विश्वंतरेण राज्ञा तदानीमनाहुता एव तं यज्ञमाजग्मुः । आगत्य ते ह त एव श्यापर्णास्तदन्तर्वेदि तस्य यज्ञस्य वेदिमध्य आसांचक्रिरे राजानुज्ञामन्तरेण स्वयमेवोपविष्टवन्तः । राजा तानुद्दण्डाञ्श्यापर्णान्दृष्ट्वा स्वकीयान्वेत्रपाणीन्पुरुषानुवाच । यद्ये श्यापर्णाः सन्तीमेऽपूतायै वाचो वदितारोऽपूतां वाचं मदीयावज्ञारूपां वदन्तः पापस्य कर्मणः कर्तारो चौर्यरूपं व्यापारं कर्तुमुद्यता इहाऽऽसते । इमे श्यापर्णा मेऽन्तर्वेदि मदीयाया वेदेर्मध्ये माऽऽसिषत स्वयमेवोपविष्टा इमान्धूर्तान्हे वेत्रपाणय उत्थापयत । इत्येवं राज्ञोक्ता वेत्रपाणयस्तथेत्यङ्गीकृत्य ताञ्श्यापर्णानुत्थापयांचक्रुः ।

तेषां श्यापर्णानां वृत्तान्तमाह—

ते होत्थाप्यमाना रुरुविरे ये तेभ्यो भूतवीरेभ्योऽसितमृगाः कश्यपानां सोमपीथमभिजिग्युः

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पारिक्षितस्य जनमेजयस्य विकश्यपे यज्ञे तैस्ते तत्र वीरवन्त आसुः कः स्वित्सोऽस्माका(कम)त्सि वीरो य इमं सोमपीथमभिजेष्यतीति, इति ।

वेत्रपाणिभिरुत्थाप्यमानास्ते श्यापर्णा ब्राह्मणा रुरुविरे रवं शब्दं मुखैर्ध्वनिं कृतवन्तः । तत्र धृष्टाः केचिदन्यान्प्रति काचित्पुरातनीं कथा परिक्षितः पुत्रो जनमेजयाख्यो यो राजा स कदाचित्कश्यपवंशोत्पन्ना णान्विहाय विकश्यपं यज्ञं भूतवीरसंज्ञकैर्ब्राह्मणैर्ऋत्विग्भिः कारयामा तदानीं कश्यपानां मध्ये ये केचिदसितमृगनामकाः पुरुषाः सोमपीथं जयसंबन्धिनं सोमयागं तेभ्यो भूतवीरसंज्ञकेभ्यो ब्राह्मणेभ्यो बलाद स्वयमभिजिग्युरभितो जयं प्राप्ताः । बहुषु यज्ञप्रयोगेषु विजिगीषुकर्मा तान्भूतवीरान्ब्राह्मणान्पराजयं प्रापय्य स्वयमसितमृगनामानो ये जितवन्तो रसितमृगैस्ते कश्यपास्तत्र जनमेजयस्य यज्ञे वीरवन्तः शूरपुरुषोपेता आ एतां कथामुदाहृत्य श्यापर्णाः स्वकीयानेवं पृच्छन्ति । अस्माकं राज्ञा रकृतानामस्माकं मध्ये यः पुमानिमं सोमपीथं विश्वंतरस्य राज्ञः सोम मभिजेष्यति स तादृशो वीरः कश्चिदस्ति यः कोऽपि किमस्तीत्येवमु शब्दं चक्रुः ।

तस्य श्यापर्णानां प्रश्नस्य तन्मध्ये केनचिदुक्तमुत्तरं दर्शयति—

अयमहमस्मि वो वीर इति होवाच रामो मार्गवेयः, इति ।

मृगवुर्नाम काचिद्योषित्तस्याः पुत्रो रामनामा कश्चिद्ब्राह्मण एवमुवाच । हे श्यापर्णा वो युष्माकं मध्ये वीरः परकीयान्विजेतुं शूरोऽहमयमस्मि भवत्सु वर्तमानोऽस्मीति ।

तस्य रामस्य वृत्तान्तमाह—

रामो हाऽऽस मार्गवेयोऽनूचानः श्यापर्णीयस्तेषां होत्तिष्ठतामुवाचापि नु राजन्नित्थंविदं वेदेरुत्थादयन्तीति यस्त्वं कथं वेत्थ ब्रह्मबन्धविति ॥ २७ ॥ इति ।

श्यापर्णीयः श्यापर्णानां ब्राह्मणानां संबन्धी मृगवुपुत्रो रामोऽनूचानो साङ्गवेदशास्त्रपारंगत आस तत्रावस्थितवान् । तेषां श्यापर्णानां वेदि तिष्ठतां मध्येऽवस्थितो रामो विश्वंतरं प्रत्येवमुवाच । हे राजन्नित्थं

Digitized by Arya Samaj Foundation Chennai and eGangotri


यागसंबन्धिप्रयोगप्रकाराभिज्ञं मामपि त्वदीया वेत्रपाणयो नु क्षिप्रं वेदेरुत्थापयन्ति तदेतदयुक्तमिति । तच्छ्रुत्वा विश्वंतरो राजैवमुवाच । हे ब्रह्मबन्धो ब्राह्मणाधम राम यस्त्वं धाष्ट्र्याद्ब्रवीषि स त्वं कथं वेत्थेति । अत्र राजोवाचेत्यध्याहर्तव्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२७) [१५०]।

---

अथ रामः स्वकीयं वेदनं राज्ञोऽग्रे प्रकटयति—

यत्रेन्द्रं देवताः पर्यवृञ्जन्विश्वरूपं त्वाष्ट्रमभ्यमंस्त वृत्रमस्तृत यतीन्सालावृकेभ्यः प्रादादरुर्मघानवधीद्बृहस्पतेः प्रत्यवधीदिति तत्रेन्द्रः सोमपीथेन व्यार्ध्यतेन्द्रस्यानु व्यृद्धिं क्षत्रं सोमपीथेन व्यार्ध्यतापीन्द्रः सोमपीथेऽभवत्त्वष्टुराऽमुष्य सोमं तद्व्यृद्धमेवाद्यापि क्षत्रं सोमपीथेन स यस्तं भक्षं विद्याद्यः क्षत्रस्य सोमपीथेन व्यृद्धस्य येन क्षत्रं समृध्यते कथं तं वेदेरुत्थापयन्तीति, इति ।

हे विश्वंतर मदीयं वेदनं शृणु । पुरा कदाचिद्देवता इन्द्रस्योपरि पञ्चापराधान्संपाद्येन्द्रं पर्यवृञ्जन्यज्ञेषु परितो वर्जितवन्तः । यत्र यदा वर्जनं कृतं तत्र तदेन्द्रः सोमपीथेन व्यार्ध्यत सोमपानेन वियुक्तोऽभूत् । इन्द्रस्य येऽपराधास्तेऽभिधीयन्ते । त्वष्टुः पुत्रं विश्वरूपनामानं ब्राह्मणमभ्यमंस्तेन्द्रो हिंसितवान् । तथा तेन त्वष्ट्रोत्पादितं वृत्रनामानं ब्राह्मणमस्तृत हिंसितवान् । एतदुभयं तैत्तिरीयैर्विश्वरूपो वै त्वाष्ट्रस्त्वष्ट्रा हतपुत्र इत्यनुवाकद्वये विस्पष्टमाम्नातम् । तथा यतिवेषधरानसुराञ्शस्त्रेण च्छित्त्वा सालावृकेभ्योऽरण्यश्वभ्यः प्रादात् । तथाऽन्यानप्यरुर्मघनामकान्ब्राह्मणवेषानसुरानवधीत् । तथा स्वगुरोर्बृहस्पतेर्वाक्यं स्वकीयेन वाक्येन प्र[त्य]वधीत् । सोऽयं प्रतिघातो न युक्तः । तथा चाऽऽपस्तम्बः स्मरति—' वाक्येन वाक्यस्य प्रतिघातमाचार्यस्य वर्जयेच्छ्रेयसां च ' इति । एते पञ्चापराधास्तैर्निमित्तभूतैरिन्द्रस्य सोमपाने निवारिते सति व्यृद्धिं तन्निवारणमनु क्षत्रं सर्वाऽपि क्षत्रियजातिः सोमपीथेन व्यार्ध्यत सोमपानेन वियुक्ताऽभूत् । तदूर्ध्वं सोमपीथे सोमपानेऽपि स प्रवृत्तोऽभूत् ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कथमिति तदुच्यते। अमुष्य त्वष्टुः सोममाबलादपिबदिति शेषः। तथा च तैत्तिरीया आमनन्ति—'स यज्ञवेशसं कृत्वा 'प्रासहा सोममपिबत्' इति। तत्तथा सतीन्द्रेण बलात्सोमे पीते सति क्षत्त्रियान्तरस्य तत्सामर्थ्याभावादिदानीमपि क्षत्त्रं सोमपीथेन व्यृद्धमेव सोमपानरहितमेवावतिष्ठते। येन भक्षविशेषेण क्षत्त्रं समृद्धं भवति तादृशो योऽन्यो भक्षः सोमपानेन वियुक्तस्य क्षत्त्रस्य संभवति तं भक्षं यः पुमान्विद्यात्तं तादृशं क्षत्त्रियभक्षविदमस्मदादिपुरुषं कस्मात् एते वेत्रपाणयो वेदेरुत्थापयन्तीति रामस्योपालम्भः।

अथ रामविश्वंतरयोरुक्तिप्रत्युक्ती दर्शयति—

वेत्थ ब्राह्मण त्वं तं भक्षा३म्, वेद हीति तं वै नो ब्राह्मण ब्रूहीति तस्मै वै ते राजन्निति होवाच ॥ २८ ॥ इति।

हे ब्राह्मण राम त्वं तादृशं भक्षं किं वेत्थेति विश्वंतरस्य प्रश्नः। तस्य प्रत्युक्तिः। वेद हि जानाम्येवेति रामोऽब्रवीत्। हे ब्राह्मण त्वं वै तमेव क्षत्त्रियभक्षं नोऽस्माकं ब्रूहीति विश्वंतरः पप्रच्छ। हे राजंस्तस्मै ते वै तादृशाय पृच्छते तुभ्यमेव कथयामीति राम उवाच ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (२८) [१५१]।

---

क्षत्त्रियस्य हेया भक्षास्त्रिविधा उपादेयो भक्ष एकस्तत्र हेयान्भक्षान्दर्शयति—

त्रयाणां भक्षाणामेकमाहरिष्यन्ति सोमं वा दधि वाऽपो वा, इति।

हेयानां त्रयाणां मध्ये भक्षमेकं क्षत्त्रियस्य तदानभिज्ञा ऋत्विज आहरिष्यन्ति। कं भक्षमित्याशङ्क्य सोमं वा दधि वा जलं वेत्युक्तम्।

तत्र सोमपक्षे दोषं दर्शयति—

स यदि सोमं ब्राह्मणानां स भक्षो ब्राह्मणांस्तेन भक्षेण जिन्विष्यसि ब्राह्मणकल्पस्ते प्रजायामाजनिष्यत आदाय्यापाय्यावसायी यथाकामप्रयाप्यो यदा वै क्षत्त्रियाय पापं भवति ब्राह्म-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



णकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वि-
तीयो वा तृतीयो वा ब्राह्मणतामभ्युपैतोः स ब्रह्म-
बन्धवेन जिज्यूषितः, इति।

सोऽनभिज्ञ ऋत्विग्यदि ते विश्वंतरस्य क्षत्रियस्य सोमं भक्षमाहरेदिति शेषः। स सोमो ब्राह्मणानां योग्यो भक्षस्तेन भक्षेण ब्राह्मणाञ्जिन्विष्यसि प्रीणयिष्यसि। न तु क्षत्रियस्य तव प्रीतिः। तथा सति ते तव राज्ञः प्रजायां संततौ ब्राह्मणकल्प ईषदसमाप्तो ब्राह्मण आजनिष्यते। क्षत्रियधर्मेण शौर्येण रहितत्वात्तस्य ब्राह्मणसदृशत्वम्। स च पुत्रो ब्राह्मणवद्वक्ष्यमाणगुणचतुष्टयोपेतो भवति। आदानं प्रतिग्रहस्तच्छील आदायी। प्रतिग्रहश्च ब्राह्मणगुणः। ऋत्विग्भूत्वा सोममा समन्तात्पाययतीत्यापायी। तदेतद्याजनमपि ब्राह्मणगुणः। अवसमन्नं तस्य संबन्धि याचनमावसस्तमावसमेति प्राप्नोतीत्यावसायी। परगृहे सदा भोजनयाचनमपि ब्राह्मणगुणः। काममिच्छामनतिक्रम्य यथाकामं तदनुसारेण प्रयाप्यो निर्वासयितुं शक्यः क्षत्रियवैश्यादिवच्छौर्यधनाद्यभावाद्यः कोऽप्यागत्य दुर्बलं ब्राह्मणं तद्गृहात्तदीयग्रामाद्वा निष्कासयितुमिच्छति तदानीमयं ब्राह्मणो दुर्बलत्वात्तेन निःसारयितुं शक्यते। एवमेते चत्वारो धर्मा ब्राह्मणगुणाः। सोमं भक्षयतो राज्ञ एतद्गुणकः पुत्रो जायते। किंच यदा प्रमादात्क्षत्रियाय पापं क्षत्रियस्य किंचिन्निषिद्धाचरणं भवति तदानीं तेन पापेन तस्य क्षत्रियस्य प्रजायां संततौ ब्राह्मणकल्पः शौर्यराहित्यादिना ब्राह्मणसदृशः पुत्र आजायते। अस्मात्पापिनः क्षत्रियाद्द्वितीयो वा तृतीयो वा पुत्रो वा पौत्रो वा ब्राह्मणतामभ्युपैतोः शौर्यादिगुणरहितं ब्राह्मण्यं प्राप्तुमीश्वरः समर्थो भवति। स ब्राह्मणसदृशः क्षत्रियपुत्रो ब्राह्मणबन्धवेन ब्राह्मणानां क्रमबन्धुत्वेन ब्राह्मणोचितयाच्ञादिना जिज्यूषितो जीवितुमिष्टो नीचरूपदैन्यवृत्त्या जीवितुं प्रवृत्तो भवतीत्यर्थः।

सोमस्य भक्षत्वे दोषमुक्त्वा दध्नो भक्षत्वे दोषमाह—

अथ यदि दधि वैश्यानां स भक्षो वैश्यांस्तेन
भक्षेण जिन्विष्यसि वैश्यकल्पस्ते प्रजायामाजनि-
ष्यतेऽन्यस्य बलिकृदन्यस्याऽऽद्यो यथाकामज्येयो
यदा वै क्षत्रियाय पापं भवति वैश्यकल्पोऽस्य
प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



वा वैश्यतामभ्युपैतोः स वैश्यतया जिज्यूषितः, इति ।

यदि ते दधिरूपं भक्षमाहरेत्तदा दध्नो वैश्यभक्षत्वात्तेन वैश्यान्प्रीणयिष्यसि । तव संततौ वैश्यसमानः पुत्र आजनिष्यते । वैश्यश्च वाणिज्यं कुर्वन्नन्यस्य राज्ञो बलिकृद्बलिं पूजां करोति। करं प्रयच्छतीत्यर्थः । अत एवान्यस्य राज्ञ आद्यो भक्ष्योऽधीनो भवतीत्यर्थः । तस्य राज्ञः काममिच्छामनतिक्रम्य ज्येयोऽभिभवनीयो भवति । ज्याऽभिभव इति धातुः । त एते करप्रदानपराधीनत्वतिरस्कार्यत्वाख्या वैश्यगुणाः । यदा क्षत्रियस्य किंचित्पापं संपद्यते तदा तस्य संततौ वैश्यसदृशः पुत्रो जायते । अस्मात्क्षत्रियात्पापिनोऽन्यः पुत्रः पौत्रो वा वैश्यतां प्राप्तुं समर्थो भवति । स च वैश्यवृत्त्या करप्रदानादिना जीवितुं प्रवृत्तो भवति ।

दधिभक्षे दोषमुक्त्वा जलभक्षे दोषमाह—

अथ यद्यपः शूद्राणां स भक्षः शूद्रांस्तेन भक्षेण जिन्विष्यसि शूद्रकल्पस्ते प्रजायामाजनिष्यतेऽन्यस्य प्रेष्यः कामोत्थाप्यो यथाकामवध्यो यदा वै क्षत्रियाय पापं भवति शूद्रकल्पोऽस्य प्रजायामाजायत ईश्वरो हास्माद्द्वितीयो वा तृतीयो वा शूद्रतामभ्युपैतोः स शूद्रतया जिज्यूषितः ॥ २९ ॥ इति ।

यदि ते क्षत्रियस्य कश्चिदृत्विगपो जलभक्षमाहरेत्तदानीं स जलात्मकः शूद्राणां भक्षस्तेन भक्षेण शूद्रान्प्रीणयिष्यसि । ततस्तव संततौ शूद्रसदृशः पुत्र उत्पद्यते । शूद्रश्चान्यस्योत्तमवर्णत्रयस्य प्रेष्यः प्रेषणीयो भृत्यो भवति । तथा कामोत्थाप्यो मध्यरात्रादौ यदाकदाचिद्दिन इच्छा भवति तदानीमप्युत्थाप्यते । तथा तदीयं काममिच्छामनतिक्रम्य वध्यः कुपितेन स्वामिना ताड्यो भवति । एते शूद्रगुणाः । क्षत्रियस्य कदाचित्पापे सति शूद्रसमानः पुत्रो जायते । तस्मात्क्षत्त्रियादन्यः पुत्रः पौत्रो वा शूद्रत्वं प्राप्तुं समर्थो भवति । स पुत्रः शूद्रतया शूद्रवर्णतया दासत्ववृत्त्या जीवितुं प्रवृत्तो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ ( २९ ) [ १५२ ] ।

———

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ क्षत्रियोचितं भक्षं दर्शयितुमुक्तानां भक्षाणां क्षत्रियेण हेयतां संगृ-
ह्णाति—

**एते वै ते त्रयो भक्षा राजन्निति होवाच येषामाशां नेयात्क्षत्रियो यजमानः, इति ।**

क्षत्रियो यागं कुर्वन्नेषां भक्षाणामाशामिच्छामपि नेयान्न प्राप्नुयात् । हे राजन्विश्वंतर ते त्रयोऽप्येते पूर्वमुक्ताः ।

उपादेयं भक्षं दर्शयति—

**अथास्यैष स्वो भक्षो न्यग्रोधस्यावरोधाश्च फलानि चौदुम्बराण्याश्वत्थानि प्लाक्षाण्यभिषुणुयात्तानि भक्षयेत्सोऽस्य स्वो भक्षः, इति ।**

अथ हेयभक्षकथनानन्तरमुपादेयो भक्षः कथ्यत इति शेषः । अस्य राज्ञ एष वक्ष्यमाणः स्वो भक्षः । कोऽसाविति सोऽभिधीयते । न्यग्रोधस्यावरोधाः शाखाभ्योऽवाङ्मुखत्वेन प्ररोहन्तो मूलविशेषाः । तथैवोदुम्बराश्वत्थप्लक्षाख्यानां वृक्षाणां फलानि च । तानि सर्वाण्यभिषुणुयात् । अभिषुत्य च तानि रसं भक्षयेत् । सोऽयमस्य क्षत्रियस्य स्वोचितो भक्षः ।

अथ न्यग्रोधप्रशंसार्थं तदुत्पत्तिं दर्शयति—

**यतो वा अधि देवा यज्ञेनेष्ट्वा स्वर्गं लोकमायंस्तत्रैतांश्चमसान्न्युब्जंस्ते न्यग्रोधा अभवन्न्युब्जा इति हाप्येनानेतर्ह्याचक्षते कुरुक्षेत्रे ते ह प्रथमजा न्यग्रोधानां तेभ्यो हान्येऽधिजाताः, इति ।**

देवाः पुरा यतो वा[1] अधि यस्य कुरुक्षेत्रस्योपरि यज्ञेनेष्ट्वा स्वर्गं लोकमायन्प्राप्नुवंस्तत्र तस्मिन्यज्ञदेशे[2] एतान्सोमचमसान्न्युब्जमधोमुखानस्थापयन् । अधोमुखास्ते चमसा न्यग्रोधवृक्षा अभवन् । एतर्हीदानीमपि तस्मिन्कुरुक्षेत्र एनान्न्यग्रोधवृक्षान्न्युब्जा इत्यनेन नाम्नाऽऽचक्षते । ते कुरुक्षेत्रदेशस्था वृक्षा भूलोकवर्तिनां सर्वेषां न्यग्रोधवृक्षाणां मध्ये प्रथमजाः प्रथमत उत्पन्नाः । तेभ्यस्तद्देशवर्तिन्यग्रोधवृक्षेभ्योऽन्ये देशान्तरवर्तिनो न्यग्रोधा अधिजाता आधिक्येनोत्पन्नाः ।

---

१ क. ख. ङ. वानधितो यज्ञस्य । म. वाजधितो यज्ञस्य । २ क. ख. ङ. म. °देशे ता° । ३ क. ख. ङ. म. °स्वानेतान° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



न्यग्रोधशब्दं निर्वक्ति—

ते यन्न्यञ्चोऽरोहंस्तस्मान्न्यङ्रोहति न्यग्रोहो न्यग्रोहो वै नाम तन्न्यग्रोहं सन्तं न्यग्रोध इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः ॥ ३० ॥ इति ।

ते चमसा यद्यस्मात्कारणान्न्यञ्चोऽधोमुखा अरोहन्प्रादुर्भूतास्तस्मात्कारणान्न्यङ्ङधोमुखो रोहति प्रादुर्भवतीति व्युत्पत्त्या न्यग्रोहः संपन्नः। स च वस्तुतो न्यग्रोह इत्येव नामार्हति। तस्य नाम्नो व्युत्पत्त्यनुसारित्वात् । तथाऽपि न्यग्रोहं सन्तं वृक्षं लौकिका हकारस्य धकारादेशं कृत्वा न्यग्रोध इति परोक्षनाम्ना व्यवहरन्ति । देवानां पूज्यानामाचार्योपाध्यायादीनां परोक्षनामप्रियत्वात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (३०) [१५३]।

---

न्यग्रोधवृक्षस्योत्पत्तिमुक्त्वा तदीयानामवरोधानां फलानां चोत्पत्तिं दर्शयति—

तेषां यश्चमसानां रसोऽवाङैत्तेऽवरोधा अभवन्नथ य ऊर्ध्वस्तानि फलानि, इति ।

तेषामधोमुखत्वेनावस्थितानां चमसानां वटवृक्षत्वे सति चमसगतो यो रसोऽवाङैदधोमुखोऽगच्छत् । ते रसविशेषा अवरोधा अधोमुखत्वेनोपन्ना वटशाखाभ्यो निर्गता मूलविशेषा अभवन् । अथ तद्वैलक्षण्येन यो रस ऊर्ध्वो निरगच्छत्तानि रसरूपाणि वटफलान्यभवन् ।

तेषामेवावरोधानां फलानां च क्षत्रियभक्षत्वं प्रशंसति—

एष ह वाव क्षत्रियः स्वाद्भक्षान्नैति यो न्यग्रोधस्यावरोधांश्च फलानि च भक्षयत्युपाह परोक्षेणैव सोमपीथमाप्नोति नास्य प्रत्यक्षं भक्षितो भवति परोक्षमिव ह वा एष सोमो राजा यन्न्यग्रोधः परोक्षमिवैष ब्रह्मणो रूपमुपनिगच्छति यत्क्षत्रियः पुरोधयैव दीक्षयैव प्रवरेणैव, इति ।

यः पुमान्न्यग्रोधवृक्षस्यावरोधांश्चाधोमुखानि मूलानि च तत्फलानि च भक्ष-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पत्येष एव क्षत्रियः स्वोचिताद्भक्षान्नापैति । किंचायं क्षत्रियः परोक्षेणैव न्यग्रोधव्यवधानेनैव सोमपीथं सोमपानमुपाह प्राप्नोति सर्वथा प्राप्नोति । अस्य क्षत्रियस्य प्रत्यक्षमव्यवधानं यथा भवति तथा सोमो भक्षितो न भवति। न्यग्रोधेन व्यवहितत्वात् । योऽयं न्यग्रोध एष परोक्षमेव यथा भवति तथा वर्तमानः सोमो राजा । योऽयं क्षत्रियोऽस्त्येषोऽपि परोक्षमिव व्यवधाने-नैव ब्राह्मणो भूत्वा रूपं तदीयवेषमुपनिगच्छति । पुरोधयैव पुरोहितद्वारेण दीक्षयैव दीक्षारूपसंस्कारेण च प्रवरेणैव पुरोहितगोत्रेण च ब्राह्मण्यस्य संपा-दितत्वादिति शेषः ।

प्रकारान्तरेण न्यग्रोधक्षत्रिययोः साम्यमापाद्य प्रशंसति—

क्षत्त्रं वा एतद्वनस्पतीनां यन्न्यग्रोधः क्षत्त्रं राजन्यो नितत इव हीह क्षत्त्रियो राष्ट्रे वसन्भवति प्रति-ष्ठित इव नितत इव न्यग्रोधोऽवरोहैर्भूम्यां प्रति-ष्ठित इव, इति ।

यो न्यग्रोधोऽस्त्येतन्न्यग्रोधस्वरूपं वनस्पतीनां मध्ये क्षत्त्रं वै क्षत्रियजाति-रेव। राजन्यो देशाधिपतिरपि क्षत्त्रं मनुष्याणां मध्ये क्षत्रियजातिः । किंचायं क्षत्रिय इह राष्ट्रे स्वदेशे वसन्नितत इव हि तत्तद्ग्रामेषु संचरणेन नितरां संतत एव भवति । तथा प्रतिष्ठित इव राज्यस्थैर्येण चलनरहित एव भवति । न्यग्रो-धवृक्षोऽप्यधोमुखैरवरोधैर्नितत इव नितरां व्याप्त एव भवति । तथा भूम्यां प्रतिष्ठित इव स्थिर एव भवति । तस्मादस्त्युभयोः साम्यम् ।

न्यग्रोधवृक्षमुपसंहरति—

तद्यत्क्षत्त्रियो यजमानो न्यग्रोधस्यावरोधांश्च फ-लानि च भक्षयत्यात्मन्येव तत्क्षत्त्रं वनस्पतीनां प्रति-ष्ठापयति क्षत्त्र आत्मानम्, इति ।

तत्तस्मान्न्यग्रोधक्षत्रिययोः सादृश्यसद्भावाद्यः क्षत्रियः पुरुषो यागं कुर्वन्न्य-ग्रोधवृक्षस्यावरोधान्फलानि च भक्षयेत्तदानीं वनस्पतीनां संबद्धं क्षत्त्रं क्षत्रियजातिमात्मन्येव स्वोदरमध्य एव प्रतिष्ठापयति । तथैव ऽऽत्मानं स्व-स्वरूपं वनस्पतिसंबन्धिनि क्षत्त्रे न्यग्रोधे प्रतिष्ठापयति ।

उपसंहृतं तं भक्षं पुनरपि प्रशंसति—

क्षत्त्रे ह वै स आत्मनि क्षत्त्रं वनस्पतीनां प्रतिष्ठाप-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यति न्यग्रोध इवावरोधैर्भूम्यां प्रति राष्ट्रे तिष्ठत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः ॥ ३१ ॥ इति ।

यः क्षत्रियो यागं कुर्वन्नेतं न्यग्रोधसंबन्धिनं भक्षं भक्षयति स क्षत्रियः सर्वं वनस्पतीनां संबन्धिनि क्षत्रे न्यग्रोधे प्रतिष्ठितः सन्नात्मनि स्वस्मिन्वनस्पतीनां संबन्धि क्षत्रं न्यग्रोधं प्रतिष्ठापयति । यथा न्यग्रोधोऽवरोधैर्भूम्यां प्रतिष्ठित एवमयं राजा राष्ट्रे प्रतितिष्ठति । अस्य राष्ट्रमुग्रं तेजस्वि सदव्यथ्यं केनापि व्यथितुमशक्यं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ ( ३१ ) [ १५४ ]।

---

न्यग्रोधस्यावरोधान्फलानि च प्रशस्यौदुम्बरादिप्रशंसां क्रमेण दर्शयति—

अथ यदौदुम्बराण्यूर्जो वा एषोऽन्नाद्याद्वनस्पतिरजायत यदुदुम्बरो भौज्यं वा एतद्वनस्पतीनामूर्जमेवास्मिंस्तदन्नाद्यं भौज्यं च वनस्पतीनां क्षत्रे दधाति, इति ।

अथ न्यग्रोधप्रशंसानन्तरमुदुम्बरप्रशंसा कथ्यते । यद्यान्यौदुम्बराणि फलानि भक्षत्वेनोक्तानि तेषामुत्पादको यदुदुम्बरोऽस्त्येष ऊर्जो रसादन्नाद्याच्च वनस्पतिरूपोऽजायत । एतदुदुम्बरफलं वनस्पतीनां मध्ये भौज्यं वै भोजनार्हमेव । तत्तेनौदुम्बरभक्षेणास्मिन्क्षत्र ऊर्जमेव रसमेव तथाऽन्नाद्यं वनस्पतीनां मध्ये भोजनयोग्यं द्रव्यमवस्थापयति ।

अश्वत्थफलानि प्रशंसति—

अथ यदाश्वत्थानि तेजसो वा एष वनस्पतिरजायत यदश्वत्थः साम्राज्यं वा एतद्वनस्पतीनां तेज एवास्मिंस्तत्साम्राज्यं च वनस्पतीनां क्षत्रे दधाति, इति ।

अथौदुम्बरप्रशंसानन्तरमश्वत्थफलानि प्रशस्यन्ते । यान्यश्वत्थफलानि सन्ति तेषां जनको योऽश्वत्थ एष वनस्पतिस्तेजस एवोदपद्यत । एतदश्वत्थफलं वनस्पतीनां संबन्धि साम्राज्यस्वरूपमेव । तत्तेनाश्वत्थफलभक्षेण तेज एव वनस्पतीनां साम्राज्यं चास्मिन्क्षत्रे स्थापयति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्लक्षफलानि प्रशंसति—

अथ यत्प्लाक्षाणि यशसो वा एष वनस्पतिरजायत यत्प्लक्षः स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यश एवास्मिंस्तत्स्वाराज्यवैराज्ये च वनस्पतीनां क्षत्रे दधाति, इति ।

अथाश्वत्थप्रशंसानन्तरं यानि प्लक्षफलानि विद्यन्ते तानि प्रशस्यन्ते । योऽयं प्लक्षोऽस्त्येष वनस्पतिर्यशस एवोत्पन्नः । एतत्प्लक्षफलं वनस्पतीनां संबन्धि स्वाराज्यवैराज्यरूपम् । स्वातन्त्र्येण राजत्वं स्वाराज्यम् । विशेषेण राजत्वं वैराज्यम् । तच्चेन प्लक्षफलेनास्मिन्क्षत्रे यशश्च स्वाराज्यवैराज्ये च संपादयति ।

भक्षद्रव्यं प्रशस्य तस्य प्रयोगमाह—

एतान्यस्य पुरस्तादुपक्लृप्तानि भवन्त्यथ सोमं राजानं क्रीणन्ति ते राज्ञ एवाऽऽवृतौपवसथात्प्रतिवेशैश्चरन्त्यथौपवसथ्यमहरेतान्यध्वर्युः पुरस्तादुपकल्पयेताधिषवणं चर्माधिषवणे फलके द्रोणकलशं दशापवित्रमद्रीन्पूतभृतं चाऽऽधवनीयं च स्थालीमुदञ्चनं चमसं च तद्यदेतद्राजानं प्रातरभिषुण्वन्ति तदेनानि द्वेधा विगृह्णीयादभ्यन्यानि सुनुयान्माध्यंदिनायान्यानि परिशिंष्यात् ॥ ३२ ॥ इति ।

एतानि न्यग्रोधावरोधादीन्यस्य राज्ञोऽर्थे सोमक्रयात्पूर्वमुपक्लृप्तानि संपादितानि भवन्ति तत ऊर्ध्वं सोमक्रयः । ततस्तेऽध्वर्युप्रभृतयो राज्ञ एवाऽऽवृता सोमस्यैव प्रकारेणौपवसथादिनात्पूर्वं प्रतिवेशैः प्रसिद्धैः क्रियाविशेषैश्चरन्त्यनु[ति]ष्ठेयुः । अथानन्तरमौपवसथ्यमहः । औपवसथ्येऽहन्यध्वर्युः पुरस्तात्प्रथममेतानि वक्ष्यमाणानि चर्मादीन्युपकल्पयेत्संपादयेत् । यस्मिंश्चर्मणि सोमोऽभिषूयते तच्चर्माधिषवणाख्यम् । ययोः फलकयोरभिषूयते ते फ[लके] अधिषवणसंज्ञके । द्रोणकलशं मौढदारुपात्रम् । दशापवित्रं वस्त्रम् । अद्रयोऽभिषवणार्था

1 ख. ग. घ. ङ. न. छ. य. °पूतोप°

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ग्रावाणः । पूतभृदाधवनीयौ पात्रविशेषौ । स्थाली कुम्भः । उदञ्चनमुन्नयनपात्रम् । चमसो भक्षार्थं दारुपात्रम् । एतान्यध्वर्युः संपाद्य तत ऊर्ध्वं यद्यदेवैतं राजानं प्रातःकालेऽभिषुण्वन्ति तत्तदानीमेतानि न्यग्रोधावरोधादीनि द्वेधा विभजेत् । तत्रान्यान्येकभागगतानि तस्मिन्प्रातःसवनेऽभिषुणुयात् । इतरभागगतानि तु माध्यंदिनसवनाय स्थापयेत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये षष्ठः खण्डः ॥ ६ ॥ ( ३२ ) [ १५५ ]।

====

अथास्य फलचमसोन्नयनादिप्रयोगं दर्शयति—

तद्यत्रैतांश्चमसानुन्नयेयुस्तदेतं यजमानचमसमुन्नयेत्तस्मिन्द्वे दर्भतरुणके प्रास्ते स्यातां तयोर्वषट्कृतेऽन्तःपरिधि पूर्वं प्रास्येद्दधिक्राव्णो अकारषमित्येतयर्चा सस्वाहाकारयाऽनुवषट्कृतेऽपरमा दधिक्राः शवसा पञ्च कृष्टीरिति, इति ।

तत ऊर्ध्वं यत्र यदैतान्ब्रह्महोत्रादिचमसान्दशसंख्याकानुन्नयेयुस्तदेदानीं यजमानस्य राज्ञश्चमसमुन्नयेत् । अभिषुतेन न्यग्रोधावरोधादिना पूरयेत् । तस्मिन्पूरिते चमसेऽल्पं दर्भद्वयं प्रक्षिप्य तयोर्मध्ये प्रथमप्रक्षिप्तं दर्भं वषट्कृते वषट्कारे कृते सति दधिक्राव्ण इत्येतयर्चा स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत् । अनुवषट्कृतेऽनुवषट्कारे कृते सत्यपरं दर्भमा दधिक्रा इत्यनयर्चा पूर्ववत्स्वाहाकारसहितया परिधीनामन्तः प्रक्षिपेत् ।

अथास्य फलचमसस्य भक्षणं विधत्ते—

तद्यत्रैतांश्चमसानाहरेयुस्तदेतं यजमानचमसमाहरेत्तान्यत्रोद्गृह्णीयुस्तदेनमुपोद्गृह्णीयाद्यदेळां होतोपह्वयेत यदा चमसं भक्षयेदथैनमेतथा भक्षयेत्, इति ।

ततो होमादूर्ध्वं यत्र यदैतान्होत्रादीनां चमसानृत्विज आहरेयुस्तदानीमेतं यजमानस्य राज्ञश्चमसमाहरेत् । तानाहृतान्होत्रादिचमसान्यत्र यदोद्गृह्णीयु

---

दधिक्राव्णो अकारिषं०—४–४०–६ । आ दधिक्राः शवसा पञ्च कृष्टीः—२–१९–१० ।

Digitized by Arya Samaj Foundation Chennai and eGangotri


भक्षणार्थमूर्ध्वं धारयेयुस्तत्तदानीमेतं यजमानस्य राज्ञश्चमसमुपोद्गृह्णीयादूर्ध्वं धारयेत् । तत ऊर्ध्वं यदा होतेळामुपह्वयेतोपहूय च स्वकीयं चमसं यदा भक्षयेदथ तदानीमेनं यजमानचमसमेतया वक्ष्यमाणयर्चा राजा भक्षयेत् ।

तामृचं पठति—

**यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामीति, इति ।**

रसिनो रसयुक्तस्य सुतस्याभिषुतस्यावरोधादिद्रव्यस्यात्र पात्रे यच्छिष्टं योऽवशिष्टो भागो यच्च पात्रस्थं द्रव्यमिन्द्रः शचीभिः कर्मविशेषैः संस्कृतमपिबत् । शचीशब्दः कर्मनामसु पठितः । अस्य द्रव्यस्य संबन्धि तदिदं शिष्टं शिवेन भक्तियुक्ततया मङ्गलेन मनसेह कर्मणि सोमं राजानं सोमराजरूपं भावयित्वा भक्षयामि ।

तदिदं समन्त्रकभक्षणं प्रशंसति—

**शिवो ह वा अस्मा एष वानस्पत्यः शिवेन मनसा भक्षितो भवत्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः, इति ।**

यः क्षत्रियो यजमान एवमुक्तेन प्रकारेणैतं फलचमसरूपं भक्षं भक्षयत्यस्मै यजमानायैष वानस्पत्यो वानस्पत्यो भक्षः शिवो ह वै मङ्गलो हितकारी भूत्वा शिवेन मनसा भक्तियुक्तेन मङ्गलेन मनसा भक्षितो भवति । अस्य राज्ञो राष्ट्रमुग्रं शत्रूणामभिभवनायोग्ररूपं भूत्वा केनाप्यव्यथ्यं व्यथयितुमशक्यं भवति । भयं चलनं वा कदाचिदपि नास्य राष्ट्रस्य भवतीत्यर्थः ।

भक्षणादूर्ध्वं मन्त्रेणाऽऽत्मस्पर्शं विधत्ते—

**शं न एधि हृदे पीतः प्र ण आयुर्जीवसे सोम तारीरित्यात्मनः प्रत्यभिमर्शः, इति ।**

हे सोम सोमस्थानीयावरोधादिभक्षास्माभिः पीतः सन्नोऽस्माकं हृदये शमेधि सुखहेतुर्भव । जीवसे चिरजीवनाय नोऽस्माकमायुः प्रतारीः प्रकर्षेण संपादय । इत्यनेन मन्त्रेणाऽऽत्मनः स्वकीयहृदयस्य प्रत्यभिमर्शो हस्तेन संपूर्णः स्पर्शः कर्तव्यः ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अथान्वयव्यतिरेकाभ्यामभिमर्शं प्रशंसति—

ईश्वरो ह वा एषोऽप्रत्यभिमृष्टो मनुष्यस्याऽऽयुः प्रत्यवहर्तोरनर्हन्मा भक्षयतीति तद्यदेतेनाऽऽत्मानमभिमृशत्यायुरेव तत्प्रतिरते, इति ।

एषोऽवरोधादिभक्षोऽप्रत्यभिमृष्टो मन्त्रपूर्वकात्मस्पर्शरहितः सन्मनुष्यस्य राज्ञ आयुः प्रत्यवहर्तोर्विनाशयितुमीश्वरः समर्थो भवति । केनाभिप्रायेणेति सोऽभिधीयते । अनर्हन्भक्षयितुमयोग्यः सन्मा भक्षयतीति तस्य भक्षस्याभिप्रायः । सोऽयं व्यतिरेकः । तद्यदित्यादिरन्वयः । तत्तदा भक्षणादूर्ध्वं यथैतेन शं न इत्यादिमन्त्रेणाभिमृशति तत्तेनाभिमर्शनेनाऽऽयुरेव प्रतिरते प्रकर्षेण वर्धयति ।

द्वाभ्यामृग्भ्यां तस्य चमसस्य पूरणं विधत्ते—

आप्यायस्व समेतु ते सं ते पयांसि समु यन्तु वाजा इति चमसमाप्याययत्यभिरूपाभ्यां यद्यज्ञेऽभिरूपं तत्समृद्धम् ॥ ३३ ॥ इति ।

प्रथमायामृच्याप्यायस्वेति श्रवणाद्द्वितीयस्यास्तृतीयपादे चाऽऽप्यायमान इति श्रवणादिदं मन्त्रद्वयमाप्यायनस्याभिरूपमनुकूलम् । यज्ञे यदङ्गमभिरूपमनुकूलं क्रियते तदङ्गं समृद्धं संपूर्णं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ ( ३३ ) [ १५६ ]।

---

भक्षितप्राप्यायितस्य नाराशंससंज्ञस्य चमसस्य प्रयोगं विधत्ते—

तद्यत्रैतांश्चमसान्सादयेयुस्तदेतं यजमानचमसं सादयेतान्यत्र प्रकम्पयेयुस्तदेनमनु प्रकम्पयेदथैनमाहृतं भक्षयेन्नराशंसपीतस्य देव सोम ते मतिविद ऊमैः पितृभिर्भक्षितस्य भक्षयामीति प्रातःसवने नाराशंसो भक्ष ऊर्वैरिति माध्यंदिने काव्यैरिति तृतीयसवने, इति ।

---

आप्यायस्व समेतु० — १–९१–१६ । सं ते पयांसि समु० — १९-१-१८।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तत्तस्मादाप्यायनादूर्ध्वं यत्र यदैतान्होत्रादीनां चमसानाप्यायितान्सादयेयुस्तदानीमेतं यजमानस्य राज्ञश्चमसं सादयेत् । तान्होत्रादीनां चमसान्यदा प्रकम्पयेयुस्तदैवैनं राजचमसमनु प्रकम्पयेत् । अथानन्तरमेनं चमसं भक्षणार्थमाहृतं नराशंसेत्यादिमन्त्रेण भक्षयेत् । हे [ सोम ] सोमसदृश फलचमस देव नराशंसपीतस्य नरा मनुष्या ऋभुप्रमुखाः शस्यन्ते यस्मिन्सवनविशेषे सोऽयं नराशंसस्तत्र देवैः पीतस्योमनामभिः पितृभिश्च भक्षितस्य मतिविदोऽस्मदभिप्रायाभिज्ञस्य ते भक्षयामीत्यनेन मन्त्रेण प्रातःसवने नाराशंसचमसभक्षः कर्तव्यः । इतरयोस्तु सवनयोस्तस्मिन्मन्त्र ऊमैरित्यस्य पदस्य स्थान ऊर्वैः काव्यैरिति पदद्वयं क्रमेण पठनीयम् ।

त्रिविधमन्त्रतात्पर्यं दर्शयति—

ऊमा वै पितरः प्रातःसवन ऊर्वा माध्यंदिने काव्यास्तृतीयसवने तदेतत्पितृनेवामृतान्सवनभाजः करोति, इति ।

ऊमा ऊर्वाः काव्या इत्येते सवनत्रयगताः पितृविशेषाः । अतस्तच्छब्दप्रयोगेण तान्पितृन्सवनभाजः करोति । पितरश्च द्विविधाः । मृता अमृताश्च । इदानीं मनुष्याः सन्तो मरणादूर्ध्वं पितृलोकं प्राप्ता मृताः । सृष्टिमारभ्य पितृलोकेऽवस्थिता अमृता ऊमादयः । तथाविधत्वादमृतशब्देन विशेष्यन्ते ।

अथ मन्त्रतात्पर्ये मतान्तरं दर्शयति—

सर्वो हैव सोऽमृत इति ह स्माऽऽह प्रियव्रतः सोमापो यः कश्च सवनभागिति, इति ।

न केवलमूमादय एव पितरः प्रसिद्धा अमृताः किंतु यः कोऽपि पिता सवनभाग्भवति स सर्वोऽप्यूमादिशब्दैरुपलक्षितत्वादमृत एव भवतीति सोमापः सोमपः प्रियव्रताख्यो महर्षिराह स्म ।

इदानीं नराशंसचमसभक्षं प्रशंसति—

अमृता ह वा अस्य पितरः सवनभाजो भवन्त्युग्रं हास्य राष्ट्रमव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानः, इति ।

---

१ झ. पीत्वा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अस्य राज्ञो भक्षयितुः पितरः पितृपितामहादयः सर्वेऽपि सवनभाजः सन्तोऽमृता मरणरहिता देवा भवन्ति । उग्रमित्यादि पूर्ववत् ।

शं न इत्यादिमन्त्रेण स्वदेहस्पर्शनमाप्यायस्वेति मन्त्रद्वयेन चमसपूरणं च प्रात.सवने यदुक्तं तदुत्तरयोः सवनयोरतिदिशति—

समान आत्मनः प्रत्यभिमर्शः समानमाप्यायनं चमसस्य, इति ।

फलचमसे विद्यमानं प्रयोगविशेषमभिधायावशिष्टं सोमचमसगतं प्रयोगं सवनत्रयेऽप्यतिदिशति—

प्रातःसवनस्यैवाऽऽवृता प्रातःसवने चेरयुर्माध्यंदिनस्य माध्यंदिने तृतीयसवनस्य तृतीयसवने, इति ।

सोमविषयस्य प्रातःसवनस्यैवाऽऽवृता प्रकारेण फलचमसविषयप्रातःसवने चरेयुरनु[ति]ष्ठेयुः । एवमितरत्रापि योज्यम् ।

उक्तं फलचमसभक्षमुपसंहरति—

तमेवमेतं भक्षं प्रोवाच रामो मार्गवेयो विश्वंतराय सौषद्मनाय, इति ।

अथ विश्वंतरस्य वाक्यं दर्शयति—

तस्मिन्होवाच प्रोक्ते सहस्रमु ह ब्राह्मण तुभ्यं दद्मः सश्यापर्ण उ मे यज्ञ इति, इति ।

तस्मिन्राजभक्षे रामेण प्रोक्ते सति स राजा रामं प्रत्येवमुवाच । हे ब्राह्मण राम तुभ्यं वयं सहस्रमु ह गवां सहस्रं संपूर्णं दद्मः । पुरा मे यज्ञो विश्यापर्ण आसीत् । इदानीं तु सश्यापर्ण एवास्तु । भवदीयाः श्यापर्णनामकाः सर्वे ब्राह्मणा अस्मिन्यज्ञे वसन्त्विति ।

इदानीं संप्रदायकथनेन भक्षं प्रशंसति—

एतमु हैव प्रोवाच तुरः कावषेयो जनमेजयाय पारिक्षितायैतमु हैव प्रोचतुः पर्वतनारदौ सोमकाय साहदेव्याय सहदेवाय सार्ञ्जयाय बभ्रवे

१ ख. ॰ न्राज्ञो म॰ । २ ग्र. ॰ति र॰ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



देवावृधाय भीमाय वैदर्भाय नग्नजिते गान्धारायै-तमु हैव प्रोवाचाग्निः सनश्रुतायारिंदमाय क्रतुविदे जानकय एतमु हैव प्रोवाच वसिष्ठः सुदासे पैजवनाय ते ह ते सर्वे एव महज्जग्मुरेतं भक्षं भक्षयित्वा सर्वे हैव महाराजा आसुरादित्य इव ह स्म श्रियां प्रतिष्ठितास्तपन्ति सर्वाभ्यो दिग्भ्यो बलिमावहन्तः, इति ।

एतं पूर्वोक्तमेव भक्षं कवषस्य पुत्रस्तुरनामको महर्षिः परिक्षित्पुत्राय जनमेजयसंज्ञकाय प्रोवाच । अयमेकः संप्रदायः । तथैतमेव भक्षं पर्वतनारदाख्यावृषी सहदेवस्य पुत्राय सोमकाय प्रोचतुः । सोमकश्चान्यस्मै सहदेवाय प्रोवाच । सहदेवश्च साञ्जयाय प्रोवाच । साञ्जयश्च बभ्रवे प्रोवाच । बभ्रुश्च देवावृधाय प्रोवाच । देवावृधश्च भीमाय प्रोवाच । भीमश्च वैदर्भाय प्रोवाच । वैदर्भश्च नग्नजिते प्रोवाच । नग्नजिच्च गान्धाराय प्रोवाच । अयं द्वितीयः संप्रदायः । तथैतमेव भक्षमग्निनामको महर्षिः सनश्रुताय प्रोवाच । सनश्रुतश्चारिंदमाय प्रोवाच । अरिंदमश्च क्रतुविदे प्रोवाच । क्रतुविच्च जानकये प्रोवाच । अयं तृतीयः संप्रदायः । तथैतमेव भक्षं वासिष्ठो महर्षिः सुदासे महर्षये प्रोवाच । सुष्ठु धनं दासतीति सुदाः । अथवा सुष्ठु शत्रून्दस्यत्युपक्षयतीति सुदाः । स च पैजवनाय प्रोवाच । यद्वा सहदेवाय साञ्ज[या]येत्यादिषु वाक्येषु सहदेवादिनाम्नां साञ्जयादिपदानि विशेषणतया योज्यानि । द्वितीयस्तच्छब्द एतच्छब्दार्थः । ते हैते तुरादयः पैजवनान्ताः सर्व एव पुरुषा एतं फलचमसभक्षं भक्षयित्वा महज्जग्मुर्महत्त्वं प्राप्ताः । महत्त्वस्यैव सर्वे हेत्यादिकं विवरणम् । सर्वेऽप्येते महाराजाः सार्वभौमा आसुः । यथाऽऽदित्यो द्युलोके प्रतिष्ठितस्तपत्येवमेते श्रियां गजाश्वादिकायां संपदि प्रतिष्ठिताः सन्तस्तपन्ति शत्रूणां तापं कुर्वन्ति । तथा सर्वाभ्यो दिग्भ्यः सर्वदिगवस्थितेभ्यो राजभ्यः सकाशाद्बलिमावहन्तः करमाददानाः स्वामिनो भवन्ति ।

नराशंसभक्षं पुनरपि फलकथनेन प्रशंसति—

आदित्य इव ह वै श्रियां प्रतिष्ठितस्तपति सर्वाभ्यो दिग्भ्यो बलिमावहत्युग्रं हास्य राष्ट्र-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मव्यथ्यं भवति य एवमेतं भक्षं भक्षयति क्षत्रियो यजमानो यजमानः ॥ ३४ ॥ इति ।

पूर्ववद्व्याख्येयम् । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये पञ्चत्रिंशाध्यायेऽष्टमः खण्डः ॥ ८ ॥ ( ३४ ) [ १५७ ] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

इत्यैतरेयब्राह्मणे सप्तमपञ्चिका समाप्ता ॥ ७ ॥

( पञ्चिकाङ्काः ७ । अध्यायाङ्काः ३५ । खण्डाङ्काः १५७ ) ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

# अथाष्टमपञ्चिकाप्रारम्भः ।

## अथ षट्त्रिंशोऽध्यायः ।

फलाख्यचमसो भक्षो राज्ञो यज्ञे प्रकीर्तितः ।
उच्यते राजयज्ञेऽस्मिन्विशेषः स्तोत्रशस्त्रयोः ॥

तदेतत्प्रतिजानीते—

अथातः स्तुतशस्त्रयोरेव, इति ।

अथ राज्ञो भक्षे विशेषकथनानन्तरं यतः स्तुतशस्त्रयोर्विशेषो जिज्ञासितोऽतः कारणात्तयोरेव विशेष उच्यत इति शेषः ।

तं विशेषं वक्तुमादौ विशेषरहितमंशं दर्शयति—

ऐकाहिकं प्रातःसवनमैकाहिकं तृतीयसवनमेते वै शान्ते क्लृप्ते प्रतिष्ठिते सवने यदैकाहिके शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै, इति ।

एकाहे प्रकृतिभूते यत्प्रातःसवनं यच्च तृतीयसवनमुक्तं तदुभयं राज्ञो विक्रतावपि तथैव प्रयोक्तव्यम् । न तु तयोः कश्चिद्विशेषोऽस्ति । ऐकाहिके ये उभे प्रातःसवनतृतीयसवने स्त एते एव शान्ते सुखकरे क्लृप्ते स्वभ्यस्ते प्रतिष्ठिते संपन्ने । अतस्तयोः प्रकृतिवदनुष्ठानं शान्त्यै सुखार्थं क्लृप्त्यै स्वभ्यासार्थं प्रतिष्ठित्यै च संपत्त्यर्थमप्रच्युत्यै विनाशराहित्यार्थं भवति ।

यथा प्रातःसवनतृतीयसवनयोः प्राकृताद्विशेषो नास्ति तथा माध्यंदिनसवनेऽपि मरुत्वतीयमैकाहिकं होत्रकशस्त्राणि चैकाहिकानि । स्तोत्रे तु विशेषोऽस्ति तमिमं दर्शयति—

उक्तो माध्यंदिनः पवमानो य उभयसाम्नो बृहत्पृष्ठस्योभे हि सामनी क्रियेते, इति ।

बृहद्रथंतरं चेत्युभयविधं साम यस्मिन्नभिजिदादौ सोऽयमुभयसामा । बृहत्साम पृष्ठं स्तोत्रं यस्मिन्नभिजिदादौ सोऽयं बृहत्पृष्ठः । तादृशस्योभयसाम्नो बृहत्पृष्ठस्याभिजिदादेर्यो माध्यंदिनः पवमान उक्तः स एवात्र राजयज्ञे माध्यंदिनः पवमानो द्रष्टव्यः । न चोभयसामत्वं बृहत्पृष्ठत्वं चोभयं व्याहतमिति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



शस्त्रनीयम् । माध्यंदिनपवमानस्तोत्रे रथंतरं साम पृष्ठस्तोत्रे बृहत्सामेत्येवमुभयसामत्वस्य व्यवस्थितत्वात् । उभे हीत्यनेनेयमेव व्यवस्था स्पष्टी क्रियते । यद्यपि मरुत्वतीयशस्त्रावयवाः प्रतिपदादयः प्राकृता एव तथाऽपि तदनुवादेनात्र प्रशंसा क्रियते ।

तत्र प्रतिपदनुचरौ दर्शयति—

**आ त्वा रथं यथोतय इदं वसो सुतमन्ध इति राथंतरी प्रतिपद्राथंतरोऽनुचरः पवमानोक्थं वा एतद्यन्मरुत्वतीयं पवमाने वा अत्र रथंतरं कुर्वन्ति बृहत्पृष्ठं सवीवधतायै तदिदं रथंतरं स्तुतमाभ्यां प्रतिपदनुचराभ्यामनुशंसति, इति ।**

आ त्वा रथमिति यत्तृचः सोऽयं मरुत्वतीयशस्त्रस्य प्रतिपत् । तस्मिंस्तृचे रथंतरं सामोद्गातृभिर्गीयते । तस्मादियं प्रतिपद्राथंतरी । इदं वसो सुतमन्ध इत्ययं तृचोऽनुचरः । छन्दोदेवतादिना पूर्वेण समानत्वात् । रथंतरसामाधारस्य पूर्वस्य तृचस्यानुसारित्वादस्यापि राथंतरत्वम् । यन्मरुत्वतीयं शस्त्रमस्त्येतत्पवमानोक्थं वै । पवमानस्तोत्रानुसारेण शस्यमानत्वात् । उक्थं शस्त्रम् । तच्च द्विविधम् । पवमानोक्थं ग्रहोक्थं च । अतोऽत्र पवमानोक्थमिति विशेष्यते । अस्मिंश्च माध्यंदिनपवमानस्तोत्रे सामगा रथंतरं साम कुर्वन्ति । पृष्ठस्तोत्रं तु बृहत्सामोपेतं कुर्वन्ति । तदेतदुभयं सवीवधतायै संपद्यते । उभयतः शिक्यद्वयेन जलकुम्भद्वयं वोढुं यः काष्ठविशेषः पुरुषाणामंसे स्थाप्यते स वीवध इत्युच्यते । सामद्वयेऽपि तस्य माध्यंदिनसवनप्रयोगस्य वीवधसदृशत्वाद्वीवधेन सह वर्तत इति सवीवधत्वम् । यादिदं रथंतरं साम माध्यंदिने पवमाने स्तुतं तदिदमाभ्यामा त्वा रथमिदं वसो सुतमित्येताभ्यां प्रतिपदनुचराभ्यामनुशंसेत् ।

ब्रह्मक्षत्रपृथिवीरूपत्वेन रथंतरं प्रशंसति—

**अथो ब्रह्म वै रथंतरं क्षत्रं बृहद्ब्रह्म खलु वै क्षत्रात्पूर्वं ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदित्यथान्नं वै रथंतरमन्नमेवास्मै तत्पुरस्तात्कल्प-**

---

आ त्वा रथं यथोतये०—८-६८-१ । इदं वसो सुतमन्धः० —८-२-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

यत्यथेयं वै पृथिवी रथंतरमियं खलु वै प्रतिष्ठा प्रतिष्ठामेवास्मै तत्पुरस्तात्कल्पयति, इति ।

यद्रथंतरं साम तद्ब्राह्मणजातिस्वरूपम् । उभयोः प्रजापतिमुखजत्वात् । तथा बृहत्सामक्षत्रियजात्योः प्रजापतेर्बाहुजत्वसाम्यादेकत्वम् । ब्राह्मणजातिः क्षत्रियजातेः पूर्वभाविनी ! अतो बृहत्सामसाध्यात्पृष्ठस्तोत्रात्पूर्वं रथंतरसामसाध्यस्य पवमानस्तोत्रस्यानुष्ठानेऽयमभिप्रायः । ब्रह्म ब्राह्मणजातिः पुरस्तात्पूर्वकाले यस्य राष्ट्रस्य तदिदं ब्रह्म पुरस्ताद्यदिदं मे राज्ञो राष्ट्रमुग्रमव्यथ्यमसत्त्वेदित्यभिप्रायः । किंचान्नहेतुत्वाद्रथंतरं सामान्नात्मकं तच्चेन रथंतरप्रयोगेणास्मै राज्ञेऽन्नमेव पुरस्तात्कल्पयति प्रथमतः संपादयति । किंच यद्रथंतरं सामेयं पृथिवी भूमिस्वरूपमेव । इयं च भूमिः प्राणिनां प्रतिष्ठाऽऽधारा(रः) । तच्चेन रथंतरप्रयोगेणास्मै यजमानाय राज्ञे प्रतिष्ठामेव कल्पयति ।

इन्द्र नेदीय एदिहीत्युत्तिष्ठ ब्रह्मणस्पत इत्येतत्प्रगाथद्वयं प्रशंसति—

समान इन्द्रनिहवोऽविभक्तः सोऽह्नामुद्वान्ब्राह्मणस्पत्य उभयसाम्नो रूपमुभे हि सामनी क्रियेते, इति ।

इन्द्रो नितरामाहूयते यस्मिन्प्रगाथे सोऽत्र च प्रकृतौ च समान एक एव । तस्यैवेदं व्याख्यानमविभक्त इति । अविकृत इत्यर्थः । स प्रगाथोऽह्नां रूपमिति शेषः । अहःप्रयोगस्य निष्पादकत्वात्तद्रूपत्वम् । यः प्रगाथ उद्वानुच्छ्ब्दयुक्तो ब्राह्मणस्पत्यो ब्रह्मणस्पतिदेवताकश्चोत्तिष्ठ ब्रह्मणस्पत इत्येवं श्रुतत्वात् । सोऽपि शंसनीयः । किंचासौ प्रगाथ उभयसाम्नो रूपं हि यस्मादुभे वृहद्रथंतरे सामनी तस्मिन्प्रगाथे सामगैरभिधीयेते ।

धाय्यानामृचां प्रकृतौ विकृतौ चैकत्वमाह—

समान्यो धाय्या अविभक्तास्ता अह्नाम्, इति ।

समान्य इत्यस्य व्याख्यानमविभक्ता इति । ताश्चाहर्विशेषनिष्पादकत्वात्तत्स्वरूपाः ।

प्र व इन्द्राय बृहत इत्यस्य मरुत्वतीयप्रगाथस्य प्रकृतिविकृत्योरेकत्वं दर्शयति—

ऐकाहिको मरुत्वतीयः प्रगाथः ॥ १ ॥ इति ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षट्त्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ [ १५८ ] ।

---

११३

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मरुत्वतीये शस्त्रे निविद्धानीयं सूक्तं प्रशंसति—

जनिष्ठा उग्रः सहसे तुरायेति सूक्तमुग्रवत्सहस्वत्तत्क्षत्रस्य रूपं मन्द्र ओजिष्ठ इत्योजस्वत्तत्क्षत्रस्य रूपं बहुलाभिमान इत्यभिवदभिभूत्यै रूपं तदेकादशर्चं भवत्येकादशाक्षरा वै त्रिष्टुप्त्रैष्टुभो वै राजन्य ओजो वा इन्द्रियं वीर्यं त्रिष्टुबोजः क्षत्त्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्त्रेण वीर्येण समर्धयति तद्गौरिवीतं भवत्येतद्वै मरुत्वतीयं समृद्धं यद्गौरिवीतं तस्योक्तं ब्राह्मणम्, इति ।

जनिष्ठा इत्यस्मिन्पाद उग्रशब्दसहःशब्दयोर्विद्यमानत्वात्तदेतत्सूक्तमुग्रवत्सहस्वत्तच्चोभयं क्षत्त्रियजातेः स्वरूपम् । क्षत्त्रियोऽपि क्रूरो बलवांश्च । द्वितीयपादस्य पूर्वभागे मन्द्र ओजिष्ठ इति श्रुतत्वात्सूक्तमोजःशब्दोपेतम् । ओजो नाम बलहेतुरष्टमो धातुः । तस्य च धातोः क्षत्त्रिये संपूर्णत्वादोजःशब्दोपेतं सूक्तं क्षत्त्रियस्य स्वरूपम् । तदुत्तरभागे बहुलाभिमान इति श्रुतत्वादभिवदभिशब्दोपेतम् । तच्चाभिभूत्यै शत्रूणामभिभवस्य स्वरूपम् । किंच तत्सूक्तमेकादशर्चं भवति । त्रिष्टुप्चैकादशाक्षरा । राजन्यश्च त्रिष्टुप्संबन्धी । तयोः प्रजापतिबाहुजत्वात् । किंच यत्त्रिष्टुबोजःप्रभृतीनां हेतुत्वात्तत्स्वरूपम् । ओजो बलहेतुरष्टमो धातुः । वीर्यं शरीरबलम् । इन्द्रियं चक्षुरादिपाटवम् । राजन्यश्चोजःप्रभृतीनां स्वरूपभूतस्तत्रौजः पूर्वमेवोक्तम् । क्षत्त्रं क्षत्त्रियजातियुक्तत्वम् । वीर्यं शरीरादिबलम् । एवं च राजयज्ञे तत्तेन त्रिष्टुप्छन्दस्कसूक्तपाठेनैनं राजानमोजःक्षत्त्रवीर्यैः समृद्धं करोति । किंचैतत्सूक्तं गौरिवीताख्येन महर्षिणा दृष्टत्वाद्गौरिवीताख्यं भवति । यस्मादेतद्गौरिवीतं तस्मादेतन्मरुत्वतीयशस्त्रं समृद्धं संपूर्णं भवति । तस्य च गौरिवीतनाम्नः सूक्तस्य ब्राह्मणं तद्वा एतद्यजमानजननमित्यादिना पूर्वमेवोक्तम् ।

अथ निष्केवल्यशस्त्रमाह—

त्वामिद्धि हवामह इति बृहत्पृष्ठं भवति क्षत्त्रं वै

---

जनिष्ठा उग्रः सहसे तुराय०—१०–७३–१ । त्वामिद्धि हवामहे०—६–४६–१

---

१ क्ष तयोरुभयोः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

बृहत्क्षत्त्रेणैव तत्क्षत्त्रं समर्धयत्यथो क्षत्त्रं वै बृहदात्मा यजमानस्य निष्केवल्यं तद्यद्बृहत्पृष्ठं भवति क्षत्त्रं वै बृहत्क्षत्त्रेणैवैनं तत्समर्धयत्यथो ज्यैष्ठ्यं वै बृहज्ज्यैष्ठ्येनैवैनं तत्समर्धयत्यथो श्रैष्ठ्यं वै बृहच्छ्रैष्ठ्येनैवैनं तत्समर्धयति, इति ।

त्वामिद्धीत्यादिकस्तृचो निष्केवल्यशस्त्रस्य स्तोत्रियप्रतिपद्रूपाद्बृहत्साम्न आधारत्वाद्बृहद्रूपः । तेन च साम्ना पृष्ठस्तोत्रस्य निष्पाद्यत्वात्पृष्ठस्वरूपश्च भवति । त्वामिद्धीत्यस्यामृच्युत्पन्नं बृहत्साम क्षत्त्रं वै क्षत्त्रियजातिरूपमेव। अतः क्षत्त्रेणैव त्वामिद्धीति तृचरूपेण तत्क्षत्त्रं यजमानरूपं समृद्धं करोति । अथो अपि चोक्तरीत्या क्षत्त्रमेव बृहद्रूपं निष्केवल्यशस्त्रं यजमानस्याऽऽत्मा देहभूतः । तत्तथा सति यद्यदि बृहत्पृष्ठशब्दद्वयवाच्यं त्वामिद्धीत्यादिकं निष्केवल्यं भवेत्तेन निष्केवल्येन क्षत्त्रं वै बृहदिति पूर्वमुक्तत्वात्क्षत्त्रेणैव त्वामिद्धीत्यादिना बृहद्रूपेण निष्केवल्येनैनं यजमानं समृद्धं करोति । अथो अपि च त्वामिद्धीत्यादिकं बृहद्रूपं ज्यैष्ठ्यं वै वयोवृद्धेः स्वरूपम् । अतो ज्यैष्ठ्येनैव वयोवृद्ध्यैवैनं राजानं समृद्धं करोति । अथो अपि च त्वामिद्धीत्यादिकं बृहद्रूपं श्रैष्ठ्यं वै गुणोत्कर्ष एव । तथा सति श्रैष्ठ्येनैव गुणोत्कर्षेणैव यजमानं समृद्धं करोति ।

निष्केवल्यशस्त्रस्य प्रतिपदमुक्त्वाऽनुरूपमाह—

अभि त्वा शूर नोनुम इति रथंतरमनुरूपं कुर्वन्त्ययं वै लोको रथंतरमसौ लोको बृहदस्य वै लोकस्यासौ लोकोऽनुरूपोऽमुष्य लोकस्यायं लोकोऽनुरूपस्तद्यद्रथंतरमनुरूपं कुर्वन्त्युभावेव तल्लोकौ यजमानाय संभोगिनौ कुर्वन्त्यथो ब्रह्म वै रथंतरं क्षत्त्रं बृहद्ब्रह्मणि खलु वै क्षत्त्रं प्रतिष्ठितं क्षत्त्रे ब्रह्माथो साम्न एव सयोनितायै, इति ।

अभि त्वा शूरेत्येष तृचो निष्केवल्यशस्त्रस्यानुरूपः कार्यः । यद्यपि त्वामिद्ध्यभि त्वेत्येतौ प्रगाथात्मकौ तथाऽपि प्रग्रथनेन तृचत्वं संपाद्य

---

अभि त्वा शूर नोनुमः० —७-३२-२२ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्रतिपदनुचरत्वं द्रष्टव्यम् । अभि त्वेत्ययं तृचो रथंतरसाम्न आधारत्वाद्रथंतरमित्युच्यते । बृहद्रथंतरशब्दाभ्यां विवक्षितं त्वामिद्ध्यभि त्वेति तृचद्वयं मिलित्वा प्रशस्यते । भूलोको रथंतरस्वरूपः । स्वर्गलोको बृहत्स्वरूपस्तावेतौ लोकौ परस्परानुरूपौ । अस्मिँल्लोके दत्तेन हविषा देवाः स्वर्गे जीवन्ति । स्वर्गादागतया वृष्ट्या मनुष्या जीवन्ति । तदेतत्परस्परमनुरूपत्वम् । एवं सति बृहद्रथंतररूपाभ्यां प्रतिपदनुचराभ्यामुभावेव लोकौ यजमानार्थे समीचीनभोगयुक्तौ कुर्वन्ति । अथो अपि च प्रजापतिमुखजत्वसाम्येन रथंतरस्य ब्राह्मणरूपत्वात्तदीयबाहुजत्वसाम्येन बृहतः क्षत्रियरूपत्वाच्च बृहद्रथंतराभिधानयोस्तृचयोरनुष्ठानेन ब्रह्मक्षत्रयोः परस्परा(रां) प्रतिष्ठा भवति । अथो अपि च तृचद्वयानुष्ठानं निष्केवल्यशस्त्रस्य तृचद्वयाश्रितसाम्नश्च सयोनित्वाय समानस्थानत्वाय संपद्यते ।

धाय्यां दर्शयति—

यद्वावानेति धाय्या तस्या उक्तं ब्राह्मणम्, इति ।

तस्या धाय्यायाः प्रशंसारूपं ब्राह्मणं ते देवा अब्रुवन्सर्वं वा अवोचथ इत्यादिना पूर्वमेवोक्तम् ।

सामाधारभूतं प्रगाथं दर्शयति—

उभयं शृणवच्चन इति सामप्रगाथ उभयसाम्नो रूपमुभे हि सामनी क्रियेते ॥ २ ॥ इति ।

उभयमित्यादिप्रगाथो बृहद्रथंतरसामद्वयस्य स्वरूपम् । यस्मादेते उभयसामनी अस्मिन्प्रगाथे सामगैर्गीयेते तस्मात्तद्रूपत्वं युक्तम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षट्त्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ [१५९] ।

---

निष्केवल्यशस्त्रे निविद्धानीयं सूक्तं दर्शयति—

तमु ष्टुहि यो अभिभूत्योजा इति सूक्तमभिवदभिभूत्यै रूपम्, इति ।

अभिवदभिशब्दोपेतं सूक्तं तस्मादभिभूत्यै शत्रूणामभिभवस्य स्वरूपम् ।

---

यद्वावान पुरुतमं०—१०—७४—६ । उभयं शृणवच्च०—८—६१—१ । तमु ष्टुहि यो०—६—१८—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तस्या ऋचस्तृतीयपादमनूद्य प्रशंसति—

अषाह्ळमुग्रं सहमानमाभिरित्युग्रवत्सहमानवत्तत्क्ष-
त्रस्य रूपम्, इति ।

उग्रशब्दसहमानशब्दयुक्तमिदं सूक्तम् । तच्च शब्दद्वयवाच्यं क्षत्रियजातेः स्वरूपम् । क्षत्रियो ह्युग्रो भूत्वा शत्रूनभिभवति ।

तत्सूक्तगतामृक्संख्यां प्रशंसति—

तत्पञ्चदशर्चं भवत्योजो वा इन्द्रियं वीर्यं पञ्चदश
ओजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण
वीर्येण समर्धयति, इति ।

पूर्वोक्तत्रिष्टुप्प्रशंसावाक्यवदिदं पञ्चदशस्तोमप्रशंसावाक्यं व्याख्येयम् ।

ऋषिद्वारा सूक्तं प्रशंसति—

तद्भारद्वाजं भवति भारद्वाजं वै बृहदार्षेयेण सलोमा, इति ।

भरद्वाजेन दृष्टत्वादिदं सूक्तं भारद्वाजम् । बृहत्सामापि तथा भारद्वाजम् । तादृशबृहद्योगादयं क्रतुरार्षेयेण सलोमा । आर्षेयो भरद्वाजमुनिसंबन्धो लोमशब्देन केशयुक्तो मूर्धोपलक्ष्यते । सलोमा सशिरस्कः संपूर्ण इत्यर्थः । भरद्वाजमुनिदृष्टस्य बृहतः संपूर्णत्वाद्बृहद्द्वारा भरद्वाजमुनिसंबन्धे सति क्रतोरपि संपूर्णत्वं द्रष्टव्यम् ।

इदानीं बृहद्रथंतरसामोपेतप्रकृतक्रतुसंबन्धमुपजीव्यैकसामकेऽपि क्षत्रिययज्ञे पृष्ठस्तोत्रस्य बृहत्सामसाध्यत्वं विधत्ते—

एष ह वाव क्षत्रिययज्ञः समृद्धो यो बृहत्पृ-
ष्ठस्तस्माद्यत्र क्व च क्षत्रियो यजेत बृह-
देव तत्र पृष्ठं स्यात्तत्समृद्धम् ॥ ३ ॥ इति ।

यः क्रतुर्द्विसामको बृहत्पृष्ठोपेत एष एव क्षत्रिययज्ञः समृद्धः संपूर्णः । यस्मादेवं तस्माद्यत्र क्व चैकसामकेनापि क्रतुना क्षत्रियो यजेत तत्र पृष्ठस्तोत्रं बृहत्सामयुक्तमेव कुर्यात् । तदेतदनुष्ठानं समृद्धं संपूर्णं भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये षट्त्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ [ १६० ] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


माध्यंदिने सवने होतुः शस्त्रविशेषमभिधाय होत्रकाणां विशेषाभावं दर्शयति—

ऐकाहिका होत्रा एता वै शान्ताः क्लृप्ताः प्रतिष्ठिता होत्रा यदैकाहिकाः शान्त्यै क्लृप्त्यै प्रतिष्ठित्या अप्रच्युत्यै ताः सर्वरूपा भवन्ति सर्वसमृद्धाः सर्वरूपतायै सर्वसमृद्ध्यै सर्वरूपाभिर्होत्राभिः सर्वसमृद्धाभिः सर्वान्कामानवाप्नवामेति तस्माद्यत्र क्व चैकाहा असर्वस्तोमा असर्वपृष्ठा ऐकाहिका एव तत्र होत्राः स्युस्तत्समृद्धम्, इति ।

मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां याः क्रियास्ता होत्राः । ताश्चैकाहिका एकाहे प्रकृतिरूपे विहिता एवात्र विकृतिरूपेण क्षत्रिययज्ञे कर्तव्याः । एताश्च होत्राः शान्तत्वादिगुण(णि)काः शान्तादिशब्दार्थाः पूर्ववद्व्याख्येयाः । एताश्चैकाहिका होत्राः सर्वरूपाः सर्वसमृद्धाश्च भवन्ति । तत्तद्विकृतिषु होत्रकाणां ये विशेषा उक्तास्तद्रूपत्वं सर्वरूपत्वं तत्फलसमृद्धिः सर्वसमृद्धिः । एतल्लोकद्वयमिन्द्राभिष्टवनेन क्षत्रियप्रतिपादनसामर्थ्यात्संपद्यते । अतः सर्वरूपतायै सर्वलोकप्राप्त्यर्थं तत्र च सर्वभोगसमृद्ध्यर्थमुक्ता होत्रकाः संपद्यन्ते । ततः क्षत्रियाः पुरुषाः सर्वरूपाभिः सर्वसमृद्धाभिरैकाहिकाभिर्होत्राभिः सर्वान्कामानवाप्नवामेत्यभिप्रायेणैकाहिकहोत्रानुष्ठानं कुर्युः । एकाहाश्च द्विविधाः । सर्वस्तोमसर्वपृष्ठास्तद्विपरीताश्च पृष्ठ्ये षडहे प्रतिपादिताः । त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशरूपाः षट्संख्याकाः सर्वे स्तोमाः । तस्मिन्नेव पृष्ठ्यषडहे रथंतरबृहद्वैरूपवैराजशाक्वररैवतानि षट्संख्याकानि सर्वपृष्ठानि । तैः सर्वैः स्तोमैः पृष्ठैश्च युक्तेभ्य एकाहेभ्यो व्यतिरिक्ताः कतिपयस्तोमपृष्ठयुक्ता एकाहा असर्वस्तोमा असर्वपृष्ठाश्च । यस्मादैकाहिका होत्राः पूर्वोक्तरीत्या प्रशस्तास्तस्माद्यत्र क्व वाऽसर्वस्तोमा असर्वपृष्ठाश्चैकाहा अनुष्ठीयन्ते तत्र सर्वत्रैकाहिका एव होत्राः स्युः । न तु नूतनो विशेषः कश्चिदस्ति । तथा दर्शं कर्म संपृक्तं फलेन संपूर्णम् ।

अथ क्षत्रिययज्ञस्य संस्थाविशेषो निर्णेतव्यः । तदर्थमादौ केषांचित्पक्षमुपन्यस्यति—

उक्थ्य एवायं पञ्चदशः स्यादित्याहुरोजो वा

१ ब. 'स्तोमास' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

इन्द्रियं वीर्यं पञ्चदश ओजः क्षत्रं वीर्यं राजन्यस्तदेनमोजसा क्षत्रेण वीर्येण समर्धयति, इति।

अयं क्षत्रिययज्ञ उक्थ्यसंस्थ एव सर्वेष्वपि स्तोत्रेषु पञ्चदशस्तोम एव स्यादित्येवमेके ब्रह्मवादिन आहुः। ओजो वा इत्यादिकं पूर्ववद्व्याख्येयम्।

उक्थ्ये स्तोत्रशस्त्रसंख्यां प्रशंसति—

तस्य त्रिंशत्स्तुतशस्त्राणि भवन्ति त्रिंशदक्षरा वै विराड्विराळन्नाद्यं विराज्येवैनं तदन्नाद्ये प्रतिष्ठापयति तस्मात्तदुक्थ्यः पञ्चदशः स्यादित्याहुः, इति।

तस्योक्थ्यस्य पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणीत्येवं त्रिंशत्संख्या। तथा सत्यक्षरद्वारा विराड्रूपत्वाद्विराजश्चान्नसाधनत्वादेनं यजमानं विराट्साम्येनान्नाद्ये प्रतिष्ठापयति। तस्मादेवं पञ्चदशस्तोत्रशस्त्रत्वात्तदुक्थ्यः स क्षत्रिययज्ञ उक्थ्यसंस्थः पञ्चदशस्तोमयुक्तः स्यादित्येवं केचिदाहुः।

अथ स्वपक्षमाह—

ज्योतिष्टोम एवाग्निष्टोमः स्यात्, इति।

योऽयं क्षत्रियाणां ज्योतिष्टोमः सोऽग्निष्टोमसंस्थ एव स्यात्।

तस्मिन्नग्निष्टोमे ये त्रिवृदादयश्चत्वारः स्तोमास्तान्ब्राह्मणादिवर्णचतुष्टयरूपेण तेजआदिगुणचतुष्टयरूपेण च प्रशंसति—

ब्रह्म वै स्तोमानां त्रिवृत्क्षत्रं पञ्चदशो ब्रह्म खलु वै क्षत्रात्पूर्वं ब्रह्म पुरस्तान्म उग्रं राष्ट्रमव्यथ्यमसदिति विशः सप्तदशः शौद्रो वर्ण एकविंशो विशं चैवास्मै तच्छौद्रं च वर्णमनुवर्त्मानौ कुर्वन्त्यथो तेजो वै स्तोमानां त्रिवृद्वीर्यं पञ्चदशः प्रजातिः सप्तदशः प्रतिष्ठैकविंशस्तदेनं तेजसा वीर्येण प्रजात्या प्रतिष्ठयाऽन्ततः समर्धयति तस्माज्ज्योतिष्टोमः स्यात्, इति।

---

१ क. ख. 'स्तोत्र ए'।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रजापतेर्मुखबाहुमध्यदेहपादेभ्य उत्पत्तिसाम्यात्त्रिवृदादिस्तोमानां ब्राह्मणादिवर्णचतुष्टयरूपत्वम् । तत्र ब्राह्मणपूर्वकं राष्ट्रं मदीयमुग्रमव्यथनीयं वाऽस्त्वित्यभिप्रायेण क्षत्रियस्य त्रिवृत्पञ्चदशौ क्रमेणानुष्ठेयौ सप्तदशैकविंशयोरनुष्ठानं वैश्यशूद्रौ वर्णौ क्षत्रियस्यानुगामिनौ कुर्वन्ति । त्रिवृदादिस्तोमानां तेजोवीर्यप्रजननप्रतिष्ठासाधनत्वात्तत्तद्रूपत्वम् । तेषामनुष्ठानेनैनं क्षत्रियमन्ततो यज्ञस्यान्ते तेजआदिभिः समृद्धं करोति । तस्मात्क्षत्रियस्य त्रिवृदादिस्तोमचतुष्टयविशिष्टो ज्योतिष्टोमः स्यात् ।

अग्निष्टोमसंस्थे तस्मिन्स्तोत्रशस्त्रसंख्यां प्रशंसति—

तस्य चतुर्विंशतिः स्तुतशस्त्राणि भवन्ति चतुर्विंशत्यर्धमासो वै संवत्सरः संवत्सरे कृत्स्नमन्नाद्यं कृत्स्न एवैनं तदन्नाद्ये प्रतिष्ठापयति तस्माज्ज्योतिष्टोम एवाग्निष्टोमः स्यादग्निष्टोमः स्यात् ॥ ४ ॥ इति ।

तस्याग्निष्टोमसंस्थस्य ज्योतिष्टोमस्य द्वादश स्तोत्राणि द्वादश शस्त्राण्येवं चतुर्विंशतिसंख्या । ततोऽर्धमासद्वारा संवत्सरत्वम् । संवत्सरे च व्रीह्यादिसंस्थानां [illegible]नत्वादन्नाद्यं कृत्स्नं संपूर्णं भवति । तेनैनं यजमानं संपूर्ण एवान्नाद्ये प्रतिष्ठापयति । तस्मात्क्षत्रियस्य ज्योतिष्टोमोऽग्निष्टोमसंस्थ एव स्यात् । न तूक्थ्यसंस्थ इति । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये षट्त्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ [ १६१ ] ।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये षट्त्रिंशोऽध्यायः ॥ ३६ ॥

---

## अथ सप्तत्रिंशोऽध्यायः ।

---

स्तुतशस्त्रविशेषोऽस्य क्षत्रियस्योपवर्णितः ।
क्रतौ समाप्तेऽथ पुनरभिषेकोऽत्र वर्ण्यते ॥

तमेतमभिषेकं प्रतिजानीते—

अथातः पुनरभिषेकस्यैव, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ क्रतुसमाप्त्यनन्तरं यतः क्षत्रियोऽभिषेकमर्हत्यतः कारणात्पुनरभिषेकस्यैव विधिरुच्यत इति शेषः । राज्ञः पूर्वमभिषिक्तत्वादयं पुनरभिषेको भवति । इतरस्यापि क्षत्रियस्य माहेन्द्रग्रहाय प्रस्तुते साम्न्यभिषेकस्याऽऽध्वर्यवस्य विद्यमानत्वादयं पुनरभिषेको भवति ।

तं विधत्ते—

सूयते ह वा अस्य क्षत्रं यो दीक्षते क्षत्रियः सन्स यदाऽवभृथादुदेत्यानूबन्ध्ययेष्ट्वोदवस्यत्यथैनमुदवसानीयायां संस्थितायां पुनरभिषिञ्चन्ति, इति ।

यः पुमान्क्षत्रियः सन्दीक्षते दीक्षां प्राप्नोत्यस्य क्षत्रस्य पुरुषस्य क्षत्रं सर्वेषां प्राणिनां क्षतात्त्राणनं सूयते प्रवर्ततेऽस्मात्स क्षत्रियो यदाऽवभृथादुदेत्यावभृथाख्यं कर्म समाप्तं कृत्वा ततोऽनूबन्ध्याख्यया कयाचित्पशुस्थानीयेष्ट्या यागं कृत्वा पश्चादुदवस्यत्युदवसानीयाख्ययेष्ट्या कर्मावसानं करोत्यथ तदानीमेनं क्षत्रियमुदवसानीयेष्टौ समाप्तायां पुनरपि कर्माङ्गत्वेनर्त्विजोऽभिषिञ्चेयुः ।

तस्याभिषेकसाधनानि विधत्ते—

तस्यैते पुरस्तादेव संभारा उपक्लृप्ता भवन्त्यौदुम्बर्यासन्दी तस्यै प्रादेशमात्राः पादाः स्युररत्निमात्राणि शीर्षण्यानूच्यानि मौञ्जं विवयनं व्याघ्रचर्माऽऽस्तरणमौदुम्बरश्चमस उदुम्बरशाखा तस्मिन्नेतस्मिंश्चमसेऽष्टातयानि निषुतानि भवन्ति दधि मधु सर्पिरातपवर्ष्या आपः शष्पाणि च तोक्मानि च सुरा दूर्वा, इति ।

तस्य पुनरभिषेकस्यैते वक्ष्यमाणाः संभाराः संपादनीया द्रव्यविशेषाः पुरस्तादेवोपक्लृप्ता अभिषेककालात्प्रागेव संपादिता भवेयुः । के वस्तुविशेषाः संपादनीयास्तेऽभिधीयन्ते । उदुम्बरकाष्ठैर्निर्मिता काचिदासन्दी । तस्यै तस्या आसन्द्याश्चत्वारः पादाः प्रादेशपरिमिताः । तेषां पादानां शिरस्सुपरिभागेऽवस्थितानि शीर्षण्यान्यन्वक्तिर्यगवस्थितानि काष्ठान्यनूच्यानि तानि शीर्षण्यानूच्यान्यरत्निपरिमितानि । प्रादेशद्वयमरत्निः । विविधं वयनं रज्जुनाऽऽतमोतरूपेण संयोजनम् । तच्च मौञ्जं मुञ्जतृणेन निर्मितम् । ईदृश्या आसन्द्या उप-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



र्यास्तरणं व्याघ्रचर्म । दध्यादिप्रक्षेपार्थः मौढ उदुम्बरकाष्ठनिर्मितश्चमसः । तथा काचित्सूक्ष्मोदुम्बरशाखा । तस्मिन्नेतस्मिन्नौदुम्बरे मौढे चमसे वक्ष्यमाण-दध्यादिद्रव्याण्यष्टातयानि । अत्र द्वितयत्रितयादिवत्संख्याया अवयवे तय-विति सूत्रेण तयप्प्रत्ययः । अष्टसंख्याका अवयवा येषां दध्यादीनां तान्यष्टा-तयानि । दीर्घश्छान्दसः । तानि च निपुतानि नितरां सुतानि प्रक्षिप्तानि भवन्ति । चमसे प्रक्षेप्याण्यष्ट द्रव्याणि कानीति तान्युच्यन्ते । दधि मधु सर्पि-रित्येतानि त्रीणि प्रसिद्धानि । आतपयुक्तवर्षभवा आतपवर्ष्यास्तादृश्य आप-श्चतुर्थं द्रष्टव्यम् । शष्पाणि श्यामतृणानि पञ्चमं द्रव्यम् । तोक्मान्यङ्कुराणि षष्ठं द्रव्यम् । सुरा दूर्वेति द्रव्यद्वयं प्रसिद्धम् ।

संपादितायाः आसन्द्याः प्रतिष्ठापनं विधत्ते—

तद्यैषा दक्षिणा स्फ्यवर्तनिर्वेदेर्भवति तत्रैतां प्राची-मासन्दीं प्रतिष्ठापयति तस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वावियं वै श्रीस्तस्या एतत्परिमितं रूपं यदन्तर्वेद्यथैष भूमाऽपरिमितो यो बहिर्वेदि तद्यदस्या अन्तर्वेदि द्वौ पादौ भवतो बहिर्वेदि द्वा उभयोः कामयोरुपाप्त्यै यश्चान्तर्वेदि यश्च बहिर्वेदि ॥ ५ ॥ इति ।

पुरा वेदिपरिग्रहार्थं स्फ्येन रेखात्रयं कृतं दक्षिणा प्रतीच्युदीची च । तत्र देवयजनदेशे यैषा वेदेः संबन्धिनी दक्षिणा स्फ्यवर्तनिः स्फ्यस्य रेखा भवति तत्र तस्यां रेखायामेतामासन्दीं प्राचीं प्रागग्रामवस्थापयेत् । तस्याश्चाऽऽसन्द्या उत्तरदिग्गतौ द्वौ पादावन्तर्वेदि तिष्ठतः । दक्षिणदिग्गतौ द्वौ पादौ बहिर्वेदि स्थापनीयौ । इयं भूमिः श्रीर्वै संपद्रूपैव । तस्या भूमेरन्तर्वेदि यद्रूपमस्त्येत-त्परिमितमल्पम् । अथ बहिर्वेदि यः प्रदेशोऽस्त्येष भूमा बहुलः । अत एवा-परिमित इयानिति परिच्छेदरहितः । एवं सति वेदेर्मध्ये बहिश्चाऽऽसन्द्या द्वौ द्वौ पादाविति यदस्ति तदुभयोः कामयोः प्राप्त्यै भवति । यश्च कामो वेदिमध्ये लभ्यते । यश्चान्यः कामो वेदेर्बहिर्लभ्यते तदुभयसिद्ध्यर्थमेवं स्थापनम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये सप्तत्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ (५) [ १६२ ] ।

---

१ ( पा० सू० ५ । २ । ४२ )

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


प्रतिष्ठापिताया आसन्द्या उपरि चर्मास्तरणं विधत्ते—

व्याघ्रचर्मणाऽऽस्तृणात्युत्तरलोम्ना प्राचीनग्रीवेण क्षत्रं वा एतदारण्यानां पशूनां यद्व्याघ्रः क्षत्रं राजन्यः क्षत्रेणैव तत्क्षत्रं समर्धयति, इति ।

उत्तराण्यूर्ध्वभागे लोमानि यस्य चर्मणस्तदुत्तरलोम । प्राच्यां दिशि ग्रीवा यस्य चर्मणस्तत्प्राचीनग्रीवम् । तादृशेन व्याघ्रचर्मणा तामासन्दीमास्तृणीयात् । अरण्य एवावस्थिता आरण्याः पशवो हरिणादयः । यो व्याघ्रोऽस्त्येतदारण्यानां पशूनां मध्ये क्षत्रं क्षत्रियवच्छूरः । योऽयं राजन्यो यजमानः सोऽपि क्षत्रं क्षत्रियजातित्वाच्छूरः । अतश्चर्मास्तरणाद्व्याघ्रचर्मरूपेण क्षत्रेणैव यजमानरूपं क्षत्रं समृद्धं करोति ।

आसन्द्या अभिमन्त्रणं विधत्ते—

तां पश्चात्प्राङुपविश्याऽऽच्य जानु दक्षिणमभिमन्त्रयत उभाभ्यां पाणिभ्यामालभ्य, इति ।

प्रतिष्ठापिताया आसन्द्याः पश्चाद्भागे यजमानः प्राङ्मुख उपविश्य दक्षिणं यज्जान्वस्ति तदाच्य तद्भूमिस्पृष्टं यथा भवति तथा न्यग्भूतं कृत्वा सव्यजानूर्ध्वमुखमेवावस्थाप्योभाभ्यां पाणिभ्यामासन्दीमालभ्य स्पृष्ट्वा वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ।

तं मन्त्रं दर्शयति—

अग्निष्ट्वा गायत्र्या सयुक्छन्दसाऽऽरोहतु सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या तानहमनु राज्याय साम्राज्याय भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहामि, इति ।

हे आसन्दि त्वा त्वां गायत्र्या छन्दसा सयुक्सहितोऽग्निरारोहतु । उष्णिहा छन्दसा सहितः सविताऽऽरोहतु । एवं सोमबृहस्पतिमित्रावरुणेन्द्रविश्वे(श्व) देवा अनुष्टुबादिच्छन्दोभिः सहितास्त्वामारोहन्तु । तानग्न्यादीन्देवानतु पश्चा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


दहमारोहामि । किमर्थं राज्यादिसिद्ध्यर्थम् । राज्यं देशाधिपत्यम् । साम्राज्यं धर्मेण पालनम् । भौज्यं भोगसमृद्धिः । स्वाराज्यमपराधीनत्वम् । वैराज्यमितरेभ्यो भूपतिभ्यो वैशिष्ट्यम् । एतदुक्तमैहिकम् । अथाऽऽमुष्मिकमुच्यते । पारमेष्ठ्यं प्रजापतिलोकप्राप्तिः । तत्र राज्यमैश्वर्यम् । माहाराज्यं तत्रत्येभ्य इतरेभ्य आधिक्यम् । आधिपत्यं तानितरान्प्रति स्वामित्वम् । स्वावश्यमपारतन्त्र्यम् । आतिष्ठत्वं चिरकालवासित्वम् ।

अनेन मन्त्रेणाभिमन्त्रणादूर्ध्वमारोहणं विधत्ते—

इत्येतामासन्दीमारोहेद्दक्षिणेनाग्रे जानुनाऽथ सव्येन, इति ।

इतिशब्दः पूर्वोक्तमभिमन्त्रणमन्त्रं परामृशति । तेनैव मन्त्रेण तामासन्दीमारोहेत् । तत्रायं प्रकारः । दक्षिणेन जानुना प्रथमं समारोहेत् । ततः सव्येनाऽऽरोहेत् ।

आरोहणं प्रशंसति—

तत्तदितीँ३, इति ।

तदारोहणमित्येवं सर्वे जनाः पूजयन्ति । पूजार्थेयं प्लुतिः ।

मन्त्रतात्पर्यं दर्शयति –

चतुरुत्तरैर्वै देवाश्छन्दोभिः सयुग्भूत्वैतां श्रियमारोहन्यस्यामेत एतर्हि प्रतिष्ठिता अग्निर्गायत्र्या सवितोष्णिहा सोमोऽनुष्टुभा बृहस्पतिर्बृहत्या मित्रावरुणौ पङ्क्त्येन्द्रस्त्रिष्टुभा विश्वे देवा जगत्या, इति ।

चत्वार्यक्षराण्येकैकस्माच्छन्दस उत्तराण्यधिकानि येषु गायत्र्यादिषु जगत्यन्तेषु च्छन्दःसु तानि चतुरुत्तराणि । तादृशैश्छन्दोभिः सयुग्भूत्वा साहित्यं प्राप्य देवा अग्न्यादय एतामासन्दीं श्रियमैश्वर्यरूपामारोहन् । यस्यामासन्द्यामेतेऽग्न्यादय इदानीमपि प्रतिष्ठिता वर्तन्ते । देवाश्छन्दोभिः सयुग्भूत्वेत्ययमर्थोऽग्निर्गायत्र्येत्यादिना स्पष्टीकृतः ।

उक्तमर्थं मन्त्रसंवादेन द्रढयति—

ते एते अभ्यनूच्येते अग्नेर्गायत्र्यभवत्सयुग्वेति, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

ते एते देवच्छन्दसी परस्परसहिते कयाचिदृचाऽभ्यनूच्येते । सेयमृगग्नेरित्यादिका । येयं गायत्री सेयमग्नेः सयुग्वा सहत्रासिन्यभवदिति तस्या ऋचोऽर्थः ।

क्षत्रियस्याऽऽरोहणं प्रशंसति—

कल्पते ह वा अस्मै योगक्षेम उत्तरोत्तरिणीं ह श्रियमश्नुतेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेता अनु देवता एतामासन्दीमारोहति क्षत्रियः सन्, इति ।

यः पुमान्स्वयं क्षत्रियः सन्नारोहत्येता देवता अनु स्वयमप्युक्तेन प्रकारेणैतामासन्दीमारोहति । अस्मै क्षत्रियाय योगक्षेमः कल्पते सिध्यति । अप्राप्तस्य लाभस्य प्राप्तिर्योगः । प्राप्तस्य वस्तुनो रक्षणं क्षेमः । योगसहितः क्षेमो योगक्षेमः । किंचायं क्षत्रिय उत्तरोत्तरिणीं दिने दिने वर्धमानां श्रियं प्राप्नोति । तथा सर्वासां प्रजानामैश्वर्यं नियामकत्वमाधिपत्यमधिकत्वेन पालनं च प्राप्नोति ।

अभिषेककर्तुः शान्तिमन्त्रवाचनं विधत्ते—

अथैनमभिषेक्ष्यन्नपां शान्तिं वाचयति, इति ।

अथाऽऽसन्द्यारोहणानन्तरमेनमारूढं क्षत्रियं योऽन्योऽभिषेक्ष्यति स पुमानपां शान्तिं जलदेवतानां शान्तिकरं मन्त्रं वाचयेत् । क्षत्रियस्याग्रे स्वयं सकृदुक्त्वा तं क्षत्रियं पाठयेत् ।

एतं शान्तिमन्त्रं दर्शयति—

शिवेन मा चक्षुषा पश्यताऽऽपः शिवया तन्वोपस्पृशत त्वचं मे । सर्वाँ अग्नीँरप्सुषदो हुवे वो मयि-वर्चो बलमोजो निधत्तेति, इति ।

हे आपो देवताः शिवेन शान्तेनानुग्रहयुक्तेन चक्षुषा मामवलोकयत । तथा शिवया शान्तया तन्वा मदीयां त्वचमुपस्पृशत । अप्सु जलेषु सीदन्तीत्यप्सुषद और्वादयोऽग्नयस्तानग्नीन्सर्वान्वो युष्मदर्थं हुवे आह्वयामि । यूयमपि वर्चः कान्तिं बलं शरीरबलं तत्कारणमोजश्च मयि निधत्त संपादयत ।

तदेतच्छान्तिमन्त्रवाचनं प्रशंसति—

नैतस्याभिषिषिचानस्याशान्ता आपो वीर्यं निर्हणन्निति ॥ ६ ॥ इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अशान्ता उग्रा आपः । तथा चान्यत्र श्रूयते—'दिव्या आपोऽशान्ताः' इति । ताश्चाऽऽपः शान्तिवाचनाभावेऽभिषिषिचानस्याभिषेकं प्राप्तस्यैतस्य क्षत्रियस्य वीर्यं निर्हरेयुर्विनाशयेयुः । सति तु शान्तिपाठे न निर्हणन्त्यैव विनाशयन्तीत्यनेनाभिप्रायेण शान्तिं वाचयेत् ।

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तत्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ (६) [ १६३ ] ।

---

अभिषेकप्रकारं विधत्ते—

अथैनमुदुम्बरशाखामन्तर्धायाभिषिञ्चति, इति ।

अथ शान्तिवाचनानन्तरमेनं क्षत्रियमुदुम्बरशाखामन्तर्धाय शिरस्युदुम्बरशाखया व्यवधानं कृत्वा चमसस्थैर्दध्यादिभिरभिषिञ्चेत् । तिस्र ऋच एकं यजुर्व्याहृतयश्चेत्येतेऽभिषेकमन्त्राः ।

तत्र प्रथमामृचमाह—

इमा आपः शिवतमा इमाः सर्वस्य भेषजीः । इमा राष्ट्रस्य वर्धनीरिमा राष्ट्रभृतोऽमृताः, इति ।

आप इत्यनेन दध्यादिसर्वद्रव्याण्युपलक्ष्यन्ते । इमा दध्यादिसहिता आपः शिवतमा अतिशयेन शान्ताः । तथेमा आपः सर्वस्य दारिद्र्यादिरोगस्य भेषजीरौषधरूपाः । तथेमा आपो राष्ट्रस्य वर्धनीरभिवृद्धिहेतवोऽस्त एवेमा आपो राष्ट्रभृतो राष्ट्रधारिण्यः स्वयं चामृता विनाशरहिताः ।

द्वितीयामृचमाह—

याभिरिन्द्रमभ्यषिञ्चत्प्रजापतिः सोमं राजानं वरुणं यमं मनुम् । ताभिरद्भिरभिषिञ्चामि त्वामहं राज्ञां त्वमधिराजो भवेह, इति ।

हे क्षत्रिय पुरा प्रजापतिर्याभिर्दध्यादिसहिताभिरद्भिरिन्द्रादीनभ्यषिञ्चत्ताभिरद्भिस्त्वामहमभिषिञ्चामि । त्वं चेह लोके राज्ञां सर्वेषामधिको राजा भव ।

तृतीयामृचमाह—

महान्तं त्वा महीनां सम्राजं चर्षणीनाम् । देवी जनित्र्यजीजनद्भद्रा जनित्र्यजीजनत्, इति ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

जनित्री तवोत्पादिका मातृरूपा देवी त्वां महीनां महान्तं महतामपि पुरुषाणां मध्येऽतिशयेन महान्तं चर्षणीनां मनुष्याणां च सर्वेषां सम्राजं सम्यग्धर्मेण पालयितारं कृत्वाऽजीजनदुत्पादितवती । अतो भवदीया जनित्री माता स्वयं तदा पुण्यात्मा भूत्वोत्पादितवती ।

तिस्र ऋचोऽभिधाय यजुर्दर्शयति—

देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय, इति ।

हे क्षत्रिय सवितुः प्रेरकस्य देवस्य परमेश्वरस्य प्रसवेऽनुज्ञायां सत्यां त्वामभिषिञ्चामि । केन साधनेन । अश्विनोर्देवयोः संबन्धिभ्यां बाहुभ्यां न तु मदीयाभ्याम् । तथा पूष्णो देवस्य हस्ताभ्याम् । मणिबन्धपर्यन्तौ दण्डाकारौ बाहू । अङ्गुलिसहितावग्रभागौ हस्तौ । तथाऽग्निसंबन्धिना तेजसा शरीरकान्त्या । सूर्यस्य संबन्धिना वर्चसा बाह्यप्रकाशेन । इन्द्रसंबन्धिनेन्द्रियेण चक्षुरादिपाटवेन । कस्मै प्रयोजनायायमभिषेकः । तव शारीरबलाय, श्रियै हस्त्यश्वादिसंपदे, यशसे कीर्त्यै, अन्नाद्यायान्नसमृद्धये ।

अथ कामनाभेदेन व्याहृतीर्दर्शयति—

भूरिति य इच्छेदिममेव प्रत्यन्नमद्यादित्यथ य इच्छेद्द्विपुरुषं भूर्भुव इत्यथ य इच्छेत्त्रिपुरुषं वाऽप्रतिमं वा भूर्भुवः स्वरिति, इति ।

योऽभिषेक्ता इममेवाभिषिच्यमानं क्षत्रियं प्रत्यसावन्नमद्यान्नीरोगो भवेदितीच्छेत्कामयेत तं भूरिति व्याहृत्याऽभिषिञ्चेत् । अथ योऽभिषेक्ता पुत्रपौत्राभ्यां पुरुषाभ्यां सहितमिमं क्षत्रियं प्रत्यन्नमद्यादिति कामयेत । तदानीं भूर्भुव इति व्याहृतिद्वयेनाभिषिञ्चेत् । अथ योऽभिषेक्ता पुत्रपौत्रप्रपौत्रैस्त्रिभिः पुरुषैर्युक्तमिमं क्षत्रियमिच्छेत्पुरुषत्रयपर्यन्तं जीवित्वा सुखेनान्नमद्यादिति कामयेत, अथवा तमेतमप्रतिमं स्वतुल्यक्षत्रियान्तररहितं कुर्यामिति कामयेत तदानीं भूर्भुवः स्वरिति व्याहृतित्रयेणाभिषिञ्चेत् ।

अथ कंचित्पूर्वपक्षमुत्थापयति—

तद्धैक आहुः सर्वाप्तिर्वा एषा यदेता व्याहृतयोऽतिसर्वेण हास्य परस्मै कृतं भवतीति तमेतेनाभिषि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ॐदेवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्यायेति, इति।

तद्ध तस्मिन्नेवाभिषेके ब्रह्मवादिनः केचिदेवमाहुः। या एता व्याहृतयः सन्त्येषा व्याहृतिरूपा सर्वाप्तिर्वै सर्वफलप्राप्तिसाधनम्। अतो व्याहृतिभिरभिषेके सत्यस्याभिषिच्यमानस्य परस्मै परस्य स्वस्मादन्यस्य क्षत्रियस्यातिसर्वेण तदपेक्षामात्रमभिक्रम्य कृत्स्नेनापि मन्त्रजातेनाभिषेचनं कृतं भवति। तदेतदधिकाभिषेचनमयुक्तमित्यभिप्रेत्य तं क्षत्रियमेतेन देवस्य त्वेत्यादिना यजुषाऽभिषिञ्चेन्न तु व्याहृतिभिरिति तेषां पक्षः।

तं पक्षं दूषयति—

तदु पुनः परिचक्षते यदसर्वेण वाचोऽभिषिक्तो भवतीश्वरो ह तु पुराऽऽयुषः प्रैतोरिति ह स्माऽऽह सत्यकामो जाबालोऽयमेताभिर्व्याहृतिभिर्नाभिषिञ्चन्तीति, इति।

तदु तदपि पूर्वोक्तं मतं पुनरन्येऽभिज्ञाः परिचक्षते निराकुर्वन्ति। यं क्षत्रियमेताभिर्व्याहृतिभिर्नाभिषिञ्चन्त्येष क्षत्रियो यद्यस्मात्कारणादसर्वेण संपूर्तिरहितेन वाचो वाक्येन मन्त्रेणाभिषिक्तो भवति। तस्मादयं स्वोचितादायुषः पुरा प्रैतोः प्रैतुं मर्तुमीश्वरः समर्थो भवति। तस्मादायुःक्षयहेतुत्वादयं पक्षो न युक्त इति जाबालायाः पुत्रः सत्यकामो महर्षिराह।

पूर्वपक्षं दूषयित्वा सिद्धान्तमाह—

ईश्वरो ह सर्वमायुरैतोः सर्वमाप्नोद्विजयेनेत्यु ह स्माऽऽहोद्दालक आरुणिर्यमेताभिर्व्याहृतिभिरभिषिञ्चन्तीति तमेतेनैवाभिषिञ्चेद्देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नेस्तेजसा सूर्यस्य वर्चसेन्द्रस्येन्द्रियेणाभिषिञ्चामि बलाय श्रियै यशसेऽन्नाद्याय भूर्भुवः स्वरिति, इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यं क्षत्रियमेताभिर्व्याहृतिभिरभिषिञ्चन्ति स क्षत्रियः सर्वमायुरेतोः सर्वमायुः प्राप्तुमीश्वरः समर्थो भवति। ततो विजयेन शत्रूनभिभूय सर्वं भोगमाप्नोत्याप्नोतीत्येवमरुणपुत्र उद्दालक आह स्म। तस्मात्तं क्षत्रियमेतेन व्याहृत्यन्तेनैव यजुषाऽभिषिञ्चेन्न केवलेन। सोऽयं व्याहृत्यन्तो मन्त्रो नित्यप्रयोगे द्रष्टव्यः। काम्यप्रयोगे तु व्याहृतिविकल्पः पूर्वमुक्तः।

अभिषेकाङ्गं होमं विधत्ते—

अथैतानि ह वै क्षत्रियादीजानाद्व्युत्क्रान्तानि भवन्ति ब्रह्मक्षत्रे ऊर्गन्नाद्यमपामोषधीनां रसो ब्रह्मवर्चसमिरापुष्टिः प्रजातिः क्षत्ररूपं तदथो अन्नस्य रस ओषधीनां क्षत्रं प्रतिष्ठा तद्यदेवामू पुरस्तादाहुती जुहोति तदस्मिन्ब्रह्मक्षत्रे दधाति ॥ ७ ॥ इति।

अथाभिषेकानन्तरं होम उच्यत इति शेषः। ईजानाद्यागं कृतवतः क्षत्रियादेतानि वक्ष्यमाणानि व्युत्क्रान्तान्यपगतानि भवन्ति। तानि निर्दिश्यन्ते। ब्रह्मक्षत्रे एतस्य समीपे वर्तमानं जातिद्वयम्। ऊर्क्क्षीरादिरसः। अन्नाद्यमोदनादिकम्। तदेतदुभयमपामोषधीनां रसः सारः। अपां रसः क्षीरादिः। ओषधीनां रसोऽन्नाद्यम्। ब्रह्मवर्चसं श्रुताध्ययनसंपत्तिः। इरापुष्टिरन्नसमृद्धिः। प्रजातिः पुत्रोत्पादनम्। तच्च सर्वं क्षत्रस्य स्वरूपमत्यन्तमपेक्षितत्वात्। एतेषां व्युत्क्रान्तौ क्षत्रियस्य स्वरूपहानिरेव भवति। अथो अपि चान्नस्यौदनस्य रसो रसस्य क्षीरादेरोषधीनामन्नकारणानां व्रीहियवादीनां क्षत्रं प्रतिष्ठा क्षत्रिय आश्रयः। तस्मादुक्तो व्यतिक्रमः क्षत्रियस्य न युक्तः। तत्तथा सति यद्यमू बुद्धिस्थे आहुती अभिषिक्तस्य क्षत्रियस्य पुरस्ताज्जुहुयात्। तच्चदानीमस्मिन्नभिषिक्ते ब्राह्मणजातिं क्षत्रियजातिं तदुपलक्षितमन्नादिकं च सर्वमत्रस्थापयति। ब्रह्म प्रपद्ये स्वाहा क्षत्रं प्रपद्ये स्वाहेत्याहुतिद्वयं जुहुयादिति तात्पर्यार्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तत्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (७) [ १६४ ]।

---

अभिषेकसाधनानि क्रमेण प्रशंसितुमादावासन्द्यादित्रयं प्रशंसति—

अथ यदौदुम्बर्यासन्दी भवत्यौदुम्बरश्चमस उदुम्ब-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



रशाखोर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेवास्मिंस्तदन्नाद्यं दधाति, इति ।

आसन्दीचमसशाखानां कारणभूतो य उदुम्बरः सोऽयं रसस्यान्नस्य स्वरूपभूतः । तेनास्मिन्यजमाने रसमन्नं च संपादयति ।

दध्यादित्रयं प्रशंसति—

अथ यद्दधि मधु घृतं भवत्यपां स ओषधीनां रसोऽपामेवास्मिंस्तदोषधीनां रसं दधाति, इति ।

दधिघृतयोः पशुभक्षिततृणोदकजन्यत्वादोषधिरसत्वम् । मधुनो मधुकरानीतपुष्परसजन्यत्वादोषधिसारत्वम् ।

आतपसहिता वृष्टिजन्या अपः प्रशंसति—

अथ यदातपवर्ष्या आपो भवन्ति तेजश्च ह वै ब्रह्मवर्चसं चाऽऽतपवर्ष्या अपस्तेज एवास्मिंस्तद्ब्रह्मवर्चसं च दधाति, इति ।

आतपसंबन्धात्तेजस्त्वमाहुतिफलरूपवृष्टिसंबन्धाद्ब्रह्मवर्चसत्वम् ।

श्यामतृणान्यङ्कुराणि च प्रशंसति—

अथ यच्छष्पाणि च तोक्मानि च भवन्तीरायै तत्पुष्ट्यै रूपमथो प्रजात्या इरामेवास्मिंस्तत्पुष्टिं दधात्यथो प्रजातिम्, इति ।

तृणानामङ्कुराणां च पश्वन्नत्वात्तद्भक्षणेन पशुषु पुष्टिप्रजोत्पादनयोर्दृष्टत्वादिरापुष्टिप्रजादिरूपत्वम् ।

सुरां प्रशंसति—

अथ यत्सुरा भवति क्षत्ररूपं तदथो अन्नस्य रसः क्षत्ररूपमेवास्मिंस्तद्दधात्यथो अन्नस्य रसम्, इति ।

सुरया क्षत्रियस्यैव मदयोगात्क्षत्ररूपत्वं व्रीह्याद्यङ्कुरजन्यत्वादन्नरसत्वम्[1] ।

दूर्वां प्रशंसति—

अथ यद्दूर्वा भवति क्षत्रं वा एतदोषधीनां

---

१ ख. °द्यन्नरसज° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



यद्दूर्वा क्षत्रं राजन्यो नितत इव हीह क्षत्रियो राष्ट्रे वसन्भवति प्रतिष्ठित इव नितनेव दूर्वाऽवरोधैर्भूम्यां प्रतिष्ठितेव तद्यद्दूर्वा भवत्योषधीनामेवास्मिंस्तत्क्षत्रं दधात्यथो प्रतिष्ठाम्, इति ।

ओषधिजातौ दूर्वायाः क्षत्रियजातित्वं राजसंबन्धिक्षत्रियजातिसाम्यादवगन्तव्यम् । तदेव साम्यं नितत इत्यादिना प्रपञ्च्यते । इह राष्ट्रे क्षत्रियो वसंस्तेषु ग्रामेषु संचरन्स्वपुरुषस्थापनाच्च स्वयं नितरां ततो विस्तृत एव राज्यैश्वर्येण प्रतिष्ठित एव भवति । दूर्वा चावरोधैरधोमुखैः स्वकीयमूलैर्नितरां ततेव व्याप्ता स्थैर्यादेकत्र प्रतिष्ठिता भवति । तत्तथा सति यत्रत्र दूर्वा भवति तदानीमोषधिसंबन्धिक्षत्रियजातिमस्मिन्यजमाने संपादयति । अपि च प्रतिष्ठां स्थैर्यमपि च संपादयति ।

प्रत्येकं प्रशस्य समुदायरूपेण प्रशंसति—

एतानि ह वै यान्यस्मादीजानाद्व्युत्क्रान्तानि भवन्ति तान्येवास्मिंस्तद्दधाति तैरेवैनं तत्समर्धयति, इति ।

ईजानाद्यागं कृतवतोऽस्मात्क्षत्रियाद्यान्येवैतानि दध्युदुम्बरादीनि व्युत्क्रान्तानि भवन्ति तान्येवास्मिन्क्षत्रिये संपाद्य तैरेवैनं समृद्धं करोति ।

अभिषिक्तस्य क्षत्रियस्य पानपात्रं विधत्ते—

अथास्मै सुराकंसं हस्त आदधाति, इति ।

अथाभिषेकानन्तरमस्मा अस्य क्षत्रियस्य हस्ते सुरायुक्तकांस्यपात्रमादध्यात् ।

तत्र मन्त्रमाह—

स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुतः, इति ।

हे सोम तत्समानसुराद्रव्य, स्वादिष्ठयाऽतिशयेन स्वादुभूतया मदिष्ठयाऽतिशयेन मदहेतुभूतया त्वदीयया धारया पवस्व यजमानं शोधय । हे द्रव्यविशेषेन्द्राय पातव इन्द्रस्य पानार्थं सुतोऽभिषुतः संपादितोऽसि ।

---

स्वादिष्ठया मदिष्ठया०— ९—१—१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



मन्त्रान्तरेण शान्तिवाचनं विधत्ते—

इत्याधाय शान्तिं वाचयति, इति।

इत्यनेन पूर्वोक्तमन्त्रेण हस्ते सुरायुक्तं कांस्यपात्रमाधाय वक्ष्यमाणमन्त्रेण शान्तिं वाचयेत्।

तं मन्त्रं दर्शयति—

नाना हि वां देवहितं सदस्कृतं मा संसृक्षाथां परमे व्योमनि। सुरा त्वमसि शुष्मिणी सोम एष राजा मैनं हिंसिष्टं स्वां योनिमाविशन्ताविति, इति।

हे सुरासोमौ, वां युवयोर्देवहितं देवैः संपादितं सदः स्थानं नाना कृतं पृथगेव निष्पादितम्। अतः परमे व्योमनि उत्कृष्ट उदराकाशे मा संसृक्षाथां संसर्गं मा कुरुतम्। संसर्गे हि सोमस्य बाधा स्यात्। हे मद्य, त्वं शुष्मिणी बलवती सुराऽसि। एष तु सोमो राजा। तौ बलवन्तौ युवामुभौ स्वां योनिमाविशन्तावुदरमध्ये विभागेन स्वं स्वं स्थानं प्रविशन्तावेनं पातारं मा हिंसिष्टं हिंसितमुपद्रुतं मा कुरुतम्। इत्येतं मन्त्रं क्षत्रियस्याग्रे कथयित्वा तं वाचयेत्।

तस्य मन्त्रस्य तात्पर्यार्थं दर्शयति—

सोमपीथस्य चैषा सुरापीथस्य च व्यावृत्तिः, इति।

एषा मन्त्रप्रतिपाद्या सोमपानसुरापानयोः परस्परव्यावृत्तिः। मा संसृक्षाथामिति संसर्गस्य निषिद्धत्वात्।

पीतशेषस्य दानं विधत्ते—

पीत्वा यं रातिं मन्येत तस्मा एनां प्रयच्छेत्तद्धि मित्रस्य रूपं मित्र एवैनां तदन्ततः प्रतिष्ठापयति तथा हि मित्रे प्रतितिष्ठति, इति।

कांस्यपात्रगतां सुरां क्षत्रियः स्वयं पीत्वा यं पुरुषं रातिं स्वस्य धनदातारं मित्रं मन्येत तस्मै पुरुषायैनामवशिष्टां सुरां प्रयच्छेत्। तदेकपात्रगतद्रव्यपानं मित्रस्य रूपम्। परस्परं मित्रयोः सहभोजनदर्शनात्। तत्तेन दानेनान्ततः पानान्ते मित्र एवैनां सुरां प्रतिष्ठापयति। तथा हि तथैव कुर्वन्स्वयमपि मित्रे प्रतिष्ठितो भवति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वेदनं प्रशंसति—

प्रतितिष्ठति य एवं वेद ॥ ८ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तत्रिंशाध्याये चतुर्थः खण्डः ॥ ४ ॥ (८) [ १६५ ] ।

---

आसन्द्या अवरोहं विधत्ते—

अथोदुम्बरशाखामभि प्रत्यवरोहत्यूर्ग्वा अन्नाद्यमुदुम्बर ऊर्जमेव तदन्नाद्यमभि प्रत्यवरोहति, इति ।

अथाभिषेकपानानन्तरं भूमावुदुम्बरशाखामवस्थाप्य तामभिलक्ष्य प्रत्यवरोहेत् । योऽयमुदुम्बरः स ऊर्ग्वै रसरूप एव तत्फले माधुर्यसद्भावात् । तथाऽन्नाद्यस्वरूपश्च तद्भक्षणेनोदरपूरणात् । तस्मादुदुम्बरशाखायां प्रत्यवरोहेनो(णो)-र्जमन्नाद्यं चाभिलक्ष्यावरोहति ।

तत्र प्रकारं विधत्ते—

उपर्येवाऽऽसीनो भूमौ पादौ प्रतिष्ठाप्य प्रत्यवरोहमाह, इति ।

आसन्द्या उपर्येव स्वयमुपविष्टः प्रथमतः पादौ भूमाववस्थाप्य प्रत्यवरोहसाधनभूतं मन्त्रं पठेत् ।

तं मन्त्रं दर्शयति—

प्रतितिष्ठामि द्यावापृथिव्योः प्रतितिष्ठामि प्राणापानयोः प्रतितिष्ठाम्यहोरात्रयोः प्रतितिष्ठाम्यन्नपानयोः प्रति ब्रह्मन्प्रति क्षत्रे प्रत्येषु त्रिषु लोकेषु तिष्ठामि, इति ।

भूमौ यदवरोहणं तद्द्यावापृथिव्यादिषु सर्वेष्ववस्थानमिति मन्त्रार्थः ।

अनेन मन्त्रेण क्रियमाणं प्रत्यवरोहं प्रशंसति—

अन्ततः सर्वेणाऽऽत्मना प्रतितिष्ठति सर्वस्मिन्ह वा एतस्मिन्प्रतितिष्ठत्युत्तरोत्तरिणीं ह श्रियमश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेतेन पुनरभिषेके-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



णाभिषिक्तः क्षत्त्रियः प्रत्यवरोहति, इति ।

यः क्षत्रिय उक्ताभिषेकादूर्ध्वमनेन मन्त्रेण प्रत्यवरोहति स पुरुषोऽन्ततोऽभिषेकस्यान्ते धनिकत्वादिना सर्वेण रूपेण प्रतिष्ठितो भवति । एतस्मिन्सर्वस्मिन्द्यावापृथिव्यादिके प्रतिष्ठितो भवति । उत्तरेत्यादि पूर्ववद्योजनीयम् ।

प्रत्यवरोहादूर्ध्वं कर्तव्यं विधत्ते—

एतेन प्रत्यवरोहेण प्रत्यवरूह्योपस्थं कृत्वा प्राङासीनो नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्कृत्य वरं ददामि जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजते, इति ।

प्रत्यवरूह्येति दीर्घश्छान्दसः । पूर्वोक्तेन प्रत्यवरोहमन्त्रेण प्रत्यवरूह्य भूमावुपस्थमासनविशेषं कृत्वा प्राङ्मुख आसीनो नमस्कारमन्त्रं त्रिः पठित्वा वरमित्यादिमन्त्रेण वाचं विसृजेत् । वाग्विसर्गो लौकिकव्यवहारः । जितिर्जयमात्रम् । अभितः सर्वेषु देवेषु जितिरभिजितिः । प्रबलदुर्बलशत्रूणां तारतम्येन विविधो जयो विजितिः । पुनःशत्रुत्वराहित्याय सम्यग्जयः संजितिः । एतत्सिद्ध्यर्थं ब्राह्मणाय वरं गां ददामि ।

नमस्कारमन्त्रं प्रशंसति—

स यन्नमो ब्रह्मणे नमो ब्रह्मणे नमो ब्रह्मण इति त्रिष्कृत्वो ब्रह्मणे नमस्करोति ब्रह्मण एव तत्क्षत्त्रं वशमेति तद्यत्र वै ब्रह्मणः क्षत्त्रं वशमेति तद्राष्ट्रं समृद्धं तद्वीरवदाहास्मिन्वीरो जायते, इति ।

स क्षत्रियो मन्त्रेण नमस्करोतीति यदस्ति तेन ब्रह्मणो ब्राह्मणस्यैव क्षत्रियजातिर्वशमेति । तेन ब्राह्मणाधीनत्वेन तद्राष्ट्रं सर्ववस्तुसमृद्धं वीरपुरुषोपेतं च भवति । अस्मिन्क्षत्रिये वीरः पुरुष आजायते ।

वरदानमन्त्रं प्रशंसति—

अथ यद्वरं ददामि जित्या अभिजित्यै विजित्यै संजित्या इति वाचं विसृजत एतद्वै वाचो

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


जितं यद्ददामीत्याह यदेव वाचो जिता३म्,
तन्म इदमनु कर्म संतिष्ठाता इति, इति ।

वरमित्यादिमन्त्रेण वाचं विसृजत इति यदस्ति तस्मिन्मन्त्रस्वरूपे ददामीति यदाह । एतदेव वाक्संबन्धि जितं जयः । यदेव वाचो जितमास्ति । पूजार्थो जिताभिति * दीर्घः । तद्वाग्जयरूपं मे मदीयमिदं कर्मानुसृत्य संतिष्ठातै समाप्तं भवति सम्यगवतिष्ठतामिति तस्य मन्त्रस्याभिप्रायः ।

समिदाधानं विधत्ते—

विसृज्य वाचमुपोत्थायाऽऽहवनीये समिधमभ्याद-
धाति, इति ।

उक्तेन प्रकारेण वाङ्नियमं परित्यज्य तस्मादासनादुत्थितो वक्ष्यमाणमन्त्रे-णाऽऽहवनीये समिधं प्रक्षिपेत् ।

तं मन्त्रं दर्शयति—

समिदसि सङ्वेङ्क्ष्वेन्द्रियेण वीर्येण स्वाहेति, इति ।

हे काष्ठ, त्वं समिदसि समिन्धनसाधनमसि । इङ्कतिधातोर्लोण्मध्यमपुरुषैक-वचनमेङ्क्ष्वेति । स च गत्यर्थः। उशब्दोऽनर्थकः । इन्द्रियपाटवेन शरीरसाम-र्थ्येन च सम्वेङ्क्ष्व संयोजय त्वदर्थं स्वाहुतमिदमस्तु ।

मन्त्रस्य तात्पर्यार्थं दर्शयति—

इन्द्रियेणैव तद्वीर्येणाऽऽत्मानमन्ततः समर्धयति, इति ।

तत्तेन समिदाधानमन्त्रेणाऽऽत्मानमभिषेककर्मान्ते वीर्येन्द्रियाभ्यां समृद्धं करोति ।

समिदाधानादूर्ध्वं कर्तव्यं विधत्ते—

आधाय समिधं त्रीणि पदानि प्राङुदङ्ङभ्युत्का-
मति, इति ।

समिधं प्रक्षिप्य प्राङ्मुख उदङ्मुखो वा पदत्रयमभित उत्क्रामेत् । यद्वा प्राङुदङित्यन्तरालवर्तिनीमैशानीं दिशमभिलक्ष्योत्क्रामेत् ।

---

* प्लुत इत्यपेक्षितम् ।

---

१ ख. वा पदं ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र मन्त्रं दर्शयति—

क्लृप्तिरसि दिशां मयि देवेभ्यः कल्पतं । कल्पतां मे योगक्षेमोऽभयं मेऽस्तु, इति ।

दिग्विशेषमभिलक्ष्य क्रियमाण हे पदोत्क्रमण त्वं दिशां क्लृप्तिः कल्पनं स्वाधीनत्वसंपादकमसि । अतो मयि सेवार्थं कल्पत कल्पनं सामर्थ्यं कुरु । बहुवचनं छान्दसम् । मे मम योगसहितः क्षेमः कल्पतां संपद्यताम् । तथैव मे ममाभयं भयराहित्यमस्तु ।

दिगुपस्थानं विधत्ते—

इत्यपराजितां दिशमुपतिष्ठते जितस्यैवापुनःपराजयाय तत्तदितीँ३ ॥ ९ ॥ इति ।

इत्यनेन पूर्वोक्तेन क्लृप्तिरसीत्यादिमन्त्रेण पराजयरहितां प्राचीमुदीचीं वा दिशमुपतिष्ठते । अथवा दिशमैशानीमपराजितामुपतिष्ठते । पूर्वं जितस्यैव दिग्विशेषस्य पुनःपराजयराहित्यार्थमुपस्थानम् । लोकाश्च तदुपस्थानमिति सर्वे पूजयन्ति । पूजार्थेयं सानुनासिकप्लुतिः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये सप्तत्रिंशाध्याये पञ्चमः खण्डः ॥ ५ ॥ (९) [ १६६ ] ।

---

अपराजितां दिशमुपतिष्ठत इति यदुक्तं तत्रैशान्या दिशो मुख्यापराजितत्वं दर्शयति—

देवासुरा वा एषु लोकेषु संयेतिरे त एतस्यां प्राच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्ते दक्षिणस्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्ते प्रतीच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्त उदीच्यां दिशि येतिरे तांस्ततोऽसुरा अजयंस्त एतस्मिन्नवान्तरदेशे येतिरे य एष प्राङुदङूते ह ततो जिग्युः, इति ।

---

१ झ. 'दनं तथा संपादक' । २ झ. 'स्थानं तदुपस्थान' ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



पुरा कदाचिद्देवाश्चासुराश्चैषु भूरादिषु लोकेषु निमित्तेषु संयेतिरे युद्धं कृतवन्तः । तत्र प्राच्यादिषु चतसृषु दिक्षु यत्र यत्र युद्धं कृतं तत्र तत्रासुराणामेव विजयोऽभूत् । य एष प्राङुदङ्दिग्द्वयस्पर्शी कश्चिदवान्तरदेश ऐशानात्मक एतस्मिन्देशे यदा युद्धं कृतं तदा ते देवास्ततो देशान्निमित्तभूताज्जिग्युर्जयं प्राप्तास्तस्मादियमैशानी दिगपराजिता पूर्वोक्तमन्त्रेणोपस्थेया ।

तमेतमभिषिक्तक्षत्रियवृत्तान्तं तावदवस्थाप्य तत्प्रसङ्गागतं पुरुषान्तरवृत्तान्तं दर्शयति—

**तं यदि क्षत्रिय उपधावेत्सेनयोः समायत्योस्तथा मे कुरु यथाऽहमिमां सेनां जयानीति स यदि तथेति ब्रूयाद्वनस्पते वीड्वङ्गो हि भूया इत्यस्य रथोपस्थमभिमृश्याथैनं ब्रूयात्, इति ।**

कस्मिंश्चिद्देशे युद्धार्थमुभे सेने परस्परं समागच्छतः । तयोः समागच्छन्त्योः सेनयोर्मध्ये यः कोऽपि क्षत्रियो विजयार्थी संस्तमभिषिक्तमैशानीदिगुपस्थानयुक्तं राजानं यद्युपधावेत्, शरणं गच्छेत् । केनाभिप्रायेणेति सोऽभिधीयते । हेऽभिषिक्त यथाऽहमिमां शत्रुसेनां जयानि तथा मेऽनुग्रहं कुर्विति तदभिप्रायः । तदानीं सोऽभिषिक्तः क्षत्रियो यदि तथेत्यङ्गीकारं ब्रूयात्तदानीं वनस्पत इत्यृचा जयार्थिनः पुरुषस्य रथोर्ध्वभागमभिमृश्यानन्तरमेनं जयार्थिनं प्रति वक्ष्यमाणं मन्त्रं ब्रूयात् ।

तं मन्त्रं दर्शयति—

**आतिष्ठस्वैतां ते दिशमभिमुखः संनद्धो रथोऽभिप्रवर्तत्तां स उदङ् स प्रत्यङ् स दक्षिणा स प्राङ् सोऽस्यामित्रमिति, इति।**

हे जयार्थिन्नेतामैशानीं दिशमातिष्ठस्व प्राप्नुहि । ते रथ एतामैशानीं दिशं प्रत्यभिमुखः संनद्धः सर्वायुधादिसंनाहोपेतोऽभितः प्रवर्तताम् । ततः स रथ उदङ्मुखः प्रवर्तताम् । ततः स रथः प्रत्यङ्मुखः प्रवर्तताम् । ततः स रथो दक्षिणामुखः प्रवर्तताम् । ततः स रथः प्राङ्मुखः प्रवर्तताम् । तत ऊर्ध्वमस्यामित्रं त्वदीयं शत्रुं प्रति प्रवर्तताम् ।

---

वनस्पते वीड्वङ्गो हि भूयाः०—६-४७-२६ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



जयार्थिनं प्रत्येतन्मन्त्रकथनादूर्ध्वमाभिषिक्तस्य कर्तव्यं दर्शयति—

अभीवर्तेन हविषेत्येवैनमावर्तयेदथैनमन्वीक्षेताप्रतिरथेन शासेन सौपर्णेनेति, इति।

अभीवर्तेनेत्यादिना सूक्तेनैनं जयार्थिनमुक्तक्रमेण दिक्ष्वावर्तयेत्। अथानन्तरमावर्तमानमेनं सूक्तत्रयेणान्वीक्षेत। आशुः शिशानः [ १०–१०३–१ ] इत्यप्रतिरथं सूक्तम्। शास इत्था [ १०–१५२–१ ] इति शाससूक्तम्। प्रधारयन्तु मधुन इति सौपर्णसूक्तम्।

अभिषिक्तस्य कृत्यमुक्त्वा जयार्थिनः कृत्यं दर्शयति—

जयति ह तां सेनाम्, इति।

सेनाद्वययुद्धे जयार्थं प्रयोगमुक्त्वा पुरुषद्वंद्वयुद्धेऽपि तमाह—

यद्यु वा एनमुपधावेत्संग्रामं संयतिष्यमाणस्तथा मे कुरु यथाऽहमिमं संग्रामं संजयानीत्येतस्यामेवैनं दिशि यातयेज्जयति ह तं संग्रामम्, इति।

यः कोऽपि पुमान्संयतिष्यमाणो युद्धं करिष्यंस्तं संग्रामं जेतुमेनमभिषिक्तं यद्युपधावेत्। तथा मे कुर्विति पूर्ववत्।

राष्ट्राद्भ्रष्टस्य पुनरपि राष्ट्रप्राप्त्यर्थं प्रयोगं दर्शयति—

यद्यु वा एनमुपधावेद्राष्ट्रादपरुध्यमानस्तथा मे कुरु यथाऽहमिदं राष्ट्रं पुनरवगच्छानीत्येतामेवैनं दिशमुपनिष्क्रमयेत्तथा ह राष्ट्रं पुनरवगच्छति, इति।

यथा वै सेनयोर्युद्धे पुरुषयोर्युद्धे चाभिषिक्तेनोदीचीं दिशं प्रति प्रस्थापितस्य जयस्तथैव राष्ट्रभ्रष्टोऽप्यभिषिक्तेनैशानीं दिशं प्रस्थापितो राष्ट्रं पुनः प्राप्नोति।

इत्थं प्रासङ्गिकं प्रयोगत्रयमुक्त्वा प्रकृतमेवाभिषिक्तविषयं प्रयोगमाह—

उपस्थायामित्राणां व्यपलुप्तिं ब्रुवन्गृहान्प्रेत्यप प्राच इन्द्र विश्वाँ अमित्रानिति सर्वतो हास्मा अनमित्रमभयं भवत्युत्तरोत्तरिणीं ह श्रियमश्नु-

अभीवर्तेन हविषा—१०–१७४–१। अप प्राच इन्द्र विश्वाँ अमित्रान्–१०–१३१–१।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तेऽश्नुते ह प्रजानामैश्वर्यमाधिपत्यं य एवमेताम-
मित्राणां व्यपनुत्तिं ब्रुवन्गृहानभ्येति, इति ।

पूर्वत्र क्षत्रस्यासीत्यादिमन्त्रेणाभिषिक्तस्य पदत्रयाभ्युत्क्रमणमैशानीं दिशमुप-स्थानं चाभिहितम् । तां दिशमुपस्थायानन्तरममित्राणां शत्रूणां व्यपनुत्तिं विशेषेणापनोदनहेतुमत एव व्यपनुत्त्यभिधानामप प्राच इत्यादिकामृचं ब्रुव-न्स्वगृहानभिगच्छेत् । तस्यामृचि द्वितीयपादे नुदस्वेति श्रवणादियमृगमित्राणां व्यपनुत्तिः । अस्मा एवं गृहमागच्छतोऽस्य यजमानस्य सर्वतः सर्वासु दिक्षु शत्रुराहित्यलक्षणमभयं भवति । न केवलं भयराहित्यं किंतूत्तरोत्तराभिवृद्धि-संपत्प्राप्त्युपायादिकमपि । यथोक्तमन्त्रोच्चारणेन यो गृहानभ्यागतो भवति ।

गृहप्राप्तेरूर्ध्वं कर्तव्यं विधत्ते—

एत्य गृहान्पश्चाद्गृह्यस्याग्नेरुपविष्टायान्वारब्धाय
ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुती-
रैन्द्रीः प्रपदं जुहोत्यनार्त्या अरिष्ट्या अज्यान्या
अभयाय ॥ १० ॥

गृहान्प्रत्यागत्य योऽयं गृह्यो गृहे वर्तमान औपासनोऽग्निस्तस्य पश्चाद्भाग उपविष्टायाऽऽसीनाय ऋत्विजेऽन्वारब्धायोपस्पृष्टवते क्षत्रियाय तादृशस्य क्षत्रि-यस्यानार्त्यादिसिद्ध्यर्थमृत्विगध्वर्युरन्ततः सर्वप्रयोगान्ते कंसेन कांस्यपात्रेण चतुर्गृहीताश्चतुर्वारं स्वीकृता ऐन्द्रीरिन्द्रदेवताका वक्ष्यमाणैस्त्रिभिर्मन्त्रैस्तिस्र आ-ज्याहुतीः प्रपदं यथा भवति तथा जुहुयात् । प्रपदं प्रकृष्टं पदम् । तथा चाऽऽहुः—

"पादा यस्यास्तु यावन्तो यावदक्षरसंमिताः ।
ऋच्यध्ययनमेतेषां प्रपदं तद्विदुर्बुधाः." इति ॥

अतः प्रपदशब्देनाक्षरपादादिवैकल्यरहितं लाक्षणिकमुच्चारणमभिधीयते । अनार्तिर्व्याधिपीडाराहित्यम् । अरिष्टिः शत्रुभिरहिंसा । अज्यानिर्द्रव्यहानिराहि-त्यम् । अभयं चोरादिभयराहित्यम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मण-भाष्ये सप्तत्रिंशाध्याये षष्ठः खण्डः ॥ ६ ॥ ( १० ) [ १६८ ] ।

---

उक्ताहुत्यर्थं प्रथमं मन्त्रमाह—

पर्यूषु प्रधन्व वाजसातये परि वृत्राणि भूत्वा

पर्यूषु प्रध्व. वाजसातये०—९–११०–१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये ।
सह प्रजया सह पशुभिर्णि सक्षणिर्द्विषस्तरध्या
ऋणया न ईयसे स्वाहा, इति ।

अत्र पर्यूष्वित्यादिकाया ऋचः परि वृत्राणि सक्षणिरिति द्वितीयः पादः। तस्मिन्पादे वृत्राणीति यत्पदं तस्य पदस्य मध्ये भूरित्यादिकं पशुभिरित्यन्तं पदजातं प्रक्षेपणीयम् । वृत्रेत्येतदक्षरद्वयं पुरस्तात्, णीत्येतत्परस्तान्मध्ये प्रक्षेपः। अत एवास्योच्चारणस्य प्रपदमिति नाम संपन्नम् । प्रक्षिप्तं पदजातं यस्मिन्नुच्चारणे तदुच्चारणं प्रपदम् । तत्र तावत्संहितायामाम्नाताया ऋचोऽयमर्थः। हे इन्द्र वाजसातयेऽन्नलाभाय । पर्यूष्विति निपातत्रयसमूहेन परित इत्येतावानेवार्थोऽभिधीयते । परितः सर्वतः । प्रधन्व प्रकर्षेण धारय । धारणार्थो धन्वतिधातुः । अस्मभ्यमन्नं दातुं चित्तं धारयेत्यर्थः । वृत्राणि शत्रून्परि सक्षणिः परितो निराकरिष्णुर्भव । सक्षणिधातुरौचित्यान्निराकरणं ब्रूते । द्विषः शत्रूंस्तरध्यै तरीतुम् । ऋणयाः प्रयत्नं प्राप्तः । नोऽस्मदर्थमीयसे गच्छस इति। अस्यामृचि वृत्राणीति पदस्य मध्ये प्रक्षिप्तस्य भूरित्यादिपशुभिरित्यन्तपदजातस्यायमर्थः । अयं क्षत्रियोऽसौ विष्णुगुप्तादिनामको भूरादीन्प्रपद्यते शरणं गच्छति । भूः पृथिवी । ब्रह्म वेदः । प्राणः प्रसिद्धः । अमृतं मरणराहितम् । देवतारूपं भूरादिकं शरणं प्रपन्नस्य क्षत्रियस्य प्रजया पुत्रादिरूपया सह पशुभिर्गवादि[ भि ]श्च सह :स्वस्तये क्षेमार्थं त्वं शर्म सुखं वर्म कवचमभयं भयरहितं देवतादिरूपं स्थानं च कुर्विति शेषः । एतत्सिद्ध्यर्थं स्वाहा तुभ्यमिदं सुहुतमस्तु।

प्रपदनामकं प्रथमं मन्त्रमुक्त्वा तन्नामकं द्वितीयं मन्त्रमाह—

अनु हि त्वा सुतं सोम मदामसि महे सम भुवो
ब्रह्म प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं
स्वस्तये । सह प्रजया सह पशुभिर्य( भी )
राज्ये वाजाँ अभि पवमान प्रगाहसे स्वाहा, इति ।

अत्राप्यनु हि त्वेत्येतस्यामृचि महे समर्य राज्य इति द्वितीयः पादः । तत्र समर्येति यत्पदं तस्य समेत्यक्षरद्वयमधस्तात्कृत्वा र्येत्येतत्तृतीयमक्षरमुपर्यवस्थाप्य भुव इत्यादिकं पदजातं प्रक्षेपणीयम् । तस्या ऋचोऽयमर्थः । हे सोम सुतमभिषुतं त्वामनुमदामसि वयं हृष्यामः । समरं युद्धं तमर्हति समर्यः शूर-

अनु हि त्वा सुतं सोम मदामसि०—९-११०-२ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



स्तथाविध हे इन्द्र मद्दे महति राज्ये। एनं क्षत्रियं स्थापयेति शेषः। हे पवमान शोधक वाजानन्नानि अभिप्रगाहसे सर्वतः प्रकर्षेण गाहसे विलोडयासि। संपादयसीत्यर्थः। पदमध्ये प्रक्षिप्तस्य पदजातस्याऽऽदौ भुव इत्यन्तरिक्षमुच्यते। ब्रह्मेत्यादिकँ स्वाहाकारश्च पूर्ववत्।

प्रपदनामकं तृतीयं मन्त्रमाह—

अजीजनो हि पवमान सूर्यं विधारे श स्वर्ब्रह्म
प्राणममृतं प्रपद्यतेऽयमसौ शर्म वर्माभयं स्वस्तये।
सह प्रजया सह पशुभिः क्मना पयो गोजीरया
रम्भमाणः पुरं ध्या स्वाहेति, इति।

अजीजन इत्यस्यामृचि विधारे शक्मनेति द्वितीयः पादः। तत्रत्यस्य शक्मनेति पदस्य शेत्येकमक्षरमधस्तादुच्चार्य क्मनेत्यक्षरद्वयमुपरिष्टादवस्थाप्य मध्ये स्वरित्यादिकं पशुभिरित्यन्तं पदजातं प्रक्षेपणीयम्। तस्या ऋचोऽयमर्थः। हे पवमान शोधकेन्द्र त्वं सूर्यमजीजन उत्पादितवानासि। शक्मना स्वशक्त्या पयो जलं विधारे विशेषेण मेघमध्ये धारयसि। गोजीरया गवां जीवनेन निमित्तेन रंहमाणो वृष्टिप्रदानार्थं संचरन्पुरं पूर्णफलं ध्या चिन्तय। गोजीरयेत्युपलक्षणम्। सर्वप्राणिजीवननिमित्तमित्यर्थः। अत्रापि शक्मनेतिपदमध्ये प्रक्षिप्तस्य पदजातस्याऽऽदौ स्वरिति द्युलोकोऽभिधीयते। ब्रह्मेत्यादिकं स्वाहाकारान्तं पूर्ववत्। एतेषां प्रपदनामकानां मन्त्राणां लक्षणं पूर्वमेव पादा यस्यास्त्विति श्लोकेनोदाहृतम्। पर्यूष्वित्यादिका[या] ऋचो मध्ये भूर्ब्रह्म प्राणेत्यादिकाया अस्या ऋचो यावन्तः पादा यावदक्षरसंमितास्तेषां सर्वेषां पतनं प्रपदमिति तस्य लक्षणवाक्यस्यार्थः।

उक्तमन्त्रत्रयसाध्या आहुतीः प्रशंसति—

अनार्तो ह वा अरिष्टोऽजीवः सर्वतो गुप्तस्त्रय्यै विद्यायै रूपेण सर्वा दिशोऽनु संचरत्यैन्द्रे लोके प्रतिष्ठितो यस्मा एता ऋत्विगन्ततः कंसेन चतुर्गृहीतास्तिस्र आज्याहुतीरैन्द्रीः प्रपदं जुहोति, इति।

यस्मै क्षत्रियाय ऋत्विगध्वर्युरन्ततोऽभिषेकप्रयोगान्ते यथोक्तक्रमेण जुहोति।

---

अजीजनो हि पवमान सूर्यं०--९-११०-३।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



असौ क्षत्रियोऽनार्तो रोगरहितोऽरिष्टः शत्रुभिरहिंसितः । अजीतस्तैः शत्रुभि र्युद्धेऽप्यजितः । सर्वतो गुप्त इन्द्रेण रक्षितः । केन साधनेन रक्षित इति तदुच्यते । त्रय्यै विद्यायै रूपेण । वेदत्रयोक्तमन्त्रेणेत्यर्थः । तेन रक्षितः सन्सर्वा दिशः प्राच्याद्या अनुसंचरत्यनुक्रमेण विजयार्थं प्रवर्तते । मरणादूर्ध्वमैन्द्रे लोके प्रतिष्ठितो भवति ।

होमादूर्ध्वमाशीर्मन्त्रपाठं विधत्ते—

अथान्ततः प्रजातिमाशास्ते गवामश्वानां पुरुषाणामिह गावः प्रजायध्वमिहाश्वा इह पूरुषाः । इहो सहस्रदक्षिणो वीरस्त्राता निषीदत्विति, इति ।

अथ होमानन्तरमन्ततः प्रयोगान्त इह गाव इत्यादिमन्त्रेण गवादीनां प्रजातिमुत्पत्तिमाशास्ते प्रार्थयते । मन्त्रस्यायमर्थः । हे गाव इह मद्राष्ट्रे प्रजायध्वं प्रकर्षेणोत्पन्ना भवत । एवमश्वा पुरुषाश्च । इहो, अस्मिन्नेव राष्ट्रे सहस्रदक्षिणो यागेषु सहस्रसंख्यदक्षिणादानशीलो वीरः पुत्रस्त्राता प्रजानां रक्षकः सन्निषीदतु ।

अनेन मन्त्रेण प्रार्थनं प्रशंसति—

बहुर्ह वै प्रजया पशुभिर्भवति य एवमेतामन्ततः प्रजातिमाशास्ते गवामश्वानां पुरुषाणाम्, इति ।

य एवमाशासानः क्षत्रियः स प्रजादिभिर्बहुर्वै [प्र] भूत एव भवति । पुनरभिषेकपर्यन्तेऽस्मिन्क्षत्रिययागे याजयितॄणामृत्विजां वेदनं प्रशंसति—

एष ह वाव क्षत्रियोऽविक्लष्टो यमेवंविदो याजयन्ति, इति ।

एवमुक्ताभिषेकप्रकारं जानन्त ऋत्विजो यं क्षत्रियं याजयन्त्येष एव क्षत्रियः सर्वेष्वविक्लष्टो नापकृष्टः । न ह्यस्य कदाचिदप्यपकर्षो भवति ।

ऋत्विजामभिषेकपरिज्ञानाभावं निन्दति—

अथ ह तं व्येव कर्षन्ते यथा ह वा इदं निषादा वा सेळगा[1] वा पापकृतो वा वित्तवन्तं पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्त्येवमेव त

1 क. ख. ग, घ. ङ. च. छ. ञ. सेल्गा ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवान्त यमनेवंविदो याजयन्ति, इति ।

अनेवंविदोऽभिषेकप्रकारमजानन्त ऋत्विजो यं क्षत्रियं याजयन्ति तं क्षत्रियं विकर्षन्त एव विकृष्टमपकृष्टं कुर्वन्त्येव । तत्रेदं निदर्शनमुच्यते । निषादा नीचजातयो मनुष्याः । [1]सेळगाश्चोराः । [2]इळाऽन्नं तया सह वर्तन्त इति [3]सेळा धनिकास्तान्धनापहारार्थं गच्छन्तीति चौराः [4]सेळगाः । पापकृतो हिंसाकारिणः । त्रिविधा दुष्टाः पुरुषा वित्तवन्तं बहुधनोपेतं पुरुषमरण्यमध्ये गृहीत्वा कर्तमन्वस्य कस्मिंश्चिदन्धकूपादिरूपे गर्ते तं प्रक्षिप्य तदीयं धनम् [illegible] द्रवन्ति पलायन्ते । एवमेवानभिज्ञा ऋत्विजो यजमानं नरकरूपं कर्तमन्वस्य नरकहेतौ दुरनुष्ठानेऽवस्थाप्य दक्षिणारूपेण तदीयं द्रव्यमपहृत्य स्वगृहेषु गच्छन्ति ।

उक्ताभिषेकपर्यन्तं क्षत्रिययागमुदाहरणमुखेन प्रशंसति—

एतद्ध स्म वै तद्विद्वानाह जनमेजयः पारिक्षित एवंविदं हि वै मामेवंविदो याजयन्ति तस्मादहं जयाम्यभीत्वरीं सेनां जयाम्यभीत्वर्या सेनया न मा दिव्या न मानुष्य इषव ऋच्छन्त्येष्यामि सर्वमायुः सर्वभूमिर्भविष्यामीति, इति ।

परिक्षितो राज्ञः पुत्रो जनमेजयस्तदेतत्सर्वं प्रयोगमाहात्म्यं विद्वान्सभामध्य एवमुवाच । अहमप्येवंविदृत्विजोऽप्येवंविदस्तस्मादभिषेकान्तेन यागेन द्वंद्वयुद्धे जयामि । किंच । अभीत्वरीमभितो युद्धार्थमुद्युक्तां परकीयां सेनां तादृश्या सेनया जयामि । तथाविधं मां दिव्या इषवो देवप्रेरिता बाणा न प्राप्नुवन्ति मानुष्यश्चेषवो न प्राप्नुवन्ति । अपमृत्युरहितः सर्वमप्यायुः प्राप्स्यामि । सर्वा चतुःसागरपरिवेष्टिता भूमिर्यस्याधीना सोऽयं सर्वभूमिस्तादृशो भविष्यामीति ।

जनमेजयवाक्योदाहरणे दृढीकृतमर्थं निगमयति—

न ह वा एनं दिव्या न मानुष्य इषव ऋच्छन्त्येति सर्वमायुः सर्वभूमिर्भवति यमेवंविदो याजयन्ति

---

1 क. ख. अ. सेळगा । 2 क. ख. अ. इळाऽन्नं । 3 क. ख. ज. सेळा । 4 क. ख. ग. सेळगाः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



याजयन्ति ॥ ११ ॥ इति ।

स्पष्टोऽर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये सप्तत्रिंशाध्याये सप्तमः खण्डः ॥ ७ ॥ (११) [१६९]।

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्ये सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

अथाष्टात्रिंशोऽध्यायः ।

पुनः कार्योऽभिषेकान्ते कृत्स्नकृत्स्नेन वर्णितः ।
अभिषेकः पुमर्थो यस्तस्योपोद्घात उच्यते ॥

तत्राऽऽदाविन्द्रस्याभिषेकं प्रतिजानीते—

अथात ऐन्द्रो महाभिषेकः, इति ।

अथ मानुषक्षत्रियाभिषेकोक्त्यनन्तरं यतो दैवोऽभिषेको बुभुत्सितोऽतः कारणादिन्द्रसंबन्धी महाभिषेकः कथ्यत इति शेषः । आरोहणमुत्क्रोशनाभिमन्त्रणादिभिर्वक्ष्यमाणैरस्याभिषेकस्य महत्त्वं द्रष्टव्यम् ।

तदभिषेकार्थं देवविवादं दर्शयति—

ते देवा अब्रुवन्सप्रजापतिका अयं वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतम इममेवाभिषिञ्चामहा इति तथेति तद्वै तदिन्द्रमेव, इति ।

प्रजापतिना सह वर्तन्त इति सप्रजापतिकास्तेऽग्न्यादयो देवाः परस्परमिदमब्रुवन्। हस्तेनेन्द्रं प्रदर्श्य कथयन्ति[स्म]। अयमेवेन्द्रो देवानां मध्य ओजिष्ठोऽतिशयेनाष्टमधातुयुक्तः । बलिष्ठोऽतिशयेन शरीरबलयुक्तः । सहिष्ठोऽतिशयेन वैर्यभिभवशीलः । सत्तमोऽतिशयेन स्वभक्तेषु साधुः । पारयिष्णुतमोऽतिशयेन प्रक्रान्तस्य कार्यस्य समाप्तिकर्ता । तस्मादिममेव सर्वे वयमभिषिञ्चामहा इति केश्चिदुक्ते सत्यन्ये सर्वेऽपि तथेत्यङ्गीकृत्य तद्वै तदानीमेव तदिन्द्रमेव तं सर्वे-ऽनुमतमिन्द्रमेवाभ्यषिञ्चन्निति शेषः ।

१ क्ष. °षेकोऽन्ते.। २ क्ष. °विचारं द° ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र प्रकारं दर्शयति—

तस्मा एतामासन्दीं समभरन्नृचं नाम तस्यै बृहच्च रथंतरं च पूर्वौ पादावकुर्वन्वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसं च कालेयं चानूच्ये ऋचः प्राचीनातानान्सामानि तिरश्चीनवायान्यजूंष्यतीकाशान्यश आस्तरणं श्रियमुपबर्हणं तस्यै सविता च बृहस्पतिश्च पूर्वौ पादावधारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये स एतामासन्दीमारोहत्, इति ।

तस्मा इन्द्रार्थमेतां वक्ष्यमाणां वेदमयीमासन्दीं समभरन् । ऋचं नामेत्यासन्द्या विशेषणम् । ऋग्रूपैतन्नामिकेत्यर्थः । तस्यै तस्या ऋग्रूपाया आसन्द्या बृहदादीन्यष्ट सामानि पूर्वपादप्रभृत्यवयवानकुर्वन् । आसन्द्यां शयानस्येन्द्रस्य शिरोदेशस्थं फलकं शीर्षण्यम् । तत्र पाददेशाविष्कृतस्य फलकस्याप्युपलक्षणम् । अत एव शीर्षण्ये इति द्विवचनमुच्यते । अनूच्ये पार्श्वद्वयवर्तिनी फलके । ऋग्रूपा ये मन्त्राः सन्ति तान्प्राचीनातानान्प्राक्प्रत्यगायतत्वेन विस्तारवान्दीर्घतन्तुविशेषानकुर्वन् । गीयमानानि सामानि तिरश्चीनवायांस्तिर्यक्त्वेन वयनहेतून्रज्जुविशेषानकुर्वन् । यजूंष्यतीकाशान्रज्ज्वन्तरालच्छिद्रविशेषानकुर्वन् । यद्यशः कीर्तिर्देवतारूपं तदासन्द्या उपर्यास्तरणम् । या तु श्रीः संपदभिमानिनी देवता तामुपबर्हणं शिरस उपधानमकुर्वन् । तस्यै तस्या आसन्द्याः पादादीनष्टावयवान्सवित्रादयोऽष्टौ देवा अधारयन् । इन्द्र एतां वेदमयीमासन्दीं वक्ष्यमाणैः षण्मन्त्रैरारोहत् ।

तान्मन्त्रान्दर्शयति—

वसवस्त्वा गायत्रेण छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु तानन्वारोहामि साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु तानन्वारोहामि भौज्या-



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



याऽऽदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोहामि स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु तानन्वारोहामि वैराज्याय साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोहामि राज्याय मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु तानन्वारोहामि पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायातिष्ठायाऽऽरोहामीत्येतामासन्दीमारोहत्, इति ।

वस्वादयो देवगणा गायत्र्यादिच्छन्दोभिस्त्रिवृदादिस्तोमै रथंतरादिसामभिश्च सह ह आसन्दि त्वां प्रथमत आरोहन्तु । ताननु पश्चादहमारोहामि । आप्त्या इत्यनेनापि वस्वादिशब्दवत्कश्चिद्देवगणविशेष उच्यते । साम्राज्यादीन्यारोहणप्रयोजनानि । एते च शब्दाः पूर्वाध्याये व्याघ्रचर्मणाऽऽस्तृणातीत्यस्मिन्खण्डे व्याख्याताः । एतैः षड्भिर्मन्त्रैरिन्द्र उक्तामासन्दीमारोहत् ।

इन्द्रारोहणादूर्ध्वं देवानामभ्युत्क्रोशनं दर्शयति—

तमेतस्यामासन्द्यामासीनं विश्वे देवा अब्रुवन्न वा अनभ्युत्क्रुष्ट इन्द्रो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति तथेति तं विश्वे देवा अभ्युदक्रोशन्निमं देवा अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं राजानं राजपितरं परमेष्ठिनं पारमेष्ठ्यं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजनि पुरां भेत्ताऽजन्यसुराणां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


हन्ताऽजनि ब्रह्मणो गोप्ताऽजनि धर्मस्य गोप्ताऽ-
ष्ठाय जनीति , इति ।

एतस्यां वेदमध्यामासन्द्यामासीनं तमिन्द्रं प्रति विश्वे सर्वे देवाः परस्परमिदमब्रुवन् । यथा लोके बन्दिनो गुणकथनेन राज्ञः कीर्तिं कुर्वन्त्येवमत्रापि गुणकीर्तनमभ्युत्क्रोशनम् । तेन रहितोऽनभ्युत्क्रुष्ट इन्द्रो युद्धादौ वीर्यं कर्तुं नैवाऽर्हति । कीर्तिमन्तरेण परेषां भीत्यनुदयात् । तस्मादभित एनमिन्द्रमभ्यु(मु)त्क्रोशामोद्घोषयामेति विचार्य तथैवाङ्गीकृत्य तमिन्द्रं सर्वे देवा अभ्युदक्रोशन् । इममित्यादिरभ्युत्क्रोशनप्रकारः । हे देवा इममिन्द्रमभित उत्क्रोशतोद्घोषयत । कीदृशमिन्द्रं सम्राट्स्वरूपमत एव साम्राज्यं कर्तुमर्हम् । भोजं भोक्तारमत एव भोजपितरं भोजपालकं स्वराड्रूपत्वादेव स्वाराज्यं कर्तुमर्हम् । राजरूपत्वादेव राजपितरं सर्वेषां राज्ञां पालकम् । परमेष्ठिरूपत्वात्पारमेष्ठ्यं पदमनुभवितुं योग्यम् । क्षत्रमजनि । ईदृशी क्षत्रियजातिर्लोके समुत्पन्ना तज्जातिमान्क्षत्रियः पुरुषः समुत्पन्नः । सर्वस्य प्राणिजातस्याधिपतिः समुत्पन्नः । विशां प्रजानामत्ता भोक्ता समुत्पन्नः । पुरां परकीयाणां भेत्ता विदारयिता समुत्पन्नः । असुराणां हन्ता घातकः समुत्पन्नः । ब्रह्मणो वेदस्य गोप्ता रक्षकः समुत्पन्नः । धर्मस्य वेदोक्तस्य गोप्ता रक्षकः समुत्पन्नः । इत्ययमभ्युत्क्रोशमन्त्रः ।

अभ्युत्क्रोशनादूर्ध्वं प्रजापतिकर्तव्यं दर्शयति—

तमभ्युत्क्रुष्टं प्रजापतिरभिषेक्ष्यन्नेतयर्चाऽभ्यमन्त्र-
यत ॥ १२ ॥ इति ।

एतया निषसादेति वक्ष्यमाणया ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टात्रिंशाध्याये प्रथमः खण्डः ॥ १ ॥ ( १२ ) [१७०] ।

---

एतयर्चाऽभ्यमन्त्रयतेत्यत्र योऽयं मन्त्र ऋक्शब्देन विवक्षितस्तं मन्त्रं दर्शयति—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । साम्राज्याय
भौज्याय स्वाराज्याय वैराज्याय पारमेष्ठ्याय रा-
ज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽति-
ष्ठाय सुक्रतुरिति, इति ।

---

१ क ग. ज. भोगपा० ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


धृतव्रतः स्वीकृतनियमो वरुणः सर्वस्यानिष्टस्य निवारयितेन्द्रः पस्त्यासु गृहेष्वागत्य साम्राज्यादिफलसिद्ध्यर्थं सुक्रतुः शोभनसंकल्पो भूत्वा निषसा-दास्यामासन्द्यां निषण्णवान् ।

अनेन मन्त्रेणाभिमन्त्रितस्येन्द्रस्याभिषेकप्रकारं दर्शयति—

तमेतस्यामासन्द्यामासीनं प्रजापतिः पुरस्तात्तिष्ठन्प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभ्यषिञ्चदिमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः ॥ १३ ॥ इति ।

एतस्यां पूर्वोक्तायां वेदमय्यामासन्द्यायासीनं तमिन्द्रं प्रजापतिरभ्यषिञ्चत् । किं कुर्वन् । पुरस्तादास्याः पूर्वस्यां दिशि प्रत्यङ्मुखस्तिष्ठन् । किं कृत्वा । आर्द्रयाऽऽर्द्रपत्रोपेतयोदुम्बरशाखया सुवर्णमयेन च पवित्रेणान्तर्धाय व्यवधानं कृत्वा । केन मन्त्रेण । इमा आपः शिवतमा इत्यादिकेन ऋत्वङ्गाभिषेकात्मकेन त्रिविधेन मन्त्रजातेन ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टात्रिंशाध्याये द्वितीयः खण्डः ॥ २ ॥ ( १३ ) [ १७१ ] ।

---

इन्द्रस्य प्रजापतिकृताभिषेकादूर्ध्वं दिग्भेदेन देवविशेषैरभिषेकः कृतः । तत्र प्राच्यां दिश्यभिषेकं दर्शयति—

अथैनं प्राच्यां दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय , इति ।

अथ प्रजापत्यभिषेकानन्तरमेनमिन्द्रं प्राच्यां दिश्यवस्थिता वसवो देवा एकोनत्रिंशत्संख्यैः पूर्वोक्तैर्मन्त्रैरभ्यषिञ्चन् । तच्च साम्राज्यसिद्ध्यै भवति ।

इदानींतनलौकिकाचारप्रदर्शनेन तस्य प्राच्यां दिशि तदभिषेकं दर्शयति—

तस्मादेतस्यां प्राच्यां दिशि ये के च प्राच्यानां राजानः साम्राज्यायैव तेऽभिषिच्यन्ते सम्राळि-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमनु, इति।

यस्माद्वसुभिः प्राच्यां दिश्यभिषेकः कृतस्तस्मादिदानीमपि प्राच्यानां पूर्वदिग्वर्तिनां मनुष्याणां ये के च राजानः सन्ति ये सर्वेऽपि देवानां च वसूनां च संबन्धिनीमेतामेव विहितिं पूर्वोक्तमेव विधानमनु साम्राज्यसिद्ध्यर्थमभिषिच्यन्ते । अत एवाभिषिक्तानेतान्राज्ञः सम्राळित्यनेन शब्देन व्यवहरन्ति । दिगन्तरेऽपि देवान्तरैरिन्द्राभिषेकं दर्शयति—

अथैनं दक्षिणस्यां दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय तस्मादेतस्यां दक्षिणस्यां दिशि ये के च सत्वतां राजानो भौज्यायैव तेऽभिषिच्यन्ते भोजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनं प्रतीच्यां दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्याय तस्मादेतस्यां प्रतीच्यां दिशि ये के च नीच्यानां राजानो येऽपाच्यानां स्वाराज्यायैव तेऽभिषिच्यन्ते स्वराळित्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमुदीच्यां दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्याय तस्मादेतस्यामुदीच्यां दिशि ये के च परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्रा इति वैराज्यायैव तेऽभिषिच्यन्ते विराळित्येनानभिषिक्तानाचक्षत

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



एतामेव देवानां विहितिमन्वथैनमस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी राज्याय तस्मादस्यां ध्रुवायां मध्यमायां प्रतिष्ठायां दिशि ये के च कुरुपञ्चालानां राजानः सवशोशीनराणां राज्यायैव तेऽभिषिच्यन्ते राजेत्येनानभिषिक्तानाचक्षत एतामेव देवानां विहितिमन्वथैनमूर्ध्वायां दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभ्यषिञ्चन्नेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः पारमेष्ठ्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायेति स परमेष्ठी प्राजापत्योऽभवत्, इति।

प्रथमपर्यायवद्व्याख्येयम्। सत्वतां दक्षिणस्यां दिशि वर्तमानाः प्राणिनः सत्वन्नामकाः। तेषां ये राजानोऽभिषिक्तास्ते भोजेत्यनेन शब्देन व्यवह्रियन्ते। प्रतीच्यां दिशि वर्तमानाः प्राणिनो नीच्या अपाच्याश्च। निकर्षमवन्तीति नीच्याः। अपकर्षमवन्तीत्यपाच्याः। जात्या निकर्षः। व्यवहारेणापकर्षः। उभयविधानां प्राणिनां ये राजानः सन्ति ते स्वराडिति शब्देन व्यवह्रियन्ते। उदीच्यां दिशि हिमवन्तं परेण हिमवत्पर्वतपरभागे जनपदा ग्रामविशेषा उत्तरकुरुनामका उत्तरमद्रनामकाः सन्ति तत्रत्या राजानो विराडिति शब्देन व्यवह्रियन्ते। मध्यमा दिङ्मध्यदेशः। स प्राच्यादिभिः सर्वाभिरपेक्षितत्वेन ध्रुवो भवति। तदपेक्षयैव पूर्वा पश्चिमेत्यादिव्यवहारः। स च देशः सर्वेषां वैदिकानामाश्रयः। तत्र ये वशदेशैरुशीनरदेशैश्च सहिताः कुरुपञ्चालदेशाः सन्ति तेषां देशानां ये राजानस्ते राजेत्यनेन शब्देन व्यवह्रियन्ते। ऊर्ध्वायां दिशि स्वर्गरूपायां मनुष्यस्य संचाराभावात्तत्र राजानो नोदाहृताः। किंत्विन्द्रस्यैवाभिषेक उक्तः। तस्यां दिश्यभिषेकेण स इन्द्रः परमेष्ठी परमपदेऽवस्थितः प्रजापतिसंबन्ध्यभवत्।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


कृत्स्नमिन्द्राभिषेकं निगमयति—

स एतेन महाभिषेकेणाभिषिक्त इन्द्रः सर्वा जितीरजयत्सर्वाँल्लोकानविन्दत्सर्वेषां देवानां श्रैष्ठ्यमतिष्ठां परमतामगच्छत्साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यं जित्वाऽस्मिँल्लोके स्वयंभूः स्वराळमृतोऽमुष्मिन्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः समभवत्समभवत् ॥ १४ ॥ इति।

पूर्वोक्ताभिषेकेणाभिषिक्त इन्द्रो जितीर्जेतव्याः सर्वा युद्धभूमीरजयत्। तेन जयेन सर्वाँल्लोकानविन्ददलभत। देवानां मध्ये श्रैष्ठ्यमतिशयेन प्रशस्तत्वमतिष्ठां सर्वानतिक्रम्यावस्थानं परमतामुत्कृष्टत्वमगच्छत्। जातित उत्तमत्वं श्रैष्ठ्यम्। गुणैरुत्तमत्वं परमत्वम्। साम्राज्यादीनि पदान्यस्मिँल्लोके जित्वा प्राप्य स्वयंभूः प्रजापतिरूपः स्वराट्स्वतन्त्रराजोऽमृत इतरमनुष्यवदल्पकाले मरणरहितः सन्नमुष्मिन्परोक्षे स्वर्गे लोके सर्वान्कामान्भोगान्प्राप्यामृतो मरणरहितो मुक्तः समभवत्। अभ्यासोऽध्यायसमाप्त्यर्थः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्येऽष्टात्रिंशाध्याये तृतीयः खण्डः ॥ ३ ॥ (१४)[१७२]।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्येऽष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

अथैकोनचत्वारिंशोऽध्यायः।

---

पुरुषार्थाभिषेकार्थमादावैन्द्राभिषेचनम्।
उक्तमत्र पुमर्थोऽयमभिषेक उदीर्यते॥

तमभिषेकं विधत्ते—

स य इच्छेदेवंवित्क्षत्रियमयं सर्वा जितीर्जयेतायं सर्वाँल्लोकान्विन्देतायं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



परमतां गच्छेत साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमयं समन्तपर्यायी स्यात्सार्वभौमः सार्वायुष आऽन्तादा परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळिति तमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽभिषिञ्चेत्, इति।

एवंविदिन्द्रसंबन्धिमहाभिषेकविद् आचार्यः क्षत्रियं प्रति सर्वजयादिफलमिच्छेत्स आचार्यः क्षत्रियमेतं शापयित्वा शपथं कारयित्वैतेन पूर्वोक्तेनेन्द्रसंबन्धिना महाभिषेकविधानेन तं क्षत्रियमभिषिञ्चेत्। कीदृशी फलेच्छेति साऽभिधीयते। अयं क्षत्रियो जेतव्याः सर्वा युद्धभूमीर्जयेत्। तथा सर्वांल्लोकान्देशविशेषांल्लँभेत। सर्वेषां राज्ञां मध्ये श्रैष्ठ्याद्याधिपत्यान्तगुणयुक्तो भवेत्। समन्तपर्यायी देशतः कालतः सर्वव्यापी स्यात्। आऽन्तात्समुद्रतीरपर्यन्तं सार्वभौमत्वं देशव्याप्तिः। परार्धात्परार्धशब्दाभिधेयकालसंख्यापर्यन्तं सार्वायुषत्वं कालव्याप्तिः। एवंविधो भूत्वा समुद्रपर्यन्ताया पृथिव्या एक एव राजाऽस्त्वित्यनयेच्छयाऽऽचार्यो महाभिषेकेण तमभिषिञ्चेत्।

शापयित्वेति यदुक्तं तमेव शपथप्रकारं दर्शयति—

यां च रात्रीमजायेथा यां च प्रेतासि तदुभयमन्तरेणेष्टापूर्तं ते लोकं सुकृतमायुः प्रजां वृञ्जीयं यदि मे द्रुह्येरिति, इति।

अभिषिच्यमान हे क्षत्रिय यद्याचार्याय मे द्रुह्येर्द्रोहं कुर्यास्तदानीं त्वं यां रात्रिमजायेथा यस्यां रात्रावुत्पन्नोऽसि यां च रात्रिं प्रेतासि यस्यां रात्रौ मरिष्यसि तदुभयमन्तरेणोत्पत्तिमरणदिनयोर्द्वयोर्मध्ये ते तवेष्टापूर्तं श्रौतस्मार्तकर्मद्वयं तथा पुण्यलोकं तद्धेतुभूतमन्यदपि सुकृतं दीर्घमायुः प्रजां पुत्रादिकां वृञ्जीयं स्वत्तो वर्जयेयमित्येतदाचार्यस्य वाक्यम्। तदेतदङ्गी कारयित्वा पश्चादभिषिञ्चेत्।

आचार्यः क्षत्रियार्थं यादृशीं फलपरम्परां कामयित्वा शपथं कारयति क्षत्रियोऽपि तादृशीं फलपरम्परां कामयमानः शपथं कुर्यात्। तदेतत्क्षत्रियवाक्यं दर्शयति—

स य इच्छेदेवंवित्क्षत्रियोऽहं सर्वा जितीर्जयेय-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यमहं सर्वांल्लोकान्विन्देयमहं सर्वेषां राज्ञां श्रैष्ठ्यमतिष्ठां परमतां गच्छेयं साम्राज्यं भौज्यं स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधिपत्यमहं समन्तपर्यायी स्यां सार्वभौमः सार्वायुष आऽन्तादा परार्धात्पृथिव्यै समुद्रपर्यन्ताया एकराळिति स न विचिकित्सेत्स ब्रूयात्सह श्रद्धया यां च रात्रीमजायेऽहं यां च प्रेताऽस्मि तदुभयमन्तरेणेष्टापूर्तं मे लोकं सुकृतमायुः प्रजां वृञ्जीथा यदि ते द्रुह्येयमिति ॥ १५ ॥ इति ।

यः क्षत्रिय एवंविन्महाभिषेकमाहात्म्याभिज्ञः सर्वजयादिकं समुद्रपर्यन्तं पृथिव्यामेकराजत्वपर्यन्तं फलजातमिच्छेत् । पूर्वत्राऽऽचार्यवाक्यत्वाज्जयेत विन्देतेत्यादिप्रथमपुरुषप्रयोगः । अत्र तु क्षत्रियवाक्यत्वाज्जयेयमित्याद्युत्तमपुरुषप्रयोगः । स क्षत्रियः फलकामी न विचिकित्सेत् । आचार्योक्तेऽर्थे संशयं न कुर्यात् । स क्षत्रिय आचार्यस्याभीष्टं शपथमेवं कुर्यात् । हे आचार्याहं यदि ते द्रुह्येयं तदानीं त्वं मम जन्ममरणमध्यवर्तीष्टापूर्तादिकं सर्वं वृञ्जीथा नाशयेरिति श्रद्धया सहितं शपथं ब्रूयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनचत्वारिंशाध्याये प्रथमः खण्डः ॥१॥(१५) [ १७२ ] ।

---

संभारान्विधत्ते—

अथ ततो ब्रूयाच्चतुष्टयानि वानस्पत्यानि संभरत नैयग्रोधान्यौदुम्बराण्याश्वत्थानि प्लाक्षाणीति, इति ।

अथ क्षत्रियशपथानन्तरं यत आचार्येणाभिषेकः कर्तव्यस्ततः कारणादाचार्यः परिचारकान्ब्रूयात् । वनस्पतिसंबन्धीनि न्यग्रोधादीनि फलानि चतुर्विधानि हे परिचारकाः संपादयतेति ।


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तत्र वृक्षचतुष्टयं क्रमेण प्रशंसति—

क्षत्रं वा एतद्वनस्पतीनां यन्न्यग्रोधो यन्नैयग्रोधानि संभरन्ति क्षत्रमेवास्मिंस्तद्दधाति भौज्यं वा एतद्वनस्पतीनां यदुदुम्बरो यदौदुम्बराणि संभरन्ति भौज्यमेवास्मिंस्तद्दधाति साम्राज्यं वा एतद्वनस्पतीनां यदश्वत्थो यदाश्वत्थानि संभरन्ति साम्राज्यमेवास्मिंस्तद्दधाति स्वाराज्यं च ह वा एतद्वैराज्यं च वनस्पतीनां यत्प्लक्षो यत्प्लाक्षाणि संभरन्ति स्वाराज्यवैराज्ये एवास्मिंस्तद्दधाति, इति ।

न्यग्रोधस्य वनस्पतीनां मध्ये राजवद्व्याप्त्याधिक्यात्क्षत्रत्वम् । उदुम्बरादीनां भौज्यादिसाधनत्वात्तद्रूपत्वम् । अतश्चतुर्विधफलसंपादनेन यजमाने क्षात्रभौज्यादिफलानि संपादयति ।

संभारान्तराणि विधत्ते—

अथ ततो ब्रूयाच्चतुष्टयान्यौषधानि संभरत तोक्मकृतानि व्रीहीणां महाव्रीहीणां प्रियंगूनां यवानामिति, इति ।

अथ नैयग्रोधादिफलसंपादनानन्तरं यतो व्रीह्याद्यङ्कुरसंपादनमपेक्षितं तत आचार्य एवं ब्रूयात् । हे परिचारकास्तोक्मकृतान्यङ्कुरनिमित्तान्योषधिद्रव्याणि चतुर्विधानि संपादयत । सूक्ष्मबीजरूपा व्रीहयः । प्रौढबीजरूपा महाव्रीहयः प्रियंगवो यवाश्च प्रसिद्धाः ।

चतुर्विधमोषधिद्रव्यं प्रशंसति—

क्षत्रं वा एतदोषधीनां यद्व्रीहयो यद्व्रीहीणां तोक्म संभरन्ति क्षत्रमेवास्मिंस्तद्दधाति साम्राज्यं वा एतदोषधीनां यन्महाव्रीहयो यन्महाव्रीहीणां तोक्म संभरन्ति साम्राज्यमेवास्मिंस्तद्दधाति भौज्यं वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


एतदोषधीनां यत्प्रियंगवो यत्प्रियंगूनां तोक्म संभरन्ति भौज्यमेवास्मिंस्तद्दधाति सैनान्यं वा एतदोषधीनां यद्यवा यद्यवानां तोक्म संभरन्ति सैनान्यमेवास्मिंस्तद्दधाति ॥ १६ ॥ इति ।

ओषधीनां मध्ये व्रीहीणां बलहेतुत्वात्क्षत्रत्वम् । महाव्रीह्यादीनामप्यनुष्ठाद्वारा साम्राज्यहेतुत्वात्तद्रूपत्वम् । अतो व्रीह्यादितोक्मनामङ्कुराणां संपादनेन यजमाने क्षत्रसाम्राज्यादिकं सर्वं संपादयति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनचत्वारिंशाध्याये द्वितीयः खण्डः ॥२॥ (१६) [१७४] ।

---

आसन्द्यादिसंभारान्विधत्ते—

अथास्मा औदुम्बरीमासन्दीं संभरन्ति तस्या उक्तं ब्राह्मणमौदुम्बरश्चमसो वा पात्री वोदुम्बरशाखा तानेतान्संभारान्संभृत्यौदुम्बर्यां पात्र्यां वा चमसे वा समावपेयुस्तेषु समोप्तेषु दधि मधु सर्पिरातपवर्ष्या आपोऽभ्यानीय प्रतिष्ठाप्यैतामासन्दीमभिमन्त्रयेत, इति ।

अथ वानस्पत्यौषधिसंभारानन्तरमस्मै क्षत्रियायौदुम्बरीमासन्दीं संपादयेयुः । तस्याश्चाऽऽसन्द्या विधायकं ब्राह्मणं प्रादेशमात्राः पादा इत्यादिना पूर्वमेवोक्तम् । चतुष्कोणो दण्डयुक्तः पात्रविशेषश्चमसः । आकारानियमरहिता पात्री । तयोरन्यतरदौदुम्बरं संपादयेत् । यद्वा । पात्री मृन्मयी शाखा चौदुम्बरी संपादनीया । ततः पात्रीचमसयोरन्यतरस्मिन्वानस्पत्यौषधिसंभारान्समावपेयुः । समोप्तेषु तेषु संभारे[षु] दध्यादीनां सेचनं कृत्वा चमसं भूमौ प्रतिष्ठाप्यैतामासन्दीं वक्ष्यमाणमन्त्रेणाभिमन्त्रयेत् ।

तं मन्त्रं दर्शयति—

बृहच्च ते रथंतरं च पूर्वौ पादौ भवतां वैरूपं च वैराजं चापरौ शाक्वररैवते शीर्षण्ये नौधसं च कालेयं चानूच्ये ऋचः प्राचीनातानाः सामानि

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तिरश्चीनवाया यजूंष्यतीकाशा यश आस्तरणं श्रीरुपबर्हणं सविता च ते बृहस्पतिश्च पूर्वौ पादौ धारयतां वायुश्च पूषा चापरौ मित्रावरुणौ शीर्षण्ये अश्विनावनूच्ये इति, इति।

इन्द्रासन्दीप्रतिपादकवाक्यवदयं मन्त्रो व्याख्येयः।
अभिमन्त्रणादूर्ध्वमाचार्यकर्तव्यं दर्शयति—

अथैनमेतामासन्दीमारोहयेत्, इति।

अथाभिषिक्तमेनं क्षत्रियमेतस्यामासन्द्यामारूढं कुर्यात्।
तत्र मन्त्रं दर्शयति—

वसवस्त्वा गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथंतरेण साम्नाऽऽरोहन्तु तानन्वारोह साम्राज्याय रुद्रास्त्वा त्रैष्टुभेन च्छन्दसा पञ्चदशेन स्तोमेन बृहता साम्नाऽऽरोहन्तु तानन्वारोह भौज्यायाऽऽदित्यास्त्वा जागतेन च्छन्दसा सप्तदशेन स्तोमेन वैरूपेण साम्नाऽऽरोहन्तु तानन्वारोह स्वाराज्याय विश्वे त्वा देवा आनुष्टुभेन च्छन्दसैकविंशेन स्तोमेन वैराजेन साम्नाऽऽरोहन्तु तानन्वारोह वैराज्याय मरुतश्च त्वाऽङ्गिरसश्च देवा अतिच्छन्दसा छन्दसा त्रयस्त्रिंशेन स्तोमेन रैवतेन साम्नाऽऽरोहन्तु तानन्वारोह पारमेष्ठ्याय साध्याश्च त्वाऽऽप्त्याश्च देवाः पाङ्क्तेन च्छन्दसा त्रिणवेन स्तोमेन शाक्वरेण साम्नाऽऽरोहन्तु तानन्वारोह राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठायाऽऽरोहेत्येतामासन्दीमारोहयेत्, इति।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


इन्द्रारोहणमन्त्रवद्व्याख्येयम् । तत्राऽऽरोहणकर्तुः प्रयोज्यत्वादारोहामीत्युत्तमपुरुषः । अत्र त्वाचार्यप्रयोज्यत्वादारोहेति मध्यमपुरुषः । तत्रत्ययोः पञ्चषष्ठमन्त्रयोरत्र क्रमविपर्यासोऽध्ययनसंप्रदायमात्रः । अनेन मन्त्रेणाऽऽचार्यमासन्द्यां क्षत्रियमारोहयेत् ।

आरोहणादूर्ध्वमभ्युत्क्रोशनं विधत्ते—

तमेतस्यामासन्द्यामासीनं राजकर्तारो ब्रूयुर्न वा अनभ्युत्क्रुष्टः क्षत्रियो वीर्यं कर्तुमर्हत्यभ्येनमुत्क्रोशामेति तथेति तं राजकर्तारोऽभ्युत्क्रोशन्तीमं जना अभ्युत्क्रोशत सम्राजं साम्राज्यं भोजं भोजपितरं स्वराजं स्वाराज्यं विराजं वैराज्यं परमेष्ठिनं पारमेष्ठ्यं राजानं राजपितरं क्षत्रमजनि क्षत्रियोऽजनि विश्वस्य भूतस्याधिपतिरजनि विशामत्ताऽजन्यमित्राणां हन्ताऽजनि ब्राह्मणानां गोप्ताऽजनि धर्मस्य गोप्ताऽजनीति, इति ।

राज्ञः कर्तारो राजकर्तारः पितृभ्रात्रादयः । इन्द्रविषयाभ्युत्क्रोशनवाक्यवदिदं वाक्यं व्याख्येयम् ।

आचार्यस्य क्षत्रियाभिमन्त्रणं विधत्ते—

तमभ्युत्क्रुष्टमेवंविदभिषेक्ष्यन्नेतयर्चाऽभिमन्त्रयेत ॥ १७॥ इति ।

पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे ऐतरेयब्राह्मणभाष्ये एकोनचत्वारिंशाध्याये तृतीयः खण्डः ॥३॥ (१७) [१७५] ।

---

एतयर्चेत्युक्तं मन्त्रं दर्शयति—

निषसाद धृतव्रतो वरुणः पस्त्यास्वा । सा[म्राज्याय] भौज्याय स्वाराज्याय वैराज्याय ...

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


ष्ठ्याय राज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽतिष्ठाय सुक्रतुरिति, इति।

पूर्ववद्व्याख्येयम् ।

अभिमन्त्रणादूर्ध्वमभिषेकप्रकारं दर्शयति —

तमेतस्यामासन्द्यामासीनमेवंवित्पुरस्तात्तिष्ठन्प्रत्यङ्मुख औदुम्बर्याऽऽर्द्रया शाखया सपलाशया जातरूपमयेन च पवित्रेणान्तर्धायाभिषिञ्चतीमा आपः शिवतमा इत्येतेन तृचेन देवस्य त्वेति च यजुषा भूर्भुवः स्वरित्येताभिश्च व्याहृतिभिः ॥१८॥ इति।

इन्द्राभिषेकवाक्यवद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण भाष्य एकोनचत्वारिंशाध्याये चतुर्थः खण्डः ॥४॥ (१८)[१७६]।

---

अभिषेकादूर्ध्वमभिमन्त्रणमाह—

प्राच्यां त्वा दिशि वसवो देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः साम्राज्याय दक्षिणस्यां त्वा दिशि रुद्रा देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्भौज्याय प्रतीच्यां त्वा दिश्यादित्या देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिः स्वाराज्यायोदीच्यां त्वा दिशि विश्वे देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभिर्वैराज्यायोर्ध्वायां त्वा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

दिशि मरुतश्चाङ्गिरसश्च देवाः षड्भिश्चैव पञ्चविंशै-
रहोभिरभिषिञ्चन्त्वेतेन च तृचेनैतेन च यजुषैता-
भिश्च व्याहृतिभिः पारमेष्ठ्यायास्यां त्वा ध्रुवायां
मध्यमायां प्रतिष्ठायां दिशि साध्याश्चाऽऽप्त्याश्च
देवाः षड्भिश्चैव पञ्चविंशैरहोभिरभिषिञ्चन्त्वेतेन
च तृचेनैतेन च यजुषैताभिश्च व्याहृतिभी रा-
ज्याय माहाराज्यायाऽऽधिपत्याय स्वावश्यायाऽऽ-
तिष्ठायेति स परमेष्ठी प्राजापत्यो भवति, इति ।

उक्तेन मन्त्रेणाभिमन्त्रितः क्षत्रियः परमेष्ठिपदस्य योग्यो भूत्वा प्रजापतेः संबन्धी [ भवती ]ति ।

महाभिषेकमुपसंहरति—

स एतेनैन्द्रेण महाभिषेकेणाभिषिक्तः क्षत्रियः सर्वा
जितीर्जयति सर्वांल्लोकान्विन्दति सर्वेषां राज्ञां
श्रैष्ठ्यमतिष्ठां परमतां गच्छति साम्राज्यं भौज्यं
स्वाराज्यं वैराज्यं पारमेष्ठ्यं राज्यं माहाराज्यमाधि-
पत्यं जित्वाऽस्मिँल्लोके स्वयंभूः स्वराळमृतोऽमुष्मि-
न्स्वर्गे लोके सर्वान्कामानाप्त्वाऽमृतः संभवति
यमेतेनैन्द्रेण महाभिषेकेण क्षत्रियं शापयित्वाऽ-
भिषिञ्चति ॥ १९ ॥ इति ।

यं क्षत्रियमाचार्यः स्वद्रोहराहित्याय शपथं कारयित्वेन्द्रसंबन्धिना महाभिषेकेणाभिषिञ्चति सोऽभिषिक्तः क्षत्रिय इन्द्रवत्सर्वं जयादिफलं प्राप्नोति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनचत्वारिंशाध्याये पञ्चमः खण्डः ॥५॥ (१९) [१७७] ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


अभिषेकसाधनानि दध्यादिद्रव्याणि प्रशंसति—

इन्द्रियं वा एतदस्मिँल्लोके यद्दधि यद्दध्नाऽभिषिञ्चतीन्द्रियमेवास्मिंस्तद्दधाति रसो वा एष ओषधिवनस्पतिषु यन्मधु यन्मध्वाऽभिषिञ्चति रसमेवास्मिंस्तद्दधाति तेजो वा एतत्पशूनां यद्घृतं यद्घृतेनाभिषिञ्चति तेज एवास्मिंस्तद्दधात्यमृतं वा एतदस्मिँल्लोके यदापो यदद्भिरभिषिञ्चत्यमृतत्वमेवास्मिंस्तद्दधाति, इति।

दध्न इन्द्रियपाटवहेतुत्वादिन्द्रियत्वम् । मधुनः पुष्पजन्यत्वेनौषधिवनस्पतिरसत्वम् । घृतस्य स्निग्धभास्वरत्वेन पशुतेजस्त्वम् । अपां चाऽऽप्यायनहेतुत्वादमृतत्वम् । एतैर्द्रव्यैरभिषिक्ते सति यजमान इन्द्रियादिकं संपादयति।

आचार्याय दक्षिणादानं विधत्ते—

सोऽभिषिक्तोऽभिषेक्त्रे ब्राह्मणाय हिरण्यं दद्यात्सहस्रं दद्यात्क्षेत्रं चतुष्पाद्दद्यादथाप्याहुरसंख्यातमेवापरिमितं दद्यादपरिमितो वै क्षत्रियोऽपरिमितस्यावरुद्ध्या इति, इति।

हिरण्यस्यैव संख्या [सहस्रमिति]। सहस्रनिष्कपरिमितमित्यर्थः । चतुष्पाच्छब्देन गवादिकमभिधीयते । पूर्वोक्तसहस्रपक्षमपेक्ष्याऽधिकाभिप्रायेणासंख्यातमिति पक्षान्तरमुक्तम् । तस्यैव व्याख्यानमपरिमितमिति । इयदेवेति संख्यानियमो नास्ति। किंतु स्वशक्त्यनुसारेण प्रभूतमेव दद्यात् । क्षत्रियो हि देशाधिपतित्वेनापरिमितो बहुधनयुक्तोऽतोऽपरिमितस्य प्रभूतस्य फलस्य सिद्ध्यर्थमित्यभिप्रायेण पक्षान्तरम् ।

दक्षिणायां दत्तायामाचार्यकर्तव्यं दर्शयति—

अथास्मै सुराकंसं हस्त आदधाति—स्वादिष्ठया मदिष्ठया पवस्व सोम धारया । इन्द्राय पातवे सुत इति, इति।

---

स्वादिष्ठया मदिष्ठया पवस्व०--९-१-१ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अथ दक्षिणास्वीकारादनन्तरमस्मा अस्य क्षत्रियस्य हस्ते सुरया पूर्णं कांस्यपात्रं स्वादिष्ठयेति मन्त्रेण स्थापयेत् । स च मन्त्रः क्रत्वङ्गाभिषेके व्याख्यातः ।

क्षत्रियकर्तव्यं दर्शयति—

तां पिबेद्यदत्र शिष्टं रसिनः सुतस्य यदिन्द्रो अपिबच्छचीभिः । इदं तदस्य मनसा शिवेन सोमं राजानमिह भक्षयामि । अभि त्वा वृषभा सुते सुतं सृजामि पीतये । तृम्पा व्यश्नुही मदामिति, इति ।

तां कांस्यपात्रस्थां सुरां क्षत्रियो यदत्रेति मन्त्रद्वयेन पिबेत् । अत्र कांस्यपात्रे रसिनो रसयुक्तस्य सुतस्याभिषुतस्य व्रीह्याद्यङ्कुरजन्यस्य पेयद्रव्यस्य यच्छिष्टं योऽवस्थितो भागः । यच्च द्रव्यं शचीभिः कर्मविशेषैः संस्कृतमिन्द्रोऽपिबत् । शचीशब्दः कर्मनाम । इहास्मिन्नभिषेककर्मणि सोमं राजानं सोमसदृशमस्य पेयद्रव्यस्य तदिदं स्वरूपं शिवेन शान्तेन भक्तियुक्तेन मनसा भक्षयामि । सोऽयमेको मन्त्रः । हे वृषभ श्रेष्ठेन्द्र त्वाऽभि त्वामभिलक्ष्य सुतेऽस्मिन्द्रव्येऽभिषुते सति पीतये तव पानार्थं सुतमभिषुतं द्रव्यं सृजामि त्वद्धस्ते ददामि । तृम्प तेन द्रव्येण तृप्तो भव । मदं हर्षं व्यश्नुहि विशेषेण प्राप्नुहि । अयं द्वितीयो मन्त्रः ।

तदिदं पानं प्रशंसति—

यो ह वाव सोमपीथः सुरायां प्रविष्टः सहैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य भक्षितो भवति न सुरा, इति ।

यो ह वाव यः खलु सोमपीथः सोमस्य पानविशेषः सुरायां सुराद्रव्ये प्रविष्टोऽस्ति । एतेन सोमपानविशेषेण सहैव पूर्वोक्तेन्द्राभिषेकविधानेनाभिषिक्तस्य क्षत्रियस्य द्रव्यविशेषो भक्षितो भवति । नतु सुरा भक्षिता भवति । सोऽयं मन्त्रद्वयस्य महिमा ।

पानादूर्ध्वमभिमन्त्रणं विधत्ते—

तां पीत्वाऽभिमन्त्रयेतापाम सोमं शं नो भवेति, इति ।

---

अभि त्वा वृषभा सुते०—८-४५-२२ । अपाम सोमं०—८-४८-३ । शं नो भव हृदे आपीत इन्दो०—८-४८-४ :


CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अपाम सोममित्यृगेका । शं नो भवेति द्वितीया । ताभ्यामभिमन्त्रयेत । इदानीं दृष्टान्तेन पानं प्रशंसति—

तद्यथैवादः प्रियः पुत्रः पितरं प्रिया वा जाया पतिं सुखं शिवमुपस्पृशत्याविस्रस एवं हैवैतेनैन्द्रेण महाभिषेकेणाभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यद्वाऽन्नाद्यं सुखं शिवमुपस्पृशत्याविस्रसः ॥ २० ॥ इति ।

तत्तत्र पानेऽदो लौकिकं निदर्शनमुच्यते । यथैव प्रियः पुत्रः शिवं सुखं यथा भवति तथा पितरमुपस्पृशति । प्रिया वा जाया च पतिं यथा स्पृशति । शिवं शान्तं शास्त्रनिषिद्धमार्गेण यत्सुखं तन्नरकहेतुत्वादुग्रम् । विहितमार्गेण तु तदभावाच्छान्तम् । सुखस्पर्शस्यावधिराविस्रस इत्यनेनोच्यते । आविस्रस अविस्रंसनादेहपातपर्यन्तमित्यर्थः । यथा स्पर्शद्वयं दृष्टसुखहेतुरेवं हैवाने. नैव प्रकारेण पूर्वोक्तैन्द्रमहाभिषेकविधिनाऽभिषिक्तस्य क्षत्रियस्य सुरा वा सोमो वाऽन्यान्यन्नद्रव्याणि देहपातपर्यन्तं शान्तसुखस्पर्शप्रदानि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण- भाष्य एकोनचत्वारिंशाध्याये षष्ठः खण्डः ॥६॥ (२०)[१७८]।

---

उक्तं महाभिषेकं चिरंतनशिष्टाचारोदाहरणेन प्रशंसति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण तुरः कावषेयो जनमेजयं पारिक्षितमभिषिषेच तस्मादु जनमेजयः पारिक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति ।

कवषस्य पुत्रस्तुरनामको महर्षिः परिक्षितपुत्रं जनमेजयमुक्तविधानेनाभिषिषेच । तस्मादेव कारणाज्जनमेजयः सर्वतः सर्वासु दिक्षु पृथिवीं समन्तमन्तेन समुद्रतीरेण संयुक्तं यथा भवति तथा जयन्विजयं प्राप्नुवन्परीयाय परितश्चचार अभिषेकमाहात्म्येनैव दिग्विजयं कृतवानित्यर्थः । अभिषेकप्रसादादेव मेधयागयोग्येनाश्वेन चेज इष्टवान् । अश्वमेधं कृतवानित्यर्थः ।

अस्मिन्नर्थे कांचिद्गाथामुदाहरति—

तदेषाऽभि यज्ञगाथा गीयते, इति

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


तत्तस्मिञ्जनमेजयवृत्तान्त एषा वक्ष्यमाणा यज्ञविषया गीतिर्वैदिकैरभितो गीयते ।

तां गाथां दर्शयति —

आसन्दीवति धान्यादं रुक्मिणं हरितस्रजम् । अश्वं बबन्ध सारंगं देवेभ्यो जनमेजय इति, इति ।

आसन्दीवानिति देशविशेषस्य नामधेयम् । तस्मिन्देशे जनमेजयो देवेभ्यो देवार्थं यागयोग्यमश्वं बबन्ध । कीदृशमश्वम् । धान्यादं धान्यमेवात्ति । रुक्मिणम् । रुक्मशब्देन ललाटगतं श्वेतलाञ्छनमुपलक्ष्यते । तद्युक्तम् । हरितवर्णा स्रग्य-स्यासौ हरितस्रक् । पुष्पमालेव वर्णो देहं व्याप्य वर्तत इत्यर्थः । सारं कर्मसु श्रेष्ठं यागं गच्छतीति सारंगः । इत्यनया गाथया जनमेजयस्याभिषेकमाहिमो-दाहृतः ।

जनमेजयवच्छार्यातनामकं राजानमुदाहरति —

एतेन ह वा ऐन्द्रेण महाभिषेकेण च्यवनो भार्गवः शार्यातं मानवमभिषिषेच तस्मादु शार्यातो मानवः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे देवानां हापि सत्रे गृहपतिरास, इति ।

भृगोः पुत्रश्च्यवननामको महर्षिर्मनुवंशोत्पन्नं शार्यातनामकं राजानमभिषि-षेच । तस्मात्फलं पूर्ववत् । किंच देवानां संबन्धिनि सत्रेऽपि शार्यातो गृहप-तिरभूत् ।

शतानीकनामकं राजानमुदाहरति —

एतेन ह वा ऐन्द्रेण महाभिषेकेण सोमशुष्मा वाज-रत्नायनः शतानीकं सात्राजितमभिषिषेच तस्मादु शतानीकः सात्राजितः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति ।

सोमशुष्मनामकः कश्चिन्महर्षिः । स च वाजरत्नस्य पौत्रः । तथाविधो मुनिः सत्राजितः पुत्रं शतानीकनामकं क्षत्रियमभिषिषेच । शेषं पूर्ववत् ।

आम्बाष्ठ्यनामानं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


वाम्बाष्ठ्यमभिषिषिचतुस्तस्माद्वाम्बाष्ठ्यः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति।

युधांश्रौष्टिनामकमुग्रसेनस्य पुत्रं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण पर्वतनारदौ युधांश्रौष्टिमौग्रसैन्यमभिषिषिचतुस्तस्माद्धु युधांश्रौष्टिरौग्रसैन्यः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति।

भुवनाख्यस्य पुत्रं विश्वकर्मनामकं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण कश्यपो विश्वकर्माणं भौवनमभिषिषेच तस्माद्धु विश्वकर्मा भौवनः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति।

भौवनाभिषेकमाहात्म्यं प्रशंसितुं पुरातनमहर्षिप्रोक्तमुदाहरणं दर्शयति—

भूमिर्ह जगावित्युदाहरन्ति, इति।

भूमिर्देवता जगौ भौवनं प्रति किंचिद्वाक्यं गाथारूपमुक्तवतीत्येवं पूर्वे महर्षय उदाहरन्ति।

तां गाथां दर्शयति—

न मा मर्त्यः कश्चन दातुमर्हति विश्वकर्मन्भौवन मां दिदासिथ। निमङ्क्ष्येऽहं सलिलस्य मध्ये मोघस्त एष कश्यपायाऽऽस संगर इति, इति।

भुवनाख्यस्य पुत्र हे विश्वकर्मन्कश्चिदपि मनुष्यो मां भूमिं दातुं नार्हति। अत एव मीमांसका विचार्य सर्वस्वदाने महाभूमिदानं निवारितवन्तः। एवं सति त्वं मां भूमिं दिदासिथ कश्यपाय त्वदीयाचार्याय दातुमिच्छसि। अहं तु सलिलस्य समुद्रस्य मध्ये निमङ्क्ष्ये निमज्जनं करिष्ये। तथा सति ते कश्यपाय त्वदीयाचार्यस्य कश्यपस्यैष संगरो भूमिप्रतिग्रहविषयो मोघ आस व्यर्थ एव बभूवेति। ईदृशमपि महाभूमिमज्जनं महाभिषेकमहिम्ना निवारितमिति तात्पर्यार्थः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


सुदा इत्येतन्नामकं पिजवनस्य पुत्रं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण वसिष्ठः सुदासं पैजवनमभिषिषेच तस्मादु सुदाः पैजवनः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति।

अविक्षिन्नामकस्य पुत्रं मरुत्तनामानं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण संवर्त आङ्गिरसो मरुत्तमाविक्षितमभिषिषेच तस्मादु मरुत्त आविक्षितः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मध्येनेजे, इति।

संवर्तनामको महर्षिरङ्गिरसः पुत्रः।

तेन कृतं मरुत्ताभिषेकं प्रशंसितुं श्लोकमुदाहरति—

तदप्येष श्लोकोऽभिगीतः, इति।

तस्मिन्नपि मरुत्ताभिषेकमाहात्म्य एष वक्ष्यमाणः श्लोकः पादबद्धो मन्त्रोऽभिगीतोऽभितः सर्वैः पठितः।

तं श्लोकं दर्शयति—

मरुतः परिवेष्टारो मरुत्तस्यावसन्गृहे।
आविक्षितस्य कामप्रेर्विश्वेदेवाः सभासद इति ॥२१॥ इति।

मरुत्तनाम्नो राज्ञो गृहे मरुत्संज्ञका देवा भोजनकाले परिवेषणकर्तारो भूत्वाऽवसन्। तथैवाऽऽविक्षितस्याविक्षित्पुत्रस्य कामप्रेः सर्वकामपूरितस्य मरुत्तस्य गृहे विश्वे सर्वे देवाः सभासदः सभायामुपविष्टाः सेवन्त इति शेषः। इत्येष सर्वोऽपि महाभिषेकस्य महिमेत्यभिप्रायः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनचत्वारिंशाध्याये सप्तमः खण्डः ॥७॥ (२१) [१७९]।

---

अङ्गनामकं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेणोदमय आत्रेयोऽ-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



ङ्गमभिषिषेच तस्माद्वङ्गः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वेन च मेध्येनेजे, इति ।

उदमयनामकः कश्चिन्महर्षिरत्रेः पुत्रोऽङ्गमभिषिषेच ।

तस्याङ्गाभिषेकस्य माहात्म्यं दर्शयितुं कंचिद्वृत्तान्तमाह—

स होवाचालोपाङ्गो दश नागसहस्राणि दश दासीसहस्राणि ददामि ते ब्राह्मणोप माऽस्मिन्यज्ञे ह्वयस्वेति, इति ।

योऽयमङ्गनामको राजोक्तः सोयमलोपाङ्गः संपूर्णावयव इत्यर्थः । महदस्याङ्गसौष्ठवम् । स कदाचित्स्वकीयाभिषेककर्तर्युदमयनामके पुरोहिते स्वार्थं यागं कुर्वाणे सति तं प्रत्येवमुवाच । हे ब्राह्मणास्मिंस्त्वदीये यज्ञे मामुपह्वयस्व समाह्वानं कुरु । अहमागत्य त्वदीययज्ञे दक्षिणासंपूर्त्यर्थं तुभ्यं गजसहस्राणि दासीसहस्राणि च ददामीति । सेयं बहुदानसंपत्तिः सद्बुद्धिश्च महाभिषेकप्रसादलब्धा ।

एवमेवार्थं प्रपञ्चयितुं श्लोकानुदाहरति—

तदप्येते श्लोका अभिगीताः, इति ।

तस्मिन्नप्यङ्गराजपुरोहितस्य यागे दानप्रतिपादका एते पञ्च श्लोका अभितो गीताः सर्वतोऽभिज्ञैः पठिताः ।

तत्र प्रथमं श्लोकमाह—

याभिर्गोभिरुदमयं प्रैयमेधा अयाजयन् ।
द्वे द्वे सहस्रे बद्वानामात्रेयो मध्यतोऽददात्, इति ।

प्रियमेधस्य पुत्राः प्रैयमेधा महर्षय उदमयनामकमङ्गराजपुरोहितं याभिर्गोभिर्दक्षिणारूपाभिरयाजयन् । ता गावो वक्ष्यन्त इति शेषः । बद्वमिति शतकोटिसंख्याया नामधेयम् । बद्वानां शतकोटिसंख्याकानां गवां मध्ये प्रतिदिनं द्वे द्वे सहस्रे मध्यतो माध्यंदिनसवनेऽत्रिपुत्र उदमयो दत्तवान् ।

द्वितीयं श्लोकमाह—

अष्टाशीतिः सहस्राणि श्वेतान्वैरोचनो हयान् ।
प्रष्टीन्निश्चृत्य प्रायच्छद्यजमाने पुरोहिते, इति ।

वैरोचनो विरोचनस्य पुत्रोऽङ्गनामको राजा स्वकीयपुरोहित उदमयनामके

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


यजमाने यागं कुर्वाणे स्वयमागत्याष्टाशीतिसहस्रसंख्याकानश्वाञ्श्वेतवर्णान्प्रष्टीन्पृष्ठवाहनयोग्यवयस्कान्निश्चृत्य स्वकीयाश्वबन्धनस्थानान्निःसार्य प्रायच्छद् दत्तवान् ।

तृतीयं श्लोकमाह—

देशाद्देशात्समोहूळानां सर्वासामाढ्यदुहितॄणाम् ।
दशाददात्सहस्राण्यात्रेयो निष्ककण्ठ्यः, इति ।

देशाद्देशाद्दिग्विजयकाले तत्तद्देशविशेषात्समोहूळानां सम्यगासमन्तादूढानामानीतानामाढ्यदुहितॄणां[1] धनिकपुत्रीणां सर्वासां दश सहस्राण्यात्रेयोऽङ्गराजपुरोहितो दत्तवान् । ताश्च दुहितरो निष्ककण्ठ्य आभरणोपेतकण्ठयुक्ताः ।

चतुर्थं श्लोकमाह—

दश नागसहस्राणि दत्त्वाऽऽत्रेयोऽवचत्नुके ।
श्रान्तः पारिकुटान्प्रैप्सद्दानेनाङ्गस्य ब्राह्मणः, इति ।

अङ्गराजस्य पुरोहितो ब्राह्मण आत्रेयोऽवचत्नुकनामदेशे गजसहस्राणि दशसंख्याकानि दत्त्वा दानेन श्रान्तः सन्पारिकुटान्परिचारकान्प्रैप्सत्प्रेषितवान् । हे परिचारका यूयं दत्तेत्येवमुक्तवानित्यर्थः ।

पञ्चमं श्लोकमाह—

शतं तुभ्यं शतं तुभ्यमिति स्मैव प्रताम्यति ।
सहस्रं तुभ्यमित्युक्त्वा प्राणान्स्म प्रतिपद्यत
इति ॥ २२ ॥ इति ।

परिचारकाणामप्यग्र एकैकशो वक्तुमशक्तस्तुभ्यं शतं तुभ्यं शतमिति शतसंख्यां प्रोक्त्वा तत्रापि प्रताम्यति स्मैव ग्लानिमेव प्राप्तवान् । ततः शतसंख्यां परित्यज्य सहस्रं तुभ्यमित्युक्त्वा तस्यामपि संख्यायां बहुशः प्रोक्तायामा. श्रान्तः सन्प्राणान्प्रतिपद्यते स्म । मध्ये मध्ये श्रमपरिहाराय दीर्घश्वासं कृतवानित्यर्थः । अङ्गराजस्य पुरोहितायाप्येतादृशसामर्थ्यं महाभिषेकप्रसादलब्धमिति तात्पर्यार्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्य एकोनचत्वारिंशाध्यायेऽष्टमः खण्डः ॥८॥ (२२) [१८०] ।

---

1 क्ष. ग. °हितॄणां ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



दुष्यन्तस्य पुत्रं भरताख्यं राजानमुदाहरति—

एतेन ह वा ऐन्द्रेण महाभिषेकेण दीर्घतमा मामतेयो भरतं दौष्यन्तिमभिषिषेच तस्मादु भरतो दौष्यन्तिः समन्तं सर्वतः पृथिवीं जयन्परीयायाश्वैरु च मेध्यैरीजे, इति।

ममताख्यायाः स्त्रियाः पुत्रो दीर्घतमा इत्येतन्नामा मुनिर्भरतमभिषिषेच ।, भरतोऽपि दिग्विजयेन पृथिवीं परीत्य मेध्यैरश्वैरपीजे। उ चेति निपातयोः समूहः समुच्चयार्थः ।

भरताभिषेकमाहात्म्यं दर्शयितुं श्लोकानुदाहरति—

तदप्येते श्लोका अभिगीताः, इति।

तत्रास्मिन्भरताभिषेकमाहात्म्येऽप्येते वक्ष्यमाणाः पञ्च श्लोका अभितः परिगीयन्ते ।.

तत्र प्रथमं श्लोकमाह—

हिरण्येन परीवृतान्कृष्णाञ्शुक्लदतो मृगान्।
मष्णारे भरतोऽददाच्छतं बद्धानि सप्त च, इति।

मृगशब्देनात्र गजा विवक्षिताः। मृगवदिति बाहुल्यविवक्षया मृगशब्दः। ते च गजा हिरण्येन परीवृताः सर्वाभरणयुक्ताः शरीरपुष्ट्या वर्णोत्कर्षे सत्यत्यन्तं कृष्णाः प्रतिभासन्ते। शुक्लाभ्यां दन्ताभ्यां युक्ताः। तादृशान्गजान्मष्णारनामके देशे भरतो राजा दत्तवान्। शतमित्यादि तत्संख्योच्यते । बद्धं वृन्दमित्येतौ पर्यायौ। वृन्दशब्दश्च शतकोटिवाचित्वेन गणिते ग्रन्थकारैर्दर्शितः—

"एकं दश च शतं च सहस्रं च युतनियुते तथा।
प्रयुतकोट्यर्बुदं वृन्दं स्थानात्स्थानाद्दशगुणं स्यात्" ॥ इति।

तानि च शतकोटिरूपाणि बद्धानि सप्ताधिकशतसंख्याकानि। तावतो गजान्दत्तवानित्यर्थः।

द्वितीयं श्लोकमाह—

भरतस्यैष दौष्यन्तेरग्निः साचीगुणे चितः।
यस्मिन्सहस्रं ब्राह्मणा बद्वशो गा विभेजिरे, इति।

साचीगुणनामके कस्मिंश्चिद्देशे दुष्यन्तपुत्रस्य भरतस्यैषोऽग्निश्चितः। अग्निचयनं कृतवानित्यर्थः। यस्मिन्नग्निचयने सहस्रसंख्याका ब्राह्मणा बद्वशः प्रत्येकं शतकोटिसंख्यया गा विभेजिरे। तासां विभागं कृतवन्तः।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तृतीयं श्लोकमाह—

अष्टासप्ततिं भरतो दौष्यन्तिर्यमुनामनु ।

गङ्गायां वृत्रघ्नेऽबध्नात्पञ्चपञ्चाशतं हयान्, इति ।

मेध्यैरश्वैरीजे इत्युक्तं तेषामश्वानां संख्याऽत्रोच्यते । अष्टाधिका सप्ततिरष्टासप्ततिः । तामष्टासप्ततिं दुष्यन्तपुत्रो भरतो यमुनामनु यमुनायास्तीरेऽवध्नाद्बद्धवान् । तावतोऽश्वमेधान्कृतवानित्यर्थः । गङ्गायां गङ्गातीरे वृत्रघ्ननामके देशे पञ्चाधिकपञ्चाशत्संख्याकान्हयानबध्नात् । तावतोऽश्वमेधान्कृतवान् ।

चतुर्थं श्लोकमाह—

त्रयस्त्रिंशच्छतं राजाऽश्वान्बद्ध्वाऽय(यं) मेध्यान् ।

दौष्यन्तिरत्यगाद्राज्ञो मायां मायवत्तरः, इति ।

यमुनातीरे गङ्गातीरे चानुष्ठिता अश्वास्त्रयस्त्रिंशदधिकशतसंख्याकाः । तावतोऽश्वान्मेध्यान्यज्ञयोग्यान्निबध्युक्तक्रमेण बन्धनं कृत्वा सोऽयं राजा दौष्यन्तिर्मायवत्तरोऽतिशयेन मायावी सन्राज्ञः स्वकीयशत्रोर्मायामत्यगादतिक्रान्तवान् ।

पञ्चमं श्लोकमाह—

महाकर्म भरतस्य न पूर्वे नापरे जनाः ।

दिवं मर्त्य इव हस्ताभ्यां नोदापुः पञ्च मानवा इति, इति ।

भरतस्य राज्ञो यदेतन्महाकर्म तदेतत्पूर्वे पित्रादयो न कर्तुं शक्ताः । अपरे जनाः पुत्रपौत्रादयश्च न कर्तुं शक्ताः । तत्र दृष्टान्तः । यथा मनुष्यो दिवं स्वर्गं हस्ताभ्यां स्प्रष्टुमशक्त एवं पञ्च मानवा निषादपञ्चमाश्चत्वारो वर्णा नोदापुस्तदीयं कर्म प्राप्तुमशक्ताः । सोऽयं सर्वोऽपि महाभिषेकस्य महिमेत्यर्थः ।

अथ संप्रदायकथनमुखेन महाभिषेकं प्रशंसति—

एतं ह वा ऐन्द्रं महाभिषेकं बृहदुक्थ ऋषिर्दुर्मुखाय

पाञ्चालाय प्रोवाच तस्मादु दुर्मुखः पाञ्चालो राजा

सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय, इति ।

बृहदुक्थनामकः कश्चिदृषिः पञ्चालदेशस्वामिने दुर्मुखनाम्ने राज्ञे तमेतमिन्द्रसंबन्धिनं महाभिषेकं प्रोवाच । तस्मादेव कारणात्स राजा सन्विद्यया महाभिषेकज्ञानेनैव सर्वासु दिक्षु समन्तं समग्रां पृथिवीं जयन्परीयाय परितः संचचार ।

१२०

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



अथ ब्राह्मणस्योक्ताभिषेकाधिकाराभावेऽपि तद्विद्याधिकारसद्भावात्फल-सिद्धिं दर्शयति—

एतं ह वा ऐन्द्रं महाभिषेकं वासिष्ठः सात्यहव्योऽत्यरातये जानंतपये प्रोवाच तस्मादत्यरातिर्जानंतपिरराजा सन्विद्यया समन्तं सर्वतः पृथिवीं जयन्परीयाय, इति।

वसिष्ठगोत्रोत्पन्नो वासिष्ठः सत्यहव्यस्य पुत्रः सात्यहव्यस्तादृशो मुनिरत्य-रातिनामकाय जनंतपपुत्राय ब्राह्मणाय तमेतं महाभिषेकं प्रोवाच। तस्मादेव कारणादयमत्यरातिर्जानंतपिः स्वयमराजा सन्नप्यभिषेकविद्यया जयं प्राप्तः परितो गतवान्।

यथाऽभिषेके शपथं कृत्वा गुरुद्रोहो न कर्तव्य एवं विद्यायामपीति दर्शयति—

स होवाच वासिष्ठः सात्यहव्योऽजैषीर्वै समन्तं सर्वतः पृथिवीं महन्मा गमयेति स होवाचात्यरातिर्जानंतपिर्यदा ब्राह्मणोत्तरकुरूञ्जयेयमथ त्वमु हैव पृथिव्यै राजा स्याः सेनापतिरेव तेऽहं स्यामिति स होवाच वासिष्ठः सात्यहव्यो देवक्षेत्रं वै तन्न वै तन्मर्त्यो जेतुमर्हत्यद्रुक्षो वै म आ त इदं दद इति ततो हात्यरातिं जानंतपिमात्तवीर्यं निःशुक्रममित्रतपनः शुष्मिणः शैब्यो राजा जघान, इति।

सात्यहव्यो वासिष्ठो गुरुरत्यरातिं शिष्यमेवमुवाच। हेऽत्यराते विद्यासा-मर्थ्यात्पृथिवीं जितवानसि। अतो मां गुरुं महद्गमय महत्त्वमैश्वर्यं प्रापय। ततः शिष्योऽत्यरातिरेवमुवाच। मा भूदिदानीं तव महत्त्वम्। हे ब्राह्मणाचार्य यदाऽहमुत्तरकुरुनामकान्हिमवत्पर्वतस्योत्तरदेशाञ्जयेयं तदानीं त्वमेव पृथिव्या राजा भव। अहं तु त्वदीयसेनापतिरेव भवामीति। ततः सात्यहव्यो वासिष्ठः

१ ग. °कामाभि°।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स गुरुरेवमुवाच । हेऽत्यराते मेरोरुत्तरतो यदस्ति तदेवक्षेत्रपतस्तत्क्षेत्रं मनुष्यो जेतुं नैवार्हति । त्वं तु मे मह्यमद्रुह्यो वै द्रोहं कृतवानेव । मदपेक्षितं महत्त्वं दातुमनिच्छुः सन्वञ्चनार्थं यत्किंचिदुक्तवानासि । अतः शपथोल्लङ्घिनो गुरुद्रोहिणस्तवेदं सामर्थ्यमादेऽपहरामीति । ततः सामर्थ्यापहरणादत्यरातिं जानंतपिं गुरुणाऽपहृतवीर्यमपहृततेजस्कं कश्चिच्छत्रुतापनः शिबिपुत्रः शुष्मिणाख्यो राजा जघान हतवान् ।

एतद्वृत्तान्तकथनफलं दर्शयति—

तस्मादेवंविदुषे ब्राह्मणायैवंचक्रुषे न क्षत्रियो द्रुह्येन्नेद्राष्ट्रादवपद्येयं नेद्वा मा प्राणो जहादिति जहदिति ॥ २३ ॥ इति ।

यस्माद्गुरुद्रोहे महती हानिरुक्ता तस्मादेवंविदुषे महाभिषेकाभिज्ञायैवंचक्रुषेऽभिषेककर्त्रे ब्राह्मणायाऽऽचार्याय क्षत्रियो न द्रुह्येत् । केनाभिप्रायेणेति सोऽभिधीयते । राष्ट्रादस्माद्देशान्नेदवपद्येयं नैव भ्रष्टो भूयासम् । अथवा मा प्राणो नेज्जहन्नैव परित्यजत्वित्यभिप्रायः । अभ्यासोऽध्यायसमाप्त्यर्थः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये नवमः खण्डः ॥ ९ ॥ ( २३ ) [ १८१ ] ।

---

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकवीरबुक्कणसाम्राज्यधुरंधरसायणाचार्यकृतावैतरेयब्राह्मणभाष्य एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

## अथ चत्वारिंशोऽध्यायः ।

---

महाभिषेक ऐन्द्रो यः क्षत्रस्यासौ पुरोहितः ।
पौरोहित्यं ब्राह्मणस्य वक्तव्यमधुनोच्यते ॥

तदेतत्प्रतिजानीते—

अथातः पुरोधाया एव, इति ।

अथ क्षत्रियाय महाभिषेककथनानन्तरं यतो ब्राह्मणस्य पौरोहित्यं बहुषु श्रुतं भवत्यत कारणात्पुरोधाया एव पौरोहित्यस्यैव विधिरुच्यत इति शेषः ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri



तद्विधिं दर्शयति —

न ह वा अपुरोहितस्य राज्ञो देवा अन्नमदन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरो दधीत देवा मेऽन्नमदन्निति, इति ।

यस्मादपुरोहितस्य राज्ञोऽन्नं देवा नादन्ति न भक्षयन्ति तस्माद्राजा यक्ष्यमाणो ब्राह्मणं पुरोहितं कुर्यात् । केनाभिप्रायेणेति सोऽभिधीयते । देवा मदीयमन्नमदन्नदन्त्विति तस्याभिप्रायः । अयक्ष्यमाण इति वा पदच्छेदः । यागाभावेऽपि प्रजापरिपालनधर्मबोधनाय पुरोहितः संपादनीयः ।

तदेवमेतत्प्रशंसति —

अग्नीन्वा एष स्वर्ग्यान्राजोद्धरते यत्पुरोहितम्, इति ।

पुरोहितं संपादयतीति यदस्ति तेनैष राजा स्वर्गहेतूनग्नीनेवोद्धरते ।

तानग्नीन्दर्शयति—

तस्य पुरोहित एवाऽऽहवनीयो भवति जाया गार्हपत्यः पुत्रोऽन्वाहार्यपचनः स यत्पुरोहिताय करोत्याहवनीय एव तज्जुहोत्यथ यज्जायायै करोति गार्हपत्य एव तज्जुहोत्यथ यत्पुत्राय करोत्यन्वाहार्यपचन एव तज्जुहोति त एनं शान्ततनवोऽभिहुता अभिप्रीताः स्वर्गं लोकमभिवहन्ति क्षत्रं च बलं च राष्ट्रं च विशं च, इति ।

तस्य राज्ञः पुरोहितादय एवाऽऽहवनीयाद्यग्निस्थानीयाः । अन्वाहार्यपचनो दक्षिणाग्निः । स राजा पुरोहितादिभ्यो यदपेक्षितं करोति तदेतदाहवनीयादिषु होमसमानम् । अतः पुरोहितद्वारा तेऽग्नयः शान्ततनवः स्वकीयमुग्ररूपत्वं परित्यज्याभीष्टहोमेन प्रीता एनं क्षत्रियं स्वर्गादिकं प्रापयन्ति । क्षत्रं मानसोत्साहरूपं शौर्यम् । बलं शारीरम् । राष्ट्रं देशः । विट् प्रजा । पुरोहितादिप्रीत्या तदेतत्सर्वं प्राप्यते ।

विपक्षे बाधकमाह—

त एवैनमशान्ततनवोऽनभिहुता अनभिप्रीताः स्वर्गा-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

लोकान्नुदन्ते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च, इति।

त एव पुरोहितादयोऽमीष्टहोमाभावेन प्रीतिरहिता अशान्ततनवः स्वर्गादेनमपनुदन्ते ।

पुनरपि पुरोहितं प्रकारान्तरेण प्रशंसति—

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्तस्य वाच्येवैका मेनिर्भवति पादयोरेका त्वच्येका हृदय एकोपस्थ एका ताभिर्ज्वलन्तीभिर्दीप्यमानाभिरुपोदेति राजानं स यदाह क्व भगवोऽवात्सीस्तृणान्यस्मा आहरतेति तेनास्य तां शमयति याऽस्य वाचि मेनिर्भवत्यथ यदस्मा उदकमानयन्ति पाद्यं तेनास्य तां शमयति याऽस्य पादयोर्मेनिर्भवत्यथ यदेनमलं कुर्वन्ति तेनास्य तां शमयति याऽस्य त्वचि मेनिर्भवत्यथ यदेनं तर्पयन्ति तेनास्य तां शमयति याऽस्य हृदये मेनिर्भवत्यथ यदस्यानारुद्धो वेश्मसु वसति तेनास्य तां शमयति याऽस्योपस्थे मेनिर्भवति, इति ।

परोपद्रवकारिणी क्रोधरूपा शक्तिर्मेनिरित्युच्यते । यथाऽग्नेर्ज्वाला तद्वत् । अतो यः पुरोहितोऽस्ति सोऽयं पञ्चविधमेन्युपेतो वैश्वानरनामकाग्निसमानः । वागादीनि पञ्च मेनिस्थानानि । अतः पुरोहितस्ताभिर्मेनिभिर्ज्वलन्तीभिर्ज्वालासदृशीभिर्दीप्यमानाभिः परेषु दीप्तिं संतापं कुर्वतीभिः सह राजानमुपोदेति समीपे प्राप्नोति । तदा स राजा हे भगवन्नेतावन्तं कालं कुत्रावात्सीः । एतस्य पुरोहितस्योपवेशनार्थं हे परिचारकास्तृणानि तृणनिर्मितकुशाग्रासनान्यहरतेत्यनेन राजसंबन्धिना प्रियवाक्येन(ण) वाच्येका या मेनिर्बाधिका शक्तिस्तां स राजा शमयति । पाद्यार्थोदकानयनेन पादगता मेनिः शाम्यति । वस्त्रगन्धाद्यलंकरणेन त्वग्गता मेनिः शाम्यति । धनादिना संतर्पणेन हृदयगता मेनिः शाम्यति । अस्य राज्ञो वेश्मस्वनारुद्धो निरोधरहितः शयनादिकं कुर्वन्निवस-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

क्ष्मेण वसतीति यदस्ति तेनोपस्थस्था मेनिः शाम्यति। गृहे समागतस्य पुरोहितस्यैतावन्त उपचाराः कर्तव्या इत्यर्थः।

अन्वयव्यतिरेकाभ्यामुक्तोपचारं प्रशंसति—

स एनं शान्ततनुरभिहुतोऽभिप्रीतः स्वर्गं लोकमभिवहति क्षत्रं च बलं च राष्ट्रं च विशं च स एवैनमशान्ततनुरनभिहुतोऽनभिप्रीतः स्वर्गाल्लोकान्नुदते क्षत्राच्च बलाच्च राष्ट्राच्च विशश्च ॥ २४ ॥ इति।

उक्तोपचारहोमेन प्रीतौ सत्यां शान्ततनुः स्वर्गादिकं प्रापयतीत्यन्वयः। उक्तोपचारहोमाभावे स्वर्गादेरपनुदतीति व्यतिरेकः॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चत्वारिंशाध्याये प्रथमः खण्डः ॥ १ ॥ (२४)[१८२]।

---

उक्तोपचारेण प्रीतं पुरोहितं दृष्टान्तेन प्रशंसति—

अग्निर्वा एष वैश्वानरः पञ्चमेनिर्यत्पुरोहितस्ताभी राजानं परिगृह्य तिष्ठति समुद्र इव भूमिम्, इति।

योऽयं पुरोहितोऽस्ति स एष पञ्चमेनिः पञ्चविधोग्रशक्तियुक्तो वैश्वानरनामकोऽग्निरेव। निग्रहानुग्रहयोरग्निवच्छक्तिमत्त्वात्। पुरोहितस्ताभिः शान्ताभिः शक्तिभिस्तं राजानं परिगृह्य परितः स्वीकृत्य तिष्ठति। यथा समुद्रो भूमिं परितः स्वीकृत्य तिष्ठति तद्वत्।

पुरोहितवशादनिष्टं परिहारयति—

अयुवमार्यस्य राष्ट्रं भवति नैनं पुराऽऽयुषः प्राणो जहात्याजरसं जीवति सर्वमायुरेति न पुनर्म्रियते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः, इति।

यस्य राज्ञ एवं विद्वान्वेदशास्त्रोक्तप्रकारेण धर्माधर्मौ बोधयितुमभिज्ञो ब्राह्मणो राष्ट्रगोपो राज्यपरिपालनक्षमः पुरोहितो भवतीदृशस्याऽऽर्यस्य राज्ञो राष्ट्रमयुवं कदाचिदपि पृथग्भावरहितं भवति 'यु मिश्रणामिश्रणयोः' इति धातुरामिश्रणे वर्तते। अयुवमिति पदेन स निषिध्यते राष्ट्रमस्थिरं न भवतीत्यर्थः। अथवाऽस्य राष्ट्रमयुवमारि युवमरणरहितं भवतीत्यर्थः। एनं राजानमायुषः पुरा

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

प्राणो न परित्यजति । अपमृत्युर्न भवतीत्यर्थः । अत एवाऽऽजरसं जरापर्यन्तं सुखेन जीवति । सर्वमायुरेति प्राप्तायामपि जरायामवशिष्टं सर्वमायुः प्राप्नोति । ततः सकृन्मृत्वा न पुनर्म्रियते । पुरोहितमुखेन तत्त्वज्ञानं संपाद्य मुच्यत इत्यर्थः ।

अनिष्टपरिहारं दर्शयित्वेष्टप्राप्तिं दर्शयति—

क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः, इति ।

उक्तविधपुरोहितयुक्तो राजा स्वकीयेन क्षत्त्रेण कुमारादिना परकीयं क्षत्त्रं कुमारादिकं जयति । तथा स्वकीयेन बलेन सैन्येन परकीयं बलं सैन्यमश्नुते प्राप्नोति । अभिभवतीत्यर्थः ।

इष्टप्राप्त्यनिष्टपरिहारौ दर्शयित्वा प्रजानुरागं दर्शयति—

तस्मै विशः संजानते संमुखा एकमनसो यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः ॥ २५ ॥ इति ।

उक्तविधपुरोहितयुक्ताय तस्मै तस्य राज्ञो विशः प्रजाः संजानते राज्ञा सहै-कमत्यं प्राप्नुवन्ति । प्राप्य च परस्परमप्येकमनस्का राज्ञः संमुखा भवन्ति न तु कस्मिन्नपि कार्ये विमुखाः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मण-भाष्ये चत्वारिंशाध्याये द्वितीयः खण्डः ॥२॥ (२५) [१८३] ।

---

पुरोहितमहिमानं दर्शयितुं मन्त्रमुदाहरति—

तदप्येतदृषिणोक्तम्, इति ।

तदेतत्पुरोहितमाहात्म्यमप्यृषिणा मन्त्रदर्शिना तिसृभिर्ऋग्भिरुक्तम् ।

तत्र प्रथमाया ऋचः पूर्वार्धं दर्शयति—

स इद्राजा प्रतिजन्यानि विश्वा शुष्मेण तस्थावभि वीर्येणेति, इति ।

स इत्स एव पुरोहितयुक्तो राजा प्रतिजन्यानि प्रतिपक्षबलानि विश्वा सर्वाणि शुष्मेण वीर्येण स्वकीयेनाधिकेन बलेनाभितस्थावभितिष्ठति । आभि-भवतीत्यर्थः ।

---

स इद्राजा प्रतिजन्यानि० — ४—५०—७ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

अस्यार्थस्य तात्पर्यं दर्शयति—

सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानेव त-च्छुष्मेण वीर्येणाधितिष्ठति, इति ।

जन्यानीत्यनेन सपत्ना एवाभिधीयन्ते । सपत्नशब्दस्य व्याख्यानं द्विषन्तो भ्रातृव्या इति । तानेव भ्रातृव्यांस्तत्तेन शुष्मेणाधिकेन वीर्येण सामर्थ्येनाधितिष्ठत्यभिभवति ।

तृतीयं पादमनूद्य व्याचष्टे—

बृहस्पतिं यः सुभृतं बिभर्तीति बृहस्पतिर्ह वै देवानां पुरोहितस्तमन्वन्ये मनुष्यराज्ञां पुरोहिता बृहस्पतिं यः सुभृतं बिभर्तीति यदाह पुरोहितं यः सुभृतं बिभर्तीत्येव तदाह, इति* ।

यो बृहस्पतिं बृहस्पतितुल्यं पुरोहितं सुभृतं यथा स्यात्सम्यगवस्थाप्येति यावत्तथा विभर्ति पोषयति स इद्राजेति पूर्वत्रान्वयः । यो देवानां बृहस्पतिः पुरोहितस्तं बृहस्पतिमनु पश्चान्मनुष्यराज्ञामन्ये पुरोहिता वर्तन्ते । अतः पुरोहितानां बृहस्पत्यनुसारित्वाद्बृहस्पतिमित्यादिपदेन पुरोहितविषयमेवैतद्वाक्यं मन्त्र आह ।

चतुर्थं पादमनूद्य व्याचष्टे—

वल्गूयति वन्दते पूर्वभाजमित्यपचितिमेवास्मा एतदाह, इति ।

स राजा पूर्वभाजं प्रथमतो भजनयुक्तं पुरोहितं स हि राजानं तदीयहितविचारेण प्रथमतो भजति । तादृशं वल्गूयति राजाऽर्चयति वन्दते नमस्करोति । एतदनेन पादेनास्मा अस्मिन्यजमानेऽपचितिमेव मन्त्र आह—

द्वितीयस्या ऋचः प्रथमं पादमनूद्य पूजामेव व्याचष्टे ।

स इत्क्षेति सुधित ओकसि स्व इति गृहा वा ओकः स्वेष्वेव तद्गृहेषु सुहितो वसति, इति ।

* ब. पुस्तकस्थः पुस्तकान्तरपाठः—"ति । हितोपदेशेन राजानं सुष्ठु बिभर्तीति सुभृत् । तादृशं बृहस्पतिसमानं बिभर्ति पोषयति । स ।

स इत्क्षेति सुधित ओकसि स्वे०—४-५०-८ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


स इत्स एव राजा पूजितः पुरोहितः सुधितः सुप्रीतः स्वे स्वकीय एवौकसि गृहे क्षेति निवसति । ओकःशब्देनात्र गृहा एवोच्यन्ते । ततः स्वेष्वेव गृहेषु सुप्रीतो वसतीत्युक्तं भवति ।

द्वितीयं पादमनूद्य व्याचष्टे—

तस्मा इळा पिन्वते विश्वदानीमित्यन्नं वा इळाऽन्नमेवास्मा एतदूर्जस्वच्छश्वद्भवति, इति ।

तस्मै पुरोहितयुक्ताय राज्ञ इळाऽन्नम् । विश्वदानीं सर्वस्मिन्नपि काल इदानीं तदानीमित्यादिवदवगन्तव्यम् । पिन्वते वर्धते । अन्नसमृद्धिर्भवति । अस्मिन्पाद इळाशब्देनान्नमेवोच्यते । एतदन्नमस्मा अस्मिन्राजानि ऊर्जस्वत्क्षीरादिरसोपेतं शश्वत्सर्वदा तिष्ठति ।

तृतीयं पादमनूद्य व्याचष्टे—

तस्मै विशः स्वयमेवाऽऽनमन्त इति राष्ट्राणि वै विशो राष्ट्राण्येवैनं तत्स्वयमुपनमन्ति, इति ।

तस्मै पुरोहितयुक्ताय राज्ञे विशः प्रजाः स्वयमेव तदीयप्रयत्ननिरपेक्षा आनमन्त आनतिं प्राप्ता भवन्ति । अस्मिन्पादे विट्शब्देन राष्ट्राण्येव प्रजोपेता देशा एव विवक्षिताः । तादृशानि राष्ट्राण्येनं पुरोहितयुक्तं क्षत्रियं स्वयमेव प्राप्नुवन्ति ।

चतुर्थं पादमनूद्य व्याचष्टे—

यस्मिन्ब्रह्मा राजनि पूर्व एतीति पुरोहितमेवैतदाह, इति ।

यस्मिन्राजनि ब्रह्मा ब्राह्मणो हितमुपदिशन्पूर्व एति प्रथमतो गच्छति स इत्क्षेतीति पूर्वत्रान्वयः । अनेन पादेन पूर्व एतीत्येव पुरोहितमेव मन्त्रो ब्रूते ।

तृतीयस्या ऋचः प्रथमं पादमनूद्य व्याचष्टे—

अप्रतीतो जयति सं धनानीति राष्ट्राणि वै धनानि तान्यप्रतीतो जयति, इति ।

अयं पुरोहितयुक्तो राजाऽप्रतीतः प्रतिकूलैः शत्रुभिरितः प्राप्तः प्रतीतस्तद्विपरीतोऽप्रतीतः शत्रुप्राप्तिरहित एव भूत्वा धनोपेतानि राष्ट्राणि सम्यग्ज-

अप्रतीतो जयति सं धनानि०—४–५०–९ ।



CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


याति । अस्मिन्पादे धनशब्देन राष्ट्राण्येव विवक्षितानि । तानि स्वयं प्रतिपक्ष-रहित एव जयति ।

द्वितीयं पादमनूद्य व्याचष्टे—

प्रतिजन्यान्युत या सजन्येति सपत्ना वै द्विषन्तो भ्रातृव्या जन्यानि तानप्रतीतो जयति, इति।

जन्यानि शत्रूनप्रतीतः स्वयमप्रतिपक्षो जयतीत्यनुवर्तते। किंच या सेना सजन्या शत्रुसहिता तामपि जयति । अस्मिन्पादे जन्यशब्देन सपत्ना अभिधीयन्ते। तस्य व्याख्यानं द्विषन्तो वै भ्रातृव्या इति । तान्भ्रातृव्यान्प्रतिपक्षरहितो जयति ।

तृतीयं पादमनूद्य व्याचष्टे—

अवस्यवे यो वरिवः कृणोतीति यदाहावसीयसे योऽवसीयः करोतीत्येव तदाह, इति ।

अवस्यवे वसुरहिताय ब्राह्मणाय पुरोहिताय यो राजा वरिवः कृणोति परिचर्यां करोतीति मन्त्रो यदाह तत्रावसीयसेऽत्यन्तदरिद्राय धनरहिताय यो राजाऽवसीयोऽतिशयेन धनिकत्वं करोतीत्यनेनैव प्रकारेण मन्त्रो ब्रूते ।

चतुर्थं पादमनूद्य व्याचष्टे—

ब्रह्मणे राजा तमवन्ति देवा इति पुरोहितमेवैतदभिवदति ॥ २६ ॥ इति ।

ब्रह्मणे ब्राह्मणाय पूर्वोक्तेनावस्यव इति चतुर्थ्यन्तेनान्वेति । तया राजेति पदं य इत्यनेनान्वेति। तं तादृशं पुरोहितपूजकं राजानं देवा अवन्ति पालयन्ति। एतदेतेन ब्रह्मण इति पदेन पुरोहितमेव मन्त्रोऽभिवदति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चत्वारिंशाध्याये तृतीयः खण्डः ॥३॥ (२६) [१८४]।

---

अथ पौरोहित्यस्य योग्यायोग्यौ ब्राह्मणौ विविनक्ति—

यो ह वै त्रीन्पुरोहितांस्त्रीन्पुरोधातॄन्वेद स ब्राह्मणः पुरोहितः स वदेत पुरोधायै अग्निर्वाव पुरोहितः पृथिवी पुरोधाता वायुर्वाव पुरोहितोऽन्तरिक्षं पुरो-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri

धाताऽऽदित्यो वाव पुरोहितो द्यौः पुरोधातैष ह वै पुरोहितो य एवं वेदाथ स तिरोहितो य एवं न वेद, इति।

राज्ञा स्वहितोपदेशार्थं स्वस्य पुरोहितोऽवस्थापितः । तस्य पुरोहितस्य योऽयमवस्थापयिता राजा स पुरोधाता । देवतासु मध्ये त्रयः पुरोहिताः सन्ति । ये च त्रयः पुरोधातारस्तानुभयविधान्यो वेद तत्प्रतिपादकं मन्त्रं सर्वदाऽनुसंधत्त इत्यर्थः । स तादृशो ब्राह्मणः पुरोहितो भवितुं योग्यः । स च ब्राह्मणः पुरोधायै पौरोहित्यार्थमग्निरित्यादिमन्त्रं वदेज्जपेत् । अग्निवाय्वादित्याः पुरोहितरूपाः । पृथिव्यन्तरिक्षद्युलोकाः पुरोधातृरूपा इति मन्त्रार्थः । यः पुमानेवं वेद मन्त्रार्थमनुसंधत्त एष एव योग्यः पुरोहितः । अथ तद्वैलक्षण्येन यः पुमानेवं न वेद स पुरोहितः पौरोहित्यादन्तर्हितस्तदयोग्य इत्यर्थः ।

योग्यं पुरोहितं प्रशंसति—

तस्य राजा मित्रं भवति द्विषन्तमपबाधते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः, इति।

यस्यैवंविधत्वादिगुणयुक्तः पुरोहितो भवेत्तस्य राज्ञो देशान्तरवर्ती राजा मित्रं बन्धुर्भवति । तथा द्विषन्तमन्यं राजानं पुरोहितयुक्तो राजाऽपबाधते विनाशयति ।

पुनरपि द्वेधा प्रशंसति—

क्षत्रेण क्षत्रं जयति बलेन बलमश्नुते यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितस्तस्मै विशः संजानते संमुखा एकमनसो यस्यैवं विद्वान्ब्राह्मणो राष्ट्रगोपः पुरोहितः, इति ।

पूर्ववद्व्याख्येयम् ।

अथ राज्ञः पुरोहितवरणमन्त्रमाह—

भूर्भुवः स्वरोममोऽहमस्मि स त्वं स त्वमस्यमोऽहं द्यौरहं पृथिवी त्वं सामाहमृक्त्वं तावेह संवहावहै । पुराण्यस्मान्महाभयात् । तनूरसि तन्वं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


मे पाहि, इति ।

भूर्भुवः स्वरिति शब्दैर्लोकत्रयाभिमानिन्यो देवता उच्यन्ते । प्रणवेन परमात्मा । एते सर्वेऽनुगृह्णन्त्वित्यभिप्रायः । पुरोहितोऽहममो द्युलोकरूपोऽस्मि। त्वं तु स भूर्लोकरूपोऽसि। पुनरपि स त्वमस्यमोऽहमित्यभिधानं दाढर्यार्थम्। तस्यैव व्याख्यानं द्यौरहं पृथिवी त्वमिति । तथा सामस्वरूपोऽहमृक्स्वरूपस्त्वमिति। तावुभावावामिह राष्ट्रे आसद्यन्तात्पुराणि तदुपलक्षितग्रामांश्च संवहावहै सम्यग्वहनं पुरादिनिर्वाहं करवावहै । त्वं मम तनूः शरीरमसि। अतो मदीयां तन्वं शरीरमस्मादैहिकादामुष्मिकाच्च महाभयात्पाहि रक्ष ।

अनेन मन्त्रेण राज्ञा कृतो यः पुरोहितस्तस्य राजदत्तविष्टराभिमन्त्रणमाह-

या ओषधीः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत, इति।

सोमो राजा यासामोषधीनां ताः सोमराज्यः । बह्व्यो बहुजातीयाः। शतविचक्षणाः शतशाखाभिन्नाः तादृश्य ओषधयो याः सन्ति तास्तथाविधा ह ओषधयोऽस्मिन्नासने तृणादिनिर्मितकटादिरूपे मह्यं पुरोहिताय च्छिद्ररहितं शर्म दुःखस्पर्शरहितं सुखं यच्छत दत्त ।

अभिमन्त्रिते विष्टर उपवेशनमाह—

या ओषधीः सोमराज्ञीर्विष्ठिताः पृथिवीमनु ।
ता मह्यमस्मिन्नासनेऽच्छिद्रं शर्म यच्छत, इति ।

वंशदलादिनिर्मितविष्टरगता ओषधयः पृथिवीमनु विष्ठिता विशेषेण स्थापिताः । ता मह्यमित्यादि पूर्ववत् ।

पुरोहितस्य पाद्यार्थं समानीतानामपामभिमन्त्रणमन्त्रं दर्शयति—

अस्मिन्राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः, इति ।

हे आपः पुरोहितोऽहमस्मिन्राष्ट्रे श्रियमावेशयामि धनादिसंपदं संपादयामि। अतः कारणाद्देवीर्द्योतनात्मिका युष्मान्प्रति पश्यामि ।

ताभिरद्भिः पुरोहितस्य पादप्रक्षालनमन्त्रमाह—

दक्षिणं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं दधामि ।
सव्यं पादमवनेनिजेऽस्मिन्राष्ट्र इन्द्रियं वर्धयामि ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


पूर्वमन्यमपरमन्यं पादाववनेनिजे । देवा राष्ट्रस्य गुप्त्या अभयस्यावरुद्ध्यै, इति ।

मदीयं दक्षिणं पादमवनेनिजे प्रक्षालये । तेनास्मिन्राष्ट्रे प्राणिनामिन्द्रियपाटवहेतुं धनं संपादयामि । वामपादप्रक्षालनेन च तद्वर्धयामि । पूर्वं प्रथममन्यं दक्षिणं पादं शोधयित्वाऽपरं पश्चादन्यं वामं पादं शोधयामि । हे देवा एवंभूतौ पादौ प्रक्षालयामि । तच्च राष्ट्रस्य गुप्त्यै रक्षार्थमभयस्य चोरादिभयराहित्यस्यावरुद्ध्यै संपादनाय भवति ।

पादप्रक्षालनावशिष्टानामपामभिमन्त्रणमाह—

आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे ॥२७॥ इति ।

पादावनेजनीः पादशुद्धिकरणभूता इमा आपो मे मदीयं द्विषन्तं शत्रुं निःशेषेण दहन्तु ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाश ऐतरेयब्राह्मणभाष्ये चत्वारिंशाध्याये चतुर्थः खण्डः ॥४॥ (२७) [१८५] ।

---

अथोक्तपुरोहितसहितस्य शत्रुक्षयार्थं कंचित्प्रयोगमाह—

अथातो ब्रह्मणः परिमरो यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते, इति ।

अथ पौरोहित्यविधानानन्तरं यतः पुरोहितेन संपाद्यः शत्रुक्षयोऽपेक्षितोऽतः कारणाद्ब्रह्मणः परिमर एतन्नामकः कर्मविशेषोऽभिधीयत इति शेषः । ब्रह्मशब्देनात्र वायुर्विवक्षितः । अयं वै ब्रह्म योऽयं पवत इति वक्ष्यमाणत्वात् । तस्य वायोः परितो विद्युदादीनां मरणप्रकारः परिमर इत्युच्यते । तद्भावनारूपस्य कर्मविशेषस्य तदेव नामधेयम् । यः पुमान्ब्रह्मणः परिमरं यदा मनसा भावयत्येनं परित एतस्य परितोऽवस्थितासु सर्वासु दिक्षु द्वेषं कुर्वन्तः शत्रवो म्रियन्ते । इदानीमेनं द्विषन्तो जात्या शत्रवः सपत्नास्तेऽपि परितो म्रियन्ते । तस्मादेतद्वेदनं संपादनीयम् ।

वेदनस्वरूपमाह—

अयं वै ब्रह्म योऽयं पवते तमेताः पञ्च देवताः परि-

१ अ. एवमुमौ ।

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


म्रियन्ते विद्युद्वृष्टिश्चन्द्रमा आदित्योऽग्निः, इति।

योऽयं वायुः पवतेऽन्तरिक्षे संचरत्ययमेव ब्रह्मशब्देन विवक्षितः। एता विद्युदादयः पञ्च देवता वायुं परिम्रियन्ते। तस्य परितो विनाशं गच्छन्ति। तदेतदनुसंधेयस्वरूपम्।

तत्राऽऽदौ विद्युतो मृतिं प्रतिपादयति—

विद्युद्वै विद्युत्य वृष्टिमनुप्रविशति साऽन्तर्धीयते तां न निर्जानन्ति, इति।

येऽयं विद्युदस्ति सा विद्युत्य प्रकाशं कृत्वा पश्चाद्वृष्टिमनुप्रविशति। अत एव साऽन्तर्धीयतेऽस्माभिर्न दृश्यते। तां वृष्टौ प्रविष्टां विद्युतं क्व गता कुत्र स्थिता मृतेति मनुष्या निःशेषेण न जानन्ति।

तत्र दृष्टान्तमाह—

यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न- निर्जानन्ति, इति।

लोके कश्चित्पुरुषो यस्मिन्क्षणे म्रियते तस्मिन्नेव क्षणेऽन्यैर्न दृश्यते। ततो जना विचार्यापि क्व गतः कुत्रावस्थित इत्येनं पुरुषं मृतं न निर्जानन्ति। यद्यपि कुणपं पश्यन्ति तथाऽपि जीवात्मानं न जानन्त्येव। तथैव विद्युद्विनाश इति द्रष्टव्यम्।

यथोक्तध्यानवतो जप्यमन्त्रमाह—

स ब्रूयाद्विद्युतो मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति, इति।

विद्युतो मरणे सत्युपासको द्विषदित्यादिकं मन्त्रं ब्रूयात्। तस्यायमर्थः— इयं विद्युदिव मदीयः शत्रुर्म्रियतां स पुनः-केनापि न दृश्यताम्। अतो विचार्यापि क्व गतः क्वाऽऽस्त इति तं शत्रुं तदीया बन्धवो निःशेषेण मा जानन्त्विति।

जपफलं दर्शयति—

क्षिप्रं हैवैनं न निर्जानन्ति, इति।

शीघ्रमेव मृतमेनं शत्रुं तदीया बन्धवो नैव जानन्ति।

विद्युत इव वृष्टेर्विनाशं दर्शयति—

वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्रविशति साऽन्तर्धीयते तां न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


न निर्जानन्ति स ब्रूयाद्वृष्टेर्मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति, इति।

येयं वृष्टिरस्ति सेयं वृष्ट्वा भूमौ जलं पातयित्वा स्वयमाप्यमण्डलरूपं चन्द्रमसमनुप्रविशति । अन्यत्पूर्ववद्योज्यम् ।

चन्द्रमसो विनाशं दर्शयति—

चन्द्रमा वा अमावास्यायामादित्यमनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयाच्चन्द्रमसो मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति, इति।

अयं चन्द्रमा अमावास्यायां तिथौ साकल्येनाऽऽदित्यमनुप्रविशति । अन्यत्पूर्ववत् ।

आदित्यस्य विनाशं दर्शयति—

आदित्यो वा अस्तं यन्नग्निमनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयादादित्यस्य मरणे द्विषन्मे म्रियतां सोऽन्तर्धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति, इति।

आदित्यो यदाऽस्तमेति तदाऽयमग्निमनुप्रविशति । तदेतत्तैत्तिरीयैः समाम्नातम्—" अग्निं वा आदित्यः सायं प्रविशति । तस्मादग्निर्दूरान्नक्तं ददृशे । उभे हिं तेजसी संपद्येते " इति । अन्यत्पूर्ववत् ।

अग्नेर्विनाशं दर्शयति—

अग्निर्वा उद्वान्वायुमनुप्रविशति सोऽन्तर्धीयते तं न निर्जानन्ति यदा वै म्रियतेऽथान्तर्धीयतेऽथैनं न निर्जानन्ति स ब्रूयादग्नेर्मरणे द्विषन्मे म्रियतां सोऽन्त-

CC-0.Panini Kanya Maha Vidyalaya Collection.

Digitized by Arya Samaj Foundation Chennai and eGangotri


धीयतां तं मा निर्ज्ञासिषुरिति क्षिप्रं हैवैनं न निर्जानन्ति, इति ।

उद्वानन्निरुद्वानमुपशमनं प्राप्नुवन्नग्निर्वायुमनुप्रविशति । वायुबाहुल्ये दीपविनाशदर्शनात् । अन्यत्पूर्ववत् ।

वायोः परितो म्रियमाणानां देवतानां पुनर्वायोरेव जन्म दर्शयति—

ता वा एता देवता अत एव पुनर्जायन्ते, इति ।

वायोर्जगत्कारणभूतसूत्रात्मरूपत्वाज्जगदेकदेशानां विद्युदादीनां जन्मविनाशौ वाय्वधीनौ ।

पूर्वं विद्युदादीनामग्न्यन्तानां क्रमेण विनाशो दर्शितः । इदानीमग्न्यादीनां विद्युदन्तानां क्रमेणोत्पत्तिं विवक्षुरग्नेरुत्पत्तिं दर्शयति–

वायोरग्निर्जायते प्राणाद्धि बलान्मथ्यमानोऽग्निर्जायते तं दृष्ट्वा ब्रूयादग्निर्जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिघ्यत्वित्यतो हैव पराङ्प्रजिघ्यति, इति ।

योऽयमग्निः सोऽयं वायोर्जायते । कथमेतदिति तदुच्यते । प्राणाद्बलात्प्राणवायुसंबन्धिशक्तिवशान्मथ्यमानोऽयमग्निरधिकत्वेन जायते । तं जायमानमग्निं दृष्ट्वा सोऽयमग्न्यादिजन्मध्याताऽग्निरित्यादिकं मन्त्रं जपेत् । अयमग्निर्वायोः सकाशात्सुखेन जायताम् । मे द्विषन्मदीयः शत्रुर्मा जनि मोत्पद्यताम् । अत एव मत्तः पराङ्प्रजिघ्यतु विमुखो भूत्वा प्रकर्षेण गच्छतु । इत्येतस्मिन्मन्त्रे जपिते सत्यतो जपितुः सकाशाच्छत्रुर्विमुखो भूत्वा दूरे गच्छति ।

आदित्यस्योत्पत्तिं दर्शयति—

अग्नेर्वा आदित्यो जायते तं दृष्ट्वा ब्रूयादादित्यो जायतां मा मे द्विषञ्जन्यत एव पराङ्प्रजिघ्यत्वित्यतो हैव पराङ्प्रजिघ्यति, इति ।

रात्रावग्निं प्रविष्ट आदित्यः परेद्युरग्नेर्जायते । अत एवाहन्यग्निस्तेजोरहितः। सर्योऽधिकतेजा भासते । अन्यत्पूर्ववत् ।

चन्द्रमस उत्पत्तिं दर्शयति—

आदित्याद्वै चन्द्रमा जायते तं दृष्ट्वा ब्रूयाच्च-

CC-0.Panini Kanya Maha Vidyalaya Collection.

